MADRAS UNIVERSITY SANSKRIT SERIES, No. 3, Part I.

# BṚHATĪ

OF

# PRABHĀKARA MIŚRA

[TARKAPĀDA]

EDITED BY

S. K. RAMANATHA SASTRI

MADRAS UNIVERSITY SANSKRIT SERIES, No. 3, Part I.




# BṚHATĪ

OF

# PRABHĀKARA MIŚRA

[ON THE MĪMĀṀSĀSŪTRABHĀṢYA OF ŚABARASVĀMIN]

WITH

THE ṚJUVIMALĀPAÑCIKĀ OF ŚĀLIKANĀTHA

[TARKAPĀDA]

EDITED BY

S. K. RAMANATHA SASTRI,

Junior Lecturer in Sanskrit

University of Madras




THE UNIVERSITY OF MADRAS

Price Rs. 5/-] 1934 [Foreign 8s.

मद्रपुरीयविश्वविद्यालयग्रन्थावलिः

ग्रन्थाङ्कः ३



[प्रथमो भागः]

# बृहती
# प्रभाकरमिश्रप्रणीता
## [शाबरभाष्यव्याख्या]

शालिकनाथमिश्रप्रणीत-ऋजुविमलया पञ्चिकया सहिता

[तर्कपादान्ता]

संपादकः

शे. कृ. रामनाथशास्त्री

मद्रपुरीयविश्वविद्यालयः

१९३४



## FOREWORD.

It is a matter of great privilege to me to introduce this edition of the Bṛhatī of Prabhākara with its commentary by Śālikanātha called the Ṛjuvimalāpañcikā, for the first Pāda of the first Adhyāya, which is called the Tarkapāda. There is only one manuscript of the work available, and even that is incomplete, containing as it does only the first six Adhyāyas. The work is now published for the first time. The Chowkhamba Series has also taken up the publication of the work and a small portion has been issued. This edition is not only the first publication of the Bṛhatī, but it is also the first publication of any work of Prabhākara. In this first part, the text of the Bṛhatī is published with the Ṛjuvimalāpañcikā. The second part will contain the Bhāṣyapariśiṣṭa of Śālikanātha, an Introduction to the Prāhhākaramīmāṁsā by Mahāmahopādhyāya Prof. S. Kuppuswami Sastri, M.A., I.E.S., and some appendices.

University of Madras,<br>23rd, Nov., 1933.

C. Kunhan Raja<br>*Reader in Sanskrit.*

## PREFACE

The Bṛhatī of Prabhākara Miśra with its commentary, the Ṛjuvimalāpañcikā, now issued, forms the first of a series of works on the Prābhākara system of Pūrva-Mīmāṁsā that will be published under the auspices of the University of Madras. The task of the editing of the Bhāṣya with the commentary of Prabhākara and the super-commentary of Śālikanātha was a trying and most difficult one. It was even greater in the case of the Bhāṣyapariśiṣṭa of Śālikanātha, which will be published in the second part of this volume. In many places, I had to differ from the readings found in the manuscripts of the Bṛhatī and the Bhāṣyapariśiṣṭa and consequently I have printed what seemed to me the proper text of the two works. In the hope that the reader may differ from my reading and may perhaps suggest a better reading at times, I thought it proper to incorporate into this edition an exact reproduction of the texts of the Bṛhatī and the Bhāṣyapariśiṣṭa as found in the manuscripts available to me.

The following manuscripts were used in this edition:—

*Bṛhatī.*

The copy of Bṛhatī in the Oriental Manuscripts Library, Madras. This is the only mannscript available. The original of this belongs to the collection of the famous Kavīndrācārya and is now deposited in the Asiatic Society of Bengal.

*Ṛjuvimalāpañcikā*

Four copies were used in the edition of the Ṛjuvimalāpañcikā and they are:—

क. This belongs to the Government Oriental Manuscripts Library, Madras. The manuscript is fairly correct. There is a big omission in the opening portion.

ख. This copy belongs to the Government Oriental Library, Mysore. This is wrongly named Mañjumālā in their catalogue. This manuscript ending with the Tarkapāda was of considerable help in the opening and closing portions of the work.

ग. This copy belongs to Mahāmahopādhyāya Dr. Ganganath Jha of the Allahabad University. This ends with the Tarkapāda, and is full of mistakes.

The fourth manuscript that was used, is deposited in the Adyar Library, Madras, and is the original palm-leaf copy of the manuscript designated क. Hence no separate symbol was used to indicate this manuscript. I take this opportunity to thank the Curator, Government Oriental Manuscripts Library, Madras, Dr. Ganganath Jha, and the Hon. Director of the Adyar Library for having allowed me the use of their manuscripts for a considerable length of time.

The work of bringing out an edition of the Bṛhatī on the basis of the wholly inadequate manuscript material, described above, happened at every step to involve difficulties of several kinds. But all these difficulties were overcome with the aid of Mahāmahopādhyāya Vidyāvācaspati Darśanakalānidhi Kulapati Brahmaśrī S. Kuppuswami Sastriar, M.A., I.E.S., Professor of Sanskrit and Comparative Philology, Presidency College, Madras and Curator, Government Oriental Mss. Library, Madras, without whose ungrudging and willing help, I dare say, an edition like the present one would have been next to impossibility. It may appear presumptuous on my part to express my gratitude for the help he has rendered. It is Sanskrit scholarship that must be grateful to him for having made it possible for me to bring to light this difficult old and rare work, forming the basis of the almost forgotten system of Prābhākara-Mīmāṁsā.

The second part of this work consisting of the Bhāṣyapariśiṣṭa, the text of the manuscript of these works, readings in the Bhāṣya etc., will be published ere long, with a detailed introduction on Prabhākara and his system by Mahāmahopādhyāya S. Kuppuswami Sastriar.

S. K. Ramanatha Sastri.

# अवतरणिका

सर्वदर्शनसारसमुद्धारसमासादनीये साधारणे तत्त्वदर्शने प्रवणमधुनातनं दार्शनिकलोकमारिराधयिषुणा प्रलुप्तप्रायप्रचारे गभीरे प्राभाकरे दर्शने कृतपदानां कृतिनां कृतीः प्रसाधयितुमध्यवस्यता मया चिरादियमद्य प्रभाकरमिश्रविरचिता तर्कपादान्ता बृहती समवतार्यते पुरः प्रेक्षावताम् । मूलभूतसूत्रभाष्याभ्यां व्याख्यया पञ्चिकया चैनामेवंरूपेण संपादयितुमभून्मे भगीरथप्रयत्नः । इतोऽप्यधिकः परिक्लेशः समजनि प्रभाकरदर्शनानुसारेण भाष्याक्षरयोजकं शालिकनाथमिश्रप्रणीतं भाष्यपरिशिष्टाख्यं भाष्यव्याख्यानं परिशोधयितुम् । तदेतत्परिशोधितं भाष्यपरिशिष्टं समातृकं बृहतीमातृका प्रास्ताविकं चेत्यादिकं सर्वमस्या बृहत्या द्वितीयसंपुटेऽन्तर्भविष्यति यदचिरादित एवाविर्भविष्यति । बहुग्रन्थपर्यालोचनेन समीकृतयोरप्यनयोर्ग्रन्थयोः क्वाप्यसमीचीनः समीचीनतरो वा पाठः प्रतिभायात् परीक्षकाणामिति तन्मातृकाप्रदर्शने निर्भरः समादृतोऽस्माभिः । विलुप्तविशकलविकलत्विमुग्धलिपिकाभ्यामाभ्यां मातृकाभ्यां भिद्येते इव हि तौ परिशोधितौ ग्रन्थौ । पञ्चिकायास्तु चतस्रो मातृकाः संप्राप्ताः । अतस्तत्रैव तत्पाठान्तरादिकमधस्तादेव विनिवेशितम् ।

आसु बृहतीपरिशिष्टमातृके मद्राधिराज्यप्राच्यपुस्तकभाण्डागारीये, पञ्चिकामातृका च 'क' संज्ञिता । इयं प्रायः शुद्धा प्रथमाधिकरणे विलुप्तप्राया च । द्वितीया श्रीयुतमहामहोपाध्याय गङ्गानाथमिश्रैरारम्भप्रभृत्यस्मदायत्तीकृता 'ग' संज्ञिता । इयं नातिशुद्धा । तृतीया मैसूर् महाराजभाण्डागारीया 'ख' संज्ञिता तदीयपुस्तकपट्टिकायाम् 'मञ्जुमाला' इत्युट्टङ्किता । इयमाद्यन्तभागयोरतीवोपकृतवती । तुरीया तु 'क' संज्ञिताया मातृकाभूता अडयार् पुस्तकभाण्डागाराधिकृतैरद्यत्व एव सङ्कलिता । इयं 'क' संज्ञिताया अनन्येति न संज्ञान्तरेण व्यवहृता । उदाराशयैस्तत्तदधिकारिभिः सदयं मातृकाप्रदानेनोपकृतवद्भिर्नूनमनुगृहीतोऽस्मि, कृतार्थीकृतोऽस्मि इति सप्रश्रयं निवेदयामि । प्रकृतकार्याध्यवसायमारभ्यैव सोत्साहः श्रीमान् सि. कुन्हन् राजमहाशयः स्वयं सहाय इति सोऽप्यस्य सुकृतस्य भाजनमेव ।

इयत्या सामग्र्या तत्संपादने भीतभीतेनापि समुत्सुकेन मया द्रढीयान् कश्चन करावलम्बः समासादितः, येन आ मुखसन्धि आ च निर्वाहसन्धि निरभिसन्धिकं प्रयस्य सहकुर्वता निर्वृत्तमिदं गुरुकार्यमेवंरूपम् । तमिमं महामहोपाध्यादिबिरुदभूषणं श्रीमन्तं कुप्पुस्वामिशास्त्रिवर्यं मादृशा मितंपचानमतयो नाभिनन्दितुमर्हाः, अपि तु तादृशोऽन्तर्वाणिजनसमाज इति तत्रैव स भारः समापतति । अपि च "महात्मनां श्रेयसि न ह्यलंमतिः" इत्यभियुक्तोक्त्यनुरूपमयमेव किमपि प्रास्ताविकमपि प्रकरिष्यतीति वक्तव्यविशेषस्थानमनन्तरसम्पुटं मन्वानस्य मे किमत्रान्यदवशिष्यते ? तदपि सुभाषितमिह समुचितमुपहरामि—

'सूर्यं यजन्ति दीपैः समुद्रमद्भिर्वसन्तमपि कुसुमैः ।
अर्चामोऽत्रभवन्तं वयमपि वाचस्पतिं वाग्भिः ॥'

इति

शे· कृ· रामनाथशास्त्री



## मीमांसादर्शनम्

प्रथमेऽध्याये प्रथमः पादः

# अथातो धर्मजिज्ञासा ॥ १ ॥

शावरभाष्यम्

लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि

बृहती

प्रभाकरमिश्रविरचिता

(शाबरभाष्यटीका)

॥ अथातो धर्मजिज्ञासा ॥

लोके—इत्यादिभाष्यस्य "अथातः"—इत्येतस्मिन् पदद्वयेऽलौकि-

ऋजुविमला पञ्चिका

शालिकनाथमिश्रकृता

(बृहतीव्याख्या)

सृष्टाविद्यानिशाध्वंसिनिबन्धमयवासरम्[1] ।
उज्जासितजगज्जाड्यं नमस्यामः प्रभाकरम् ॥ १ ॥
प्रभाकरमयीं दृष्टिं दक्षिणां दधतं सदा ।
वामदर्शनतापन्नचन्द्रं वन्देऽपराजितम् ॥ २ ॥
प्रभाकरगुरोर्भावमतिगम्भीरभाषिणः[2] ।
अञ्जसा व्यञ्जयिष्यन्ती पञ्चिकां[3] क्रियते मया ॥ ३ ॥
उपन्यासनिरासाभ्यां व्यासेनैषा विदूषिता ।
व्याख्या प्राचां निबन्धॄणामिति नाहमदूदुषम् ॥ ४ ॥

लोक इत्यादिभाष्यं यत्नगौरवं प्रसज्येतेत्येवमन्तमथशब्ददूषणार्थमौचित्या-नुभाषणपरमिति वार्तिककारेण व्याख्यातम् । तत्तु मन्दप्रयोजनमिति मत्वा टीकाकारः प्रयोजनं दर्शयति—लोक इत्यादिभाष्यस्येत्यादिना । सर्वसूत्रस्थसर्वपदविषयं

---

१. सृष्टाज्ञाननिशा- ग. न्यायकोशारम्भे दृश्यमानः श्लोकपाठोऽत्रादृतः । "उज्जासित" इत्यत्र क्वचित् "उज्ज्ञासित" इति दृश्यते ; स प्रामादिक इति भाति ।

२. भावं मित- ग.

३. पञ्जिका. ग.

भाष्यम्

सति संभवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम् ;

बृहती

कार्थाशङ्कानिवृत्तिः प्रयोजनम् । कुत एतत् ? स्वाध्यायाध्ययनविधेरविवक्षितार्थत्वनिराकरणात् । कथं पुनरविवक्षाशङ्का ? स्वाध्यायाध्ययनविधेरधिकाराश्रवणात्, आचार्यकरणविधिप्रयोज्यत्वाच्च । कथं पुनरन्यस्य विधेरन्येन प्रयुक्तिः ? प्रयाजादिवदिति चेन्न; तत्र स्वाधिकाराभेदाद्युक्तम् ।

पञ्चिका

चेदमुच्यते ; तेन बहुवचनाविरोधः । प्रवृ[1]त्तत्वाद्विप्रतिपन्नत्वाच्चाथातःशब्दयोरेवालौकिकार्थाशङ्कानिवृत्तिः प्रयोजनम् । **सति संभव इति** । लौकिकार्थसंभव इत्यर्थः । **कुत एतदिति** । लौकिकार्थसंभवे कथमलौकिकार्थाशङ्कायाः[2] संभवः? असंभवश्चेत् कथमिदं प्रयोजनं सिध्यति? उत्तरम्—**स्वा[3]ध्यायाध्ययनेति** । न्यायाभासादसंभवः; तन्निराकरणेन तु संभव एव प्रतिपाद्यते । **कथं पुनरविवक्षाशङ्केति** । दृष्टपुरुषोपयोगिकर्मावबोधहान्या स्वर्गोऽर्थवादस्थं वा फलं न युक्तमिति भावः । इदानीं पूर्वपक्षं कर्तुं संशयबीजमुपन्यस्यति—**स्वाध्यायाध्ययनविधेरधिकाराश्रवणादिति** । नाध्यापनाधिकारोऽध्ययनेऽपि श्रूयते, अनङ्गत्वादिति । **आचार्यकरणविधिप्रयोज्यत्वाच्चेति** । तेन[4] प्रयुक्तता प्रथमोपनिपातिनी ; तत्सिद्धिरेवाध्ययनविधेः प्रयोजनम्, न तु पश्चाद्भाविकर्मावबोध इत्याशयः । **कथं पुनरन्यस्य [5]विधेरन्येन प्रयुक्तिरिति** । यदि तावदङ्गता नास्ति, कथं विध्यन्तरस्य विध्यन्तरेण प्रयुक्तिः? [6]**प्रयाजादिवदिति चेदिति** । प्रयाजादिविधिवदिति चेदित्यर्थः । यस्मात्तत्राधिकारान्तराभेदात् प्रयुक्तिर्युक्ता ; साक्षाच्छ्रुततत्पुरुषसंबन्धनिर्वाहितसाध्यभावाधिकारविधिसंनिधौ निरधिकारेषु प्रयाजादिषु प्रथमं न विधयः साध्यतया भवन्ति ; किन्तु कर्मस्वरूपाण्येवाधिकारासिद्ध्यर्थानि । तदर्थता तु क्षणिकानां स्वरूपतो न संभव-

---

१. प्रवृत्त- ग.
२. -शङ्का असम्भवश्चेत्. ग.
३. वेदाध्ययन- क.
४. तत्प्रयुक्तता. ग.
५. विधेरिति. ग.
६. प्रयाजादिवदिति चेदित्यर्थः ग.

बृहती

अत्राप्यधिकारांशो न भिद्यत इति चेन्न, अङ्गाङ्गिभावाभावात् । कथं पुनरङ्गता नास्ति, प्रयोज्यत्वं च ? न प्रयुक्तिरङ्गत्वे हेतुः । कस्तर्हि ? विनियोगः । ननु विनियोगः पारार्थ्ये कारणम्; विनियुक्तस्यैव ह्यङ्गत्वं दर्शयति "न चाविहितमङ्गं भवति," "फलवत्सन्निधावफलं तदङ्गम्" इति च । मैवम्; पारार्थ्यमेव ह्यङ्गतोच्यते; परस्योत्पत्तौ कार्ये वा यदनुग्रहाय वर्तते, तत् परार्थमित्युच्यते; तदेव चाङ्गम् । तस्माद्विनियोगकृतमेवाङ्गत्वम्, न प्रयुक्तिकृतम् । कथं पुनरेकत्वादीनामङ्गत्वम्? उक्तं हि पशोरुपादानशेषत्वम्; प्रयुक्तिकृतं च तत् । तदपि नैव प्रयुक्तिकृतम् । किं तर्हि? विनियोगकृतमेव । ननु विभक्तिभिः प्रातिपदिकार्थो विनियुज्यते, न पुनरेकत्वादयो विभक्त्यर्थाः ।

पञ्चिका

तीति पुनर्विधयः साध्यतया विक्रियन्ते ; तेनाङ्गभूता ह्येते विधय इति युक्ता भेदेऽपि प्रयुक्तिः । अत्रापीति । [1]आचार्यकरणविध्यध्ययनविध्योरधिकारांशो न भिद्यत इति चेत्, न । अङ्गाङ्गिभावाभावादिति । श्रुत्यादयो ह्यङ्गत्वख्यापकाः ; तदभावेऽनङ्ग[2]स्यासंबद्धस्याक्षेपो न युक्तः । एवं तावदङ्गता नास्तीति गृहीत्वैव प्रयुक्तिर्दूषिता । इदानीं प्रयुक्तिमङ्गीकृत्यानङ्गत्वं दूषयति— कथं पुनरङ्गता नास्ति प्रयोज्यत्वं चेति । न प्रयुक्तिरङ्गत्वे हेतुरिति । अनन्तरं चोद्यं परिहरति । नन्विति । पारार्थ्याङ्गत्वयोर्भेदाद्विधिव्यापारमात्रादुपादानरूपादङ्गतामिच्छतश्चोद्यम् । मैवमिति । ऐक्येऽपि परिहारः । परस्योत्पत्ताविति । यथा द्रव्यदेवतादिकम् । कार्य इति । यथा प्रयाजादयः स्वामिसंस्काराश्च । कथं तर्हि पश्वेकत्वादीनामिति । उपादानमात्रादप्यङ्गतास्तीति मन्यते । तदपि नैव प्रयुक्तिकृतमिति । अत्रायमाशयः—विभक्त्या तावत्प्रातिपदिकार्थो विनियुज्यते । [3]विनियुक्तश्चासावुपादातव्यः । न चानवच्छिन्नस्योपादानं संभवति । तेनावच्छेदकाकाङ्क्षायां [4]गृहीततद्विशेषणैकत्वादिकमेव तदवच्छेदकं गृह्यते । तेन यत्पूर्वमविनियुक्ते प्रातिपदिकार्थमात्रे संख्यादिकमासीत्, तदुपादानेन विनियुक्त-

---

१. अचार्यविध्यध्ययन ग.　　३. Omits "च" ग.
२. -ङ्गसम्बन्धस्या- ग.　　४. गृहीततताविशेषण- ग.

बृहती

सत्यम् न विनियुज्यन्ते; न पुनर्विनियुक्तोपादानेऽपि नावगम्यन्ते विभक्तिभिः। विनियुक्तस्यैकत्वादयो विभक्तिभिरभिधीयन्ते, असंबद्धस्यानवगमात्। अत एव चैकवाक्यत्वं संख्याविधानस्य विभक्तिविधानस्य च। तस्माद्युक्तमुपादानशेषत्वमेकत्वादेः। स्वाध्यायाध्ययनं तु न विनियुक्तम्, नापि विनियुक्तस्थमवगम्यते। अतः प्रयोज्यम्, न चाङ्गमिति सिद्धम्। कथं पुनरविनियुक्तमसंबद्धमेवाक्षिप्यते? नैव विनियोग आक्षेपे हेतुः। किं तर्हि? कार्यम्। विनियुक्तस्थमपि कार्येणैवाक्षिप्यते। तात्स्थ्यं त्वङ्गत्वे हेतुः। यत्पुनरिदमुक्तम्—"न चाविहितमङ्गं भवति," "फल-

पञ्चिका

पश्वादिस्थं क्रियते। विनियोगस्तु तस्य तात्स्थ्येनैव यथा पर्णत्वादयः क्रतुविनियुक्तजुह्वादिद्वारेण विनियुक्तस्थतया क्रत्वङ्गानि। विनियुक्तस्थता तु तत्र जुह्वादीनामव्यभिचरितक्रतुसंबन्धात्तद्धितश्रुत्यैव; इह तूपादानत इति विशेषः। **विनियुक्तस्यैवैकत्वादयो विभक्तिभिरभिधीयन्त** इति। यद्वस्तु श्रुत्यादिविनियुक्तम्, तस्येत्यर्थः। **अत एव चैकवाक्यत्वं संख्याविधानस्य विभक्तिविधानस्य चेति**। उपादानव्यापारवशेन यतः कारकस्था एवैकत्वादयो भवन्ति, ततोऽयमर्थः परिनिष्पन्नो भवति—करणादौ कारके एकत्वादिषु तृतीयाद्येकवचनादीनि भवन्तीति। **कथं पुनरविनियुक्तमसंबद्धमेवेति**। प्रथमं चोद्यं परिहर्तुं स्मार्यते। **नैव विनियोग आक्षेपे हेतुः। किं तर्हि? कार्यमिति**। अत्रायं भावः—आचार्यकरणविधावुपनयनमात्मनेपदश्रुत्या[1] दूरस्थमप्यङ्गतया समर्पितम्। तच्च स्वभावत उपनेयनिष्ठमुपनेयासत्तिद्वारेणोपकारकम्। तत्रासाद्यमानश्च माणवको यद्यकिंचित्करस्तदा तदासादनमनुपयोगि। आसादनानुपयोगे चोपनयनमप्यनुपयोगि। ततश्चासाद्यमानस्य कर्मापेक्षायामुपनयनप्रक्रमादुपनीतकर्तृकमध्ययनं श्रूयमाणं तत्कर्मतया[2] विज्ञायते। तेनोपनयनं स्वाङ्गभूतमाक्षिपन्नाचार्यकरणविधिरध्ययनमाक्षिपति। तदाक्षिप्ताध्ययनानुष्ठानसिद्धश्चाध्ययनविधिः स्वसिद्ध्यर्थं नाधिकारान्तरमपेक्षते। **यत्पुनरिदमुक्तम्—न चाविहितमङ्गं भवति** इति। यदङ्गं श्रुत्यादिभिर्नियोगव्यापारासंवलितैः, तस्यैव यत्कार्यं प्रत्यङ्गत्वम्, तन्नियोगव्यापारनिबन्धनमिति

---

१. यनं पदश्रुत्या ग  २ कर्मप्रक्रमा- ग

बृहती

वत्सन्निधावफलं तदङ्गम्"—इति च, कार्येऽङ्गत्वप्रतिपत्त्यर्थोऽयं ग्रन्थः; न पुनरङ्गत्वप्रतिपत्त्यर्थः । अस्ति हि कामस्याधिकारे प्रयोज्यत्वम्, न चाङ्गता । तस्मादन्यत् प्रयोज्यत्वम्, अन्या चाङ्गता । तथा चोह्यपदानामस्ति प्रयोज्यत्वम्, न शेषता; मन्त्रस्य हि विनियोगेन शेषतोच्यते, ऊह्यपदानाममन्त्रत्वात् । तस्मात् प्रयोज्यत्वादनङ्गत्वाच्च स्वाध्यायाध्ययनस्य भवति संशयः—किं प्रयोज्यत्वादेककार्यत्वम्, उतानङ्गत्वाद्भिन्नकार्यत्वम् —इति । अत्र पूर्वपक्षवादी प्रयोज्यत्वादेककार्यतां मन्वानोऽविवक्षां मेने । तन्निराकृतय इदम् "अथातः"—इति पदद्वयमङ्गीकृतवान् सूत्रकारः । न चानेन पदद्वयेनायमर्थो निराकृत इति पाठादेवावगम्यते, पूर्वमनुपन्यस्तत्वादस्यार्थस्य । अतो भवत्यलौकिकार्थाशङ्का कस्यचित् । अतोऽन्तर्णीतपूर्वपक्षनिरसनसमर्थं पदद्वयं मन्वानो भाष्यकार आह—"लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति सम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम्;

पञ्चिका

दर्शयति, न पुनरङ्गत्वमेव विनियोगानपेक्षं नियोगमात्रकृतमिति । विधेश्च व्यापारो ग्राहकलक्षणोऽन्विताभिधानसिद्धः । न चाध्ययनेनाचार्यकरणविधेरन्विताभिधानम्, स्वपदश्रुत्याध्ययनविधिनैवान्विताभिधानसिद्धेः । अस्ति हि कामस्येति । काम्यस्येत्यर्थः । तस्मादुभयं सिद्धं प्रयोज्यत्वमनङ्गत्वं चेति । तदाह—प्रयोज्यत्वादनङ्गत्वाच्चेति । किं प्रयोज्यत्वादेककार्यत्वमिति । प्रथमोपनिपातादाचार्यकरणविधिरेव प्रयोजकमित्यर्थः । उतानङ्गत्वाद्भिन्नकार्यतेति । पश्चाद्भाव्यपि तत्कर्तृसमवेतं प्रयोजनं न त्यक्तुं युक्तम्; अध्यापनाङ्गत्वे[1] पुरुषान्तरगतं प्रयोजनं न शक्यते वक्तुम्, विनियुक्तविनियोगविरोधादित्यर्थः । न चानेनेति । यदि पूर्वपक्षमुक्त्वा पदद्वयं पठितं स्यात्, तर्ह्यलौकिकार्थाशङ्का न स्यात्; पूर्वपक्षनिराकरणार्थमेव लौकिकार्थमिदमिति ज्ञायेत, अन्यथा पूर्वपक्षेणासंबन्धात्; अनुपन्यस्ते तु पूर्वपक्षेऽलौकिकार्थाशङ्काप्यस्तीत्यन्तर्हितपूर्वपक्षनिराकरणायेदमुक्तमिति न्यायबलात् मन्वानो[3] भाष्यकार

---

१. -ङ्गविहितपुरुषा- ग.
२. अन्तःस्थित- ग.
३. मन्यमानो· ग-

भाष्यम्

नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा। एवं वेदवाक्यान्येवैभिर्व्याख्यायन्ते ; इतरथा वेदवाक्यानि व्याख्येयानि स्वपदार्थाश्च व्याख्येया इति यत्नगौरवं प्रसज्येत । तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः; न चेह किञ्चिद्वृत्तमुपलभ्यते । भवितव्यं तु तेन,

बृहती

नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा''—इति ।

किञ्च, न कवेलमस्यालौकिकार्थाशङ्कानिरासः ; अवगम्यते, परिभाषादियत्नगौरवाकरणात् ॥

"तत्र लोकेऽयमथशब्दो वृत्तादनतन्तरस्य प्रक्रियार्थो दृष्टः; न चेह किञ्चिद्वृत्तमुपलभ्यते" –इत्यलौकिकाशङ्कां प्रकटयति । "भवितव्यं तु तेन''—इति न्यायानपेततामाशङ्कायाः कथयति । सिध्यर्थं हि प्रकरणाद्यन्वेष्यम्; श्रुतस्य ह्ययथार्थत्वे न श्रुतत्वमेव करणम् । तच्च प्रकरणादिकं

पञ्चिका

आहेति । किं च न केवलमस्येति । "एवं वेदवाक्यान्येव'' इति भाष्यं व्यचष्टे । अस्यार्थः—एवं लौकिकार्थग्रहणे वेदवाक्यान्येव केवलानि व्याख्यायन्ते, इतरथा अलौकिकार्थत्वे वेदवाक्यान्येव[1] न व्याख्येयानि, पारिभाषिकालौकिकानि च स्वसूत्रपदानि व्याख्येयानि ; तद्यत्नगौरवं प्रसज्येत ; न च तत्प्रसक्तम्[2] । अतोऽवगच्छामो[3] लौकिकार्थान्येव पदानीति । आलौकिकार्थाशङ्कां प्रकटयतीति । तत्र लोक इत्यादिभाष्ये[4] पूर्वमनुपवर्णितोऽयं पूर्वपक्ष आसीत् । तस्य स्फुटीकरणार्थमिदमिति दर्शयति । श्रुतसिद्ध्यर्थं हि प्रकरणाद्यन्वेष्यम्, कस्मात्? श्रुतस्य ह्ययथार्थत्वे न श्रुतत्वमेव कारणमिति । यत्र हि विषये श्रुतस्यापि शब्दस्याय-

---

१. -वाक्यानि व्याख्येयानि. ग.
२. न च प्रसक्तम्. ग.
३. अतो मत्वाह लौ- ग.
४. -भाष्यानुपदर्शितोऽयम् . ग.

भाष्यम्

यस्मिन् सत्यनन्तरं धर्मजिज्ञासावकल्पते ; तथा हि प्रसिद्धपदार्थकः स कल्पितो भवति । तत्तु वेदाध्ययनम् । तस्मिन् हि सति सावकल्पते ; नैतदेवम् । अन्यस्यापि

बृहती

सर्वमत्रास्तीति—"तत्तु वेदाध्ययनम्"—इत्युक्तम् । "तस्मिन् हि सति सावकल्पते"—इतीदानीमविवक्षितार्थस्वाध्यायाध्ययनवाद्याह । इति तावत् भवान् सकलतन्त्रार्थपर्यालोचनया वेदाध्ययनस्य वृत्तत्वं मन्यते ; तदयुक्तम्, स्वाध्यायाध्ययनविधेराचार्यकरणविधिप्रयुक्तत्वादविवक्षितस्वार्थतैवावगम्यते । अथादृष्टार्थमेवेदं सूत्रम्, "वेदमधीत्य, अनन्तरं धर्मजिज्ञासा" इति, एवं तर्ह्यर्थद्वयविधानं प्राप्नोति—वेदमधीत्य, अनन्तरं चेति । यदि च वेदमधीत्य—इत्युच्यते, अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासाऽवकल्पते ; अथानन्तर्यं विधीयते, प्रागपि वेदाध्ययनात् प्राप्नोति । न चादृष्टार्थस्य वाक्यस्यार्थद्वयविधानं द्विधा संभवति । उच्यते—नैवेदमदृष्टार्थं सूत्रम् ; वेदार्थविचारायैवेदमारभ्यते । कुतः ? "तादृशीं तु धर्मजिज्ञासामधिकृत्याथशब्दं प्रत्युक्तवानाचार्यः, या वेदाध्ययनमन्तरेण न संभवति । कथम् ? वेदवाक्यानामनेकविधो विचार इह वर्तिष्यते" । नन्वविवक्षि-

पञ्चिका

थार्थत्वम्, तत्र न श्रुतत्वमेव कारणमर्थावगतौ । किं तर्हि ? प्रकरणादिकमपि । तच्च प्रकरणादिकं सर्वमत्रास्ति इति । इदानीमविवक्षितेति । न तावे[1]द्विवक्षितार्थत्वे न्याय उक्तः । यदि परं शास्त्रे परिभाषादिविरहाद्वेदार्थविचाराच्च लौकिकार्थाश्रयणेन वेदाध्ययनानन्तरं तद्धेतुका धर्मजिज्ञासा कर्तव्येति, अत्रादृष्टार्थमुपदेष्टव्यम् ; तत्र वाक्यभेद इति । नैवेदमदृष्टार्थमिति । यदि ह्यदृष्टार्थमुच्यते, ततो ज्ञानेच्छामात्रपर्यवसानाद्वेदवाक्यानामनेकविधो विचारो न स्यात् ; भाष्ये च तादृशीशब्देन विचारपर्यन्ततोच्यते । न[2]न्वविवक्षितेति । [3]न्यायानभिधाना-

१. तव द्वि.
२. अविवक्षेति ग.
३. न्यायाभिधा- क.

बृहती

तस्यार्थं वेदाध्ययनमित्युक्तम् । विवक्षिते वा किं वेदाध्ययनपूर्वकेणानन्तर्यविधानेन? स्वतः प्राप्तेः । अपि चैवं सति "नैव वयमिह वेदाध्ययनात् पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिंष्मः ; न ह्येतदेकं वाक्यं पुरस्ताद्वेदाध्ययनाद्धर्मजिज्ञासां प्रतिषेधिष्यति, परस्ताच्चानन्तर्यं प्रकरिष्यति ; भिद्येत हि तथा वाक्यम् ; अन्या हि वचनव्यक्तिरस्य पुरस्ताद्वेदाध्ययनाद्धर्मजिज्ञासां प्रतिषेधतः, अन्या च परस्तादानन्तर्यमुपदिशतः—वेदं नानधीत्य—इत्येकस्यां विधीयतेऽनूद्यानन्तर्यम्, विपरीतमेकस्याम् ; अर्थैकत्वाच्चैकवाक्यतां वक्ष्यति" । अत एवादृष्टार्थाशङ्का नैव सूत्रे कर्तव्या । किमर्थं तर्हि सूत्रम्? स्वाध्यायाध्ययनविधेराचार्यकरणाद्गुरुकुलान्निवृत्तिरेवानन्तरं भाति । अनङ्गत्वात्तु स्वार्थपरतैवास्य न्याय्या, नाविवक्षितार्थतेति सूत्रस्य प्रयोजनम् । तदिदमाह—"अधीते वेदे द्वयमापतन्ति—गुरुकुलाच्च सामावर्त्तितव्यम्, वेदवाक्यानि च विचारयितव्यानि ; तत्र गुरुकुलान्मा समावर्तिष्ट, कथं नु वेदवाक्यानि विचारयेत्—इत्येवमर्थोऽयमुपदेशः" । "यद्येवम्, न तर्हि वेदाध्ययनं पूर्वमनन्तरं धर्मजिज्ञासायाः ; अविवाक्षितस्वार्थतां वेदाध्यनस्य

पञ्चिका

दनुशयोऽस्त्येव । विवक्षिते वेति । सूत्रानर्थक्यशङ्का । वेदाध्ययनवदानन्तर्यमपि प्राप्तत्वादनुपदेश्यमित्यर्थः[1] । अपि चैवं सतीति । यदा वेदाध्ययनं विवक्षितस्वार्थम्, एवं सति वेदाध्ययनपूर्वकमानन्तर्यमपि न विधेयम् । पूर्वमर्थद्वयविधानमभ्युपगम्य वाद इति—अपि च—इत्युक्तम् । अत एव चादृष्टार्थताशङ्कापि नास्ति, वाक्यभेदात् । किमर्थं तर्हि सूत्रमिति । उभयाविधाने । स्वाध्यायाध्ययनविधेरिति । पूर्वपक्षोत्थार्थाविवक्षानिराकरणार्थमित्यर्थः । "यद्येवं न तर्हि धर्मजिज्ञासायाः पूर्वं स्यादपि वेदाध्ययनम्" ; आनन्तर्यं तु नास्तीति भाष्यं पूरयत्यनन्तरशब्दं प्रक्षिपन्, "वेदमधीत्य स्नायात् इतिवदन्निति[2] । एतदुक्तं भवति—"वेदमधीत्य स्नायात्" इति वदन्तः स्मृतिकारा अध्ययनविधिनैवानुवचनान्तार्थोपदेशिना एवं समामनन्ति वेदाध्ययनानन्तरं गुरुकुलान्निवर्तितव्य-

---

१. –देश्यमिति. ग.

२. इति वेदमधीत्येतदुक्तं भवति । इदमधीत्येति यत्पदं तत्स्मृतिकारा. ग.

भाष्यम्

कर्मणोऽनन्तरं धर्मजिज्ञासा युक्ता प्रागपि च वेदाध्ययनात् । उच्यते—तादृशीं तु धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः, या वेदाध्ययनमन्तरेण न संभवति । कथम् ? वेदवाक्यानामनेकविधो विचार इह वर्तिष्यते । अपि च नैव वयमिह वेदाध्ययनात् पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः; न ह्येतदेकं वाक्यं पुरस्ताच्च वेदाध्ययनात् धर्मजिज्ञासां प्रतिषेधिष्यति, परस्ताच्चानन्तर्यं प्रकरिष्यति; भिद्येत हि तथा वाक्यम्; अन्या हि वचनव्यक्तिरस्य पुरस्तात् वेदाध्ययनाद्धर्मजिज्ञासां प्रतिषेधतः, अन्या च परस्तादानन्तर्यमुपदिशतः—वेदं नानधीत्य—इत्येकस्यां विधीयतेऽनूद्यानन्तर्यम्, विपरीतमेकस्याम् ; अर्थैकत्वाच्चैकवाक्यतां वक्ष्यति । किं तु, अधीते वेदे द्वयमापतति—गुरुकुलाच्च समावर्तितव्यम्, वेदवाक्यानि च विचारयितव्यानि । तत्र गुरुकुलान्मा समावर्तिष्ट, कथं नु वेदवाक्यानि विचारयेत्—इत्येवमर्थोऽयमुपदेशः । यद्येवं न तर्हि वेदाध्ययनं पूर्वं धर्मजिज्ञासायाः, एवं हि समामनन्ति "वेदमधीत्य स्नायात्" इति । इह च

बृहती

स्मृतिकारो मन्यते—"वेदमधीत्य स्नायात्"—इति वदन् । न चेदमन्याय्यं

पञ्चिका

मिति । न पुनरेवं भाष्यं योजयितव्यम्—वेदमधीत्य स्नायादित्यनेन एवं समा-

भाष्यम्

वेदमधीत्य स्नास्यन् धर्मं जिज्ञासमान इममाम्नायमतिक्रामेत् ; न चाम्नायो नामातिक्रमितव्यः । तदुच्यते—अतिक्रमिष्याम इममाम्नायम्, अनतिक्रामन्तो वेदमर्थवन्तं

बृहती

स्मृतिवचनम्, स्वाध्यायाध्ययनविधेर्विनियुक्तविषयत्वात्, तत्पूर्वकत्वाच्च स्वार्थावगतेः । तस्मादविवक्षितस्वार्थतैव न्याय्या वेदादवगम्यते । "न चाम्नायो नामातिक्रमितव्यः । तदुच्यते—अतिक्रमिष्याम इममाम्नायम्, अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकं कल्पयेम" । आचार्यकरणविधेरध्ययनमात्राच्च नार्थावबोधप्रत्यर्थिता सम्भवति । ननु च स्वाध्यायाध्ययनविधेः प्रयोजनद्वयासम्भवादविवक्षैव । केन वोक्तम्—

पञ्चिका

मनन्तीति, स्मृतिषु समाम्नायशब्दाभावात्[1] । न चेदमन्याय्यं स्मृतिवचनम्, स्वाध्यायाध्ययनविधेर्विनियुक्तविषयत्वात्तत्पूर्वकत्वाच्चार्थावगतेरिति । अथ कस्मात्कर्मविधय एवार्थावबोधद्वारेणोपकारकं प्रसिद्धं[2] स्वसिद्धयेऽध्ययनं न प्रयुञ्जत इत्याशङ्क्याह—विनियुक्तविषयत्वादिति । विनियुक्तमुपनयनं[3]मध्यापनविधावात्मनेपदश्रुत्या; तद्विषयश्चाध्ययनविधिः; उपनीतकर्तृकाध्ययनविषयत्वादुपनयनस्य विषयानुप्रवेशादुपनयनमध्ययनविधिविषय इत्युक्तम् । एवं च सत्यङ्गद्वारेणाचार्यकरणविधेः प्रयुक्तिः, उपकारमात्रेण तु कर्मविधीनाम्। यस्य चाङ्गद्वारेण प्रयोजकत्वम्, तदेव प्रयोजकमित्यामिक्षाधिकरणे वक्ष्यामः । अध्ययनोत्तरकलभावी चार्थावबोध इति न तन्मुखेन कर्मविधीनां प्रयोजकत्वम्। अत एव द्रव्यार्जननियमवत् दृष्टोऽप्यर्थावबोधोऽधिकारिविशेषणतया न परिगृह्यते, अध्ययनपूर्वकत्वादर्थावबोधस्य प्रागध्ययनात्कामनानु[4]त्पत्तेः; उत्तरकालभावितयैवं चार्थावबोधोऽपि प्रयोजनान्तरं न स्वीक्रियते । केन वोक्तम्—स्वाध्यायविधेः

---

१. समाम्नायव्यपदेशाभावात् . ग.
२. प्रसिद्धमध्ययनविधिं न. ग.
३. -नमाचार्यकरणविधि- ग.
४. -नानुपपत्तेः. ग.

भाष्यम्

सन्तमनर्थकं कल्पयेम। दृष्टो हि तस्यार्थः कर्मावबोधनं नाम। न च तत्राध्ययनमात्रात् तत्रभवन्तो याज्ञिकाः फलं समामनन्ति; यदपि समामनन्तीव, तत्रापि "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्"—इत्यर्थवादतां वक्ष्यति। न च अधीतवेदस्य स्नानानन्तर्यमेतत्

बृहती

स्वाध्यायाध्ययनविधेः प्रयोजनमेतत्—इति? "दृष्टो हि तस्यार्थः कर्मावबोधनं नाम"। उक्तं चाशेषत्वं स्वाध्यायाध्ययनस्य, तस्याधिकाराश्रवणात्। तदिदमाह—"न च तत्राध्ययनमात्रात्तत्रभवन्तो याज्ञिकाः फलं समामनन्ति; यदपि समामनन्तीव, तत्रापि "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्"—इत्यर्थवादतां वक्ष्यति"।

पञ्चिका

**प्रयोजनमेतदिति** आचार्यकरणनिष्पत्तिः। किं तर्हि प्रयोजनम्? **दृष्टो हि तस्यार्थः कर्मावबोधनमिति**। कस्मात्पुनराचार्यकरणनिष्पत्तिरेव प्रथमोपनिपातिनी प्रयोजनं न भवतीत्युच्यते[1]? यत्कर्तृको हि यो विधिः तत्पुरुषोपयोग्येव[2] तत्फलमित्युत्सर्गः। यत्र पुनस्तन्न दृश्यते, तत्र पुरुषान्तरगतमपि फलं गृह्यते। दृश्यते चात्र प[3]श्चाद्भावी कर्मावबोध इति तदेव प्रयोजनम्, न पुरुषान्तरगताध्यापनसिद्धिः। **उक्तं चाशेषत्वं स्वाध्यायाध्ययनस्य, तस्याधिकाराश्रवणात्**" इति। यदि ह्याचार्यकरणविध्यधिकारी[4] श्रूयते, तदा तदर्थमेवाध्ययनं स्यात्; अध्ययननिष्पत्त्यर्थश्च स्वाध्यायशब्दवाच्योऽक्षरराशिः स्यात्; ततश्चान्यपरा[5]च्छब्दात् प्रतीयमानोऽप्यर्थो न विवक्षितः स्यात्। तदिदमाहाधिकाराश्रवणं भाष्यकारः —**"न च तत्रेति। यदपि च समामनन्तीव, तत्रापि द्रव्यसंस्कारकर्मसु" इति।**

१. भवति उच्यते. ग.
२. -ग्ये चास्य प्रयोजन- ग.
३. पश्चाद्भाव्यपि. ग.
४. कार्येवाध्ययनेऽप्यधिकारी. ग.
५. -परत्वाच्छब्दस्याव्युत्पत्यभावादर्थोन.ग.

भाष्यम्

विधीयते; न ह्यत्रानन्तर्यस्य वक्ता कश्चिच्छब्दोऽस्ति; पूर्वकालतायां क्त्वा स्मर्यते, नानन्तर्ये। दृष्टार्थता चाध्ययनस्यानन्तर्ये व्याहन्येत। लक्षणया त्वेषोऽर्थः स्यात्—

बृहती

ननु नैवात्र विरोधो विद्यते; किं विरोधिनिराकरणार्थेन सूत्रेण? कथमविरोधः? "न चाधीतवेदस्य स्नानानन्तर्यमेतद्विधीयते; न ह्यत्रानन्तर्यस्य वक्ता कश्चिच्छब्दोऽस्ति; पूर्वकालतयां हि क्त्वा स्मर्यते, नानन्तर्ये। दृष्टार्थता चानन्तर्येऽध्ययनस्य व्याहन्येत"। स्यादेतदेवम्, यद्यस्याः स्मृतेर्मूलान्तरमस्ति। आचार्यकरणविध्यर्थपरिसमाप्तिरेवास्य मूलम्, वेदानुवचनान्तत्वादाचार्यकरणविधेः। किं तु "लक्षणया त्वेषोऽर्थः स्यात्।"

पञ्चिका

ननु च किमध्ययनं संस्कारकर्म? उच्यते—अनारभ्यविधानाद्विधेरेव साध्यत्वात् प्रधानकर्मैवेदम्। न च स्वाध्यायस्य क्वचिदपि विनियोगः, येन तन्मुखेन विध्यन्तरप्रत्यभिज्ञा स्यात् [1]पर्णमय्यादाविव। ततश्च विध्यन्तरसाध्यतैव। स्विष्टकृदादिवच्च दृष्टोऽक्षरसंस्कारः, तन्मुखेनार्थावबोधोऽपि पुरुषार्थो न युज्यते। यदि त्वसौ न दृश्यते, विधिमात्रमेव साध्यं स्यात्। नाप्यर्थवादान्वयकल्प्यं फलम्, विध्यर्थनिष्पत्त्यैव प्रयोजनवत्त्वाद्विधेः। दृष्टावबोधस्यापि [2]वेदोत्थस्यानन्योपायत्वान्नियमासंभवेऽपि नानर्थक्यम्। तदुक्तम् "[3]नियोगार्थनिष्पत्तेः किमन्यत्प्रयोजनं सर्वविधीनाम्" इति। पुरुषोपयोग्यर्थावबोधप्रयोजनस्वीकाराच्च पुरुषार्थत्वादैश्वर्यलक्षणोऽधिकारोऽपि सिद्ध इति। ननु नैवात्रेति। यदि हि स्मृतिविरोधः स्यात्, ततस्तत्परिहारार्थं सूत्रमारभ्येत; न चैवमिति। दृष्टार्थता चाध्ययनस्यानन्तर्ये व्याहन्येतेति। अध्ययनस्य दृष्टार्थत्वं क्त्वाप्रत्ययस्यानन्तर्येऽर्थे स्वीक्रियमाणे व्याहन्येत; अतो नानन्तर्यं क्त्वाप्रत्ययस्यार्थः। एतदुक्तं भवति—यद्यपि क्त्वाप्रत्ययेन आनन्तर्य-

---

१. पर्णताविधाविव. ग.
२. वेदार्थस्य. ग.
३. नियोगार्थनिर्वृत्तेः. ग.

भाष्यम्

न चेदं स्नानमदृष्टार्थं विधीयते। किं तु लक्षणया अस्नानादिनियमस्य पर्यवसानं वेदाध्ययनसमकालमाहुः—"वेदमधीत्य स्नायात्," गुरुकुलात् मा समावर्तिष्ट—इत्यदृष्टार्थतापरि-

बृहती

किमिदमुच्यते—लक्षणया त्वेषोऽर्थः स्यात् इति? इदमुच्यते—"न चेदं स्नानमदृष्टार्थं विधीयते; किं तु लक्षणया अस्नानादिनियमस्य पर्यवसानं वेदाध्ययनसमकालमाहुः-"वेदमधीत्य स्नायात्"--इति"। अतोऽस्या न्यायमूलतां कथयितुं सूत्रम्—गुरुकुलान्मा समावर्तिष्ट—इति। मूलान्तरत्वे च स्मृतेरदृष्टं कल्पयितव्यम्। अतोऽदृष्टार्थतापरिहारायैवाचार्यकरणविधिरेवास्य मूलम्। "तस्माद्वेदाध्ययनमेव पूर्वमभिनिर्वर्त्यानन्तरं धर्मो जिज्ञासितव्यः" इति स्थितम्, अथशब्दप्रयोगसामर्थ्यात्। एवं चेन्नेदमदृष्टार्थम्; नापि दृष्टार्थम्,

पञ्चिका

विशिष्टा पूर्वकालतोच्यते, तथाप्यध्ययनविधिविरोधात् पूर्वकालतामात्रमेवार्थो गृह्यत इति। स्यादेतदेवमिति। यदि हि वेदमधीत्य स्नायादिति स्मृतेः वेदाध्ययनोत्तरकालताविशिष्टस्नानमात्रविधायकत्वं स्यात्, ततः स्मृतेरपि मूलान्तरं कल्प्यं स्यात्; यदा त्वध्ययनानन्तरमस्नानादिनियमनिवृत्त्यर्थता भवेत्; ततः पूर्वपक्षन्यायमूलत्वान्नादृष्टमूलान्तरानुमानं स्यात्, तत्रादृष्टार्थकल्पनाया असंभवात्। दृष्टे पूर्वपक्षन्यायमूले[1] सति तन्मूलत्वमेव स्मृतेः; तन्मूलत्वे चास्ति विरोधः; पूर्वपक्षे ह्यनुवचनान्त एवाचार्यकरणविध्यर्थः। तस्मिन्निर्वृत्ते तत्प्रयुक्ताः सर्वेऽप्यस्नानादयो नियमा निवर्तन्त इति वेदाध्ययनानन्तरमेव गुरुकुल[2]निवृत्तिः। अतोऽपि न्यायमूलतां स्मृतेः कथयितुं सूत्रमिति स्थितम्। "गुरुकुलान्मा समावर्तिष्टेत्येवमर्थम्, अदृष्टार्थतापरिहारायैव"-इति भाष्यं पूर्वं तावत् दृष्टमूलत्वान्न मूलान्तरकल्पनेत्युक्तम्। अधुना स्नानविधेरदृष्टार्थतापरिहारार्थमपि मूलान्तरं न कल्प्यमिति दर्शयति। तद्व्याचष्टे—मूलान्तरत्वे चेति। एवं चेदिति। यदा स्मृतिबाधार्थमिदं सूत्रम्, तदादृष्टार्थं न भवति;

१. न्याये सति. ग. २. कुलान्निवृत्तिः ग.

भाष्यम्

हारायैव । तस्मात् वेदाध्ययनमेव पूर्वमभिनिर्वर्त्यानन्तरं धर्मो जिज्ञासितव्यः---इति अथशब्दस्य सामर्थ्यम् । न ब्रूमोऽन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा न कर्तव्येति; किं तु वेदमधीत्य त्वरितेन न स्नातव्यम्, अनन्तरं धर्मो जिज्ञासितव्यः---इति अथशब्दस्यार्थः ॥

अतःशब्दो वृत्तस्यापदेशको हेत्वर्थेन; यथा---

बृहती

प्राप्तत्वात्; गुरुकुलनिवृत्तिरेव निवार्यते। "न ब्रूमः—अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा न कर्तव्या—इति, किं तु वेदमधीत्य न त्वरितेन स्नातव्यम्; अनन्तरं धर्मो जिज्ञासितव्यः—इत्यथशब्दस्यार्थः" ॥

"अतःशब्दो वृत्तस्यापदेशको हेत्वर्थेन" इति कस्य वृत्तस्य हेतुतामुपदिशति? वेदाध्ययनस्येति ब्रूमः । कथं पुनर्वेदाध्ययनस्य हेतुता? अध्ययनानन्तरमर्थावबोधदर्शनात् । अतोऽधीतवेदस्यानन्तरं धर्मजिज्ञासा । तदिदमथेत्युक्तम् । अतोऽनन्तरावगमार्थं धर्मजिज्ञासाहेतुरध्ययनम् ।

पञ्चिका

किं त्वपन्यायसूचनार्थम्। नापि दृष्टार्थमिति । नापि [1]सर्वसंमतन्यायनिबन्धनार्थमपि, विप्रतिपन्नत्वात् स्मृतिकारस्य। "न ब्रूमोऽन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा न कर्तव्या" इत्यदृष्टार्थतां निरस्यति।। किं तु वेदमधीत्येति । अनेन सर्ववादिसंमतार्थत्वं स्मृतिकारस्य विप्रतिपत्त्या निराकरोति ।

"अतःशब्दो वृत्तस्यापदेशको हेत्वर्थेन" इति भाष्यं कस्य वृत्तस्य [2]हेतुतामुपदिशति? वेदाध्ययनस्येति । वेदाध्ययनमेव ह्यध्ययनानन्तराया धर्मजिज्ञासाया हेतुरित्यर्थः । अध्ययनानन्तरमर्थावबोधनदर्शनादिति । अत्रेत्थं सूत्रार्थवर्णना—अतो वेदाध्ययनाद्धेतोर्धर्मजिज्ञासा, अथ अध्ययनानन्तरमेव कर्तव्या,

---

१. सर्ववादिसम्मत- ग. २. हेतुतां दर्शयति. ग.



भाष्यम्

क्षेमसुभिक्षोऽयम्, अतोऽहमस्मिन् देशे प्रतिवसामि---इति; एवमधीतो वेदो धर्मजिज्ञासायां हेतुर्ज्ञातः, अनन्तरं धर्मो जिज्ञासितव्यः---इति अतःशब्दस्य सामर्थ्यम्। धर्माय हि वेदवाक्यानि विचारयितुमनधीतवेदो न शक्नुयात्, अत एतस्मात् कारणात् अनन्तरं धर्मं जिज्ञासितुमिच्छेदित्यतःशब्दस्यार्थः॥

बृहती

"यथा क्षेमसुभिक्षोऽयं देशः; अतोऽहमस्मिन् देशे प्रतिवसामि—इति" (इति) पूर्वोक्तस्य वाक्यस्यातःशब्दो हेतुतामुपदिशतीति लौकिकार्थतां दर्शयति। "एवमधीतो वेदो धर्मजिज्ञासायां हेतुर्ज्ञातः, अनन्तरं धर्मो जिज्ञासितव्यः"—इत्यथशब्दस्य व्याख्यानमेव प्रदर्शितवान् हेतुत्वावगमाय। "धर्माय हि वेदवाक्यानि विचारयितुमनधीतवेदो न शक्नुयात्"—इत्यनेनाधिकारशून्यां स्वार्थविवक्षां दर्शयति। "अत एतस्मात्कारणादनन्तरं धर्मं जिज्ञासितुमिच्छेदित्यतःशब्दस्यार्थः"। निगमनवाक्यमेतत्। "धर्मं जिज्ञासितु-

पञ्चिका

हेतोः सिद्धत्वाद्विलम्बनानुपपत्तेः। कथमध्ययनमानन्तर्यहेतुः? यस्मादध्ययनानन्तरमेवार्थावबोधः, तस्मादध्ययनं हेतुरिति। तदिदमथेत्युक्तं हेतुमदानन्तर्यम्। हेतुत्वावगमायेति। हेतुमता विना हेतुत्वावगमासिद्धेर्हेतुमदथशब्दस्य व्याख्यानं युक्तम्। धर्माय हि वेदवाक्यानि विचारयितुमनधीतवेदो न शक्नुयादिति। वेदाध्ययनं विना वेदार्थविचाराशक्तेर्वेदाध्ययनस्य हेतुतामाह भाष्यकारः। एतच्च भाष्यकारेणाभिदधता वेदाध्ययनं विना [2]तदर्थस्यानवगमात् कामनानुपपत्तेरर्थावबोधकामोऽध्ययनेऽधिक्रियत इति निराकृतम्। तदाह—अनेनाधिकारशून्यामिति। निगमनवाक्यमेतदिति। उपसंहार[3]वाक्यमेवेत्यर्थः।

---

१. यस्मादनन्तर- ग.
२. तदर्थावबोधकस्यानवगतत्वात्. ग.
३. वाक्यमेतदित्यर्थः. ग.

भाष्यम्

धर्माय जिज्ञासा धर्मजिज्ञासा ; सा हि तस्य ज्ञातु-

बृहती

मिच्छेत्''—इति कस्य सूत्रावयवस्य व्याख्यानम् ? धर्मजिज्ञासापदस्येति ब्रूमः । ननु—धर्मं जिज्ञासेत्—इति वक्तव्यम् ; प्रकृतिप्रत्यययोर्हि प्रत्ययार्थस्य प्राधान्यमित्युत्सर्गः ; धर्मजिज्ञासापदे पुनः प्रकृत्यर्थप्राधान्यप्रदर्शनायायं यत्नः । ''धर्माय जिज्ञासा धर्मजिज्ञासा'' । कथं पुनः ? प्रकृत्यर्थो ज्ञानार्थः, प्रत्ययार्थ इच्छा ; ईदृश एवार्थे सन् स्मर्यते—''धातोः कर्मणः''—इति । एवं तर्हि ज्ञानस्य प्राधान्यम्, न धर्मस्य । न ह्यनन्यार्था क्रिया प्रधानं भवतीति धर्मकर्मिकैव सा प्रधानम् । अतो धर्मार्था जिज्ञासा । तदिदमाह—''सा हि तस्य ज्ञातुमिच्छा''—इति । उक्ता धर्मार्था जिज्ञासा ।

पञ्चिका

**कस्य सूत्रवयवस्य व्याख्यानमिति** । द्वितीयेच्छाश्रवणात् पृच्छति । **धर्मजिज्ञासापदस्येति** । अत्रायमभिप्रायः—जिज्ञासां प्रति धर्मस्य प्राधान्यम् ; तच्च तत्प्रधानम्, यद्येन व्याप्तुमिष्यते । अतश्च प्राधान्यं लब्धुं द्वितीयेच्छेति । ननु धर्मं जिज्ञासेदिति व[1]क्तव्यम्[2]—इ[3]त्यत्राभिप्रायमजानतः प्रश्नः । प्रकृतिप्रत्यययोरित्यभिप्रायविवरणम् । यदि च द्वितीयेच्छा न प्रदर्श्येत, ततो धर्मस्य प्राधान्यं न स्यात् ; द्वितीयेच्छाप्रदर्शनेन धर्मस्य प्राधान्यं शक्यं दर्शयितुम् । यदि तु न तथा प्रदर्श्येत, तदा प्रत्ययार्थत्वादिच्छायाः प्राधान्यं स्यात् ; प्र[4]कृत्यर्थोऽपि विज्ञानं तद्विशेषणं स्यात् ; ज्ञानविशेषणं च धर्मः स्यात्, न प्रधानम् । तेन धर्मजिज्ञासापदे प्रकृत्यर्थप्राधान्यप्रदर्शनाय द्वितीयेच्छा दर्शिता । द्वितीयेच्छायां हि दर्शितायां धर्मस्य प्राधान्यम्, त[5]त्प्राधान्ये च तादर्थ्यं ज्ञानस्य, तादर्थ्ये च ज्ञानस्येच्छायास्तादर्थ्यं भवतीति द्वितीयेच्छाप्रदर्शनेन धर्मस्य प्रा[6]धान्योक्त्या प्रकृत्यर्थप्राधान्यमुक्तं भवति । तेनायमर्थः—धर्माय जिज्ञासा धर्मजिज्ञासा । कथं पुनः प्रकृत्यर्थो ज्ञानार्थः,

---

१. वक्तु. ग.
२. भवितव्यम्. ख.
३. इत्येतमभिप्रायं. ग.
४. प्रत्ययार्थो. ग.
५. तत्प्राधान्यं च तादर्थ्ये ज्ञानस्य तादर्थ्ये च ज्ञानस्येच्छया तादर्थ्ये. ग.
६. प्राधान्यमुक्त्वा प्रकृत्यर्थप्राधान्यदर्शनं कृतं भवतीति. ग.

भाष्यम्

मिच्छा । स पुनः कथं जिज्ञासितव्यः ? को धर्मः, कथंलक्षणः, कान्यस्य साधनानि, कानि साधनाभासानि, किंपरश्चेति । तत्र को धर्मः, कथंलक्षणः---इति एकेनैव सूत्रेण व्याख्यातम्---

बृहती

स पुनः कथं जिज्ञासितव्यः ? को धर्मः, कथंलक्षणः, कान्यस्य साधनानि, कानि साधनाभासानि, किंपरश्च---इति । एवमविज्ञातो धर्मो नानुष्ठानायालं भवति ; अननुष्ठितो धर्मो न धर्मकार्यं करोति---इत्युक्तम्---

पञ्चिका

प्रत्ययार्थ इच्छा ? यस्मादीदृश एवार्थे सन् स्मर्यते "धातोः कर्मणः" इति । धात्वर्थस्येच्छाकर्मत्वात् कर्मणश्चेष्यमाणस्य प्रधानत्वात् । एवं तर्हि ज्ञानस्य प्राधान्यम् ; न धर्मस्य, अधात्वर्थत्वात् ; न ह्यनन्यार्था क्रिया प्रधानं भवति, क्लेशरूपत्वात् । क्रियाया अन्यार्थाया एव प्राधान्यम् ; तेन ज्ञानस्य धर्मार्थत्वात् धर्मस्यापीच्छां प्रति प्राधान्यम् । अतो धर्मार्था जिज्ञासा । एवं च तादर्थ्यस्य प्रतीयमानत्वात् चतुर्थीसमास एवायं धर्माय जिज्ञासा धर्मजिज्ञासेति । तदिदं धर्मस्य प्राधान्यमाह---"सा हि तस्य ज्ञातुमिच्छा" इति । तस्येच्छा[1] किमर्था ? कथं ज्ञातो धर्मो भवेदिति उक्तं धर्मजिज्ञासेति । स कथं जिज्ञासितव्यः ? केन (येन) प्रकारेण क्रियमाणा जिज्ञासा धर्मार्था भवति[2], तथा जिज्ञासितव्यः । को धर्मः, किंरूपो धर्मः, कथंलक्षणः, सापेक्षत्वनिरपेक्षत्वलक्षणयोः किंलक्षणप्रमाणप्रकारकः, कान्यस्य साधनानि कानि[3] करणेतिकर्तव्यतारूपाणि, किम्परः किमधिकारपर्यन्तः ; एवमविज्ञातो[4] नानुष्ठानायालंभवितुमर्हतीति; एवं तु विज्ञातोऽनुष्ठातुं शक्यते; तेनेत्थं जिज्ञासा धर्मार्था भवति । ननु मा नामानुष्ठीयताम्, तथापि किमिति तादर्थ्यं न भवतीत्यत आह---

---

१ तस्य धर्मस्य सेच्छा किमर्थं ज्ञातुम्. तथा ज्ञातो धर्मो भवेदिति । स कथं. ग.

२. भवतीत्येवं जिज्ञा- ग.

३. कानि साधनानां करणेतिकर्तव्यता- ग.

४. अविज्ञातो धर्मो नानुष्ठानायालं भवति । एवं. ग.

भाष्यम्

"चोदनालक्षणोऽर्थो धर्मः" इति । कान्यस्य साधनानि, कानि साधनाभासानि, किंपरश्चेति शेषलक्षणेन व्याख्यातम् । क पुरुषपरत्वम्, क वा पुरुषो गुणभूतः—इत्येतासां प्रतिज्ञानां पिण्डस्यैतत् सूत्रम् "अथातो धर्मजिज्ञासा" इति॥

धर्मः प्रसिद्धो वा स्यात्, अप्रसिद्धो वा ? स चेत्प्रसिद्धः, न जिज्ञासितव्यः; अथाप्रसिद्धः, नतराम्; तदेतदनर्थकं धर्मजिज्ञासाप्रकरणम् । अथवार्थवत् । धर्मं प्रति हि

बृहती

"आसां प्रतिज्ञानां पिण्डस्यैतत् सूत्रम्—आथातो धर्मजिज्ञासा—इति" । केयं किंपरता नाम? अधिकाराभिप्रायमेतदुच्यते, "क पुरुषपरत्वं क वा पुरुषो गुणभूतः"—इति च ॥

"धर्मः प्रसिद्धो वास्यादप्रसिद्धो वा"—इति च कोऽभिप्रायः ?

पञ्चिका

अनुष्ठितो[1] हि धर्मो धर्मकार्यं करोति । किं पुनर्धर्मस्य कार्यम्? अधिकारसिद्धिरित्युक्तम् । आसां प्रतिज्ञानां पिण्डस्यैतत्सूत्रमिति । यत उक्तेन न्यायेन धर्मार्था जिज्ञासा सूत्रेणोक्ता, एवं क्रियमाणा जिज्ञासा धर्मार्था भवति, तस्मादासां प्रतिज्ञानां पिण्डस्यैतत्सूत्रम्--अथातो धर्मजिज्ञासा--इति । केयं किंपरता नामेति । अयमभिप्रायः--धर्मो हि नियोगः; स च स्वनिष्ठो न किंचित्प्रति गुणभूत इति । अधिकाराभिप्रायमेतदुच्यत इति । अस्यार्थः—अधिकारः पुरुषस्यैश्वर्यं कर्मणि, तदभिप्रायम्[2] । एतदुक्तं भवति—पुरुषाधिकारपर्यन्तो धर्म इति । परशब्दश्च पर्यन्ताभिप्रायेण क पुरुषपरत्वम्, क पुरुषो गुणभूतः? इति चाधिकाराभिप्रायम् । यदि पुनर्वेदादेवायमर्थोऽवगम्यते, किमत्र जिज्ञास्यत[3] इति । अस्यार्थः—वेदाद्वेदार्थेऽ-

१. अनुनुष्ठितो धर्मो न हिधर्मकार्यं. ग.
२. तदभिप्रायमेतदिति. ग.
३. जिज्ञासितव्य इति. ग.

भाष्यम्

**विप्रतिपन्ना बहुविदः---केचिदन्यं धर्ममाहुः, केचिदन्यम्; सोऽयमविचार्य प्रवर्तमानः कञ्चिदेवोपाददानो विहन्येत, अनर्थं च ऋच्छेत् । तस्माद्धर्मो जिज्ञासितव्य इति । स हि निःश्रेयसेन पुरुषं संयुनक्तीति प्रतिजानीमहे । तदभिधीयते—**

बृहती

यदि पुनर्वेदादेवायमर्थोऽवगम्यते, किमत्र जिज्ञास्यत इति । सत्यम्; विप्रतिपन्नास्तु महर्षयः केचित् प्रमाणान्तरपूर्वकमर्थं वर्णयन्ति ; केचिन्मन्त्रार्थवादानामपि यथाश्रुत एवार्थे प्रामाण्यमिच्छन्त्यकार्येऽप्यर्थे वेदः प्रमाणमिति वदन्तः । अतोऽस्यां विप्रतिपत्तौ सत्यां प्रारभ्यते जिज्ञासा तत्त्वावगमाय । तत्त्वेनापरिज्ञातोऽर्थोऽनुष्ठीयमानो विहन्त्यनुष्ठातारम्, ज्ञात्वाऽनुष्ठितो निःश्रेयसेन संयुनक्तीत्यारभ्यते जिज्ञासा; सर्वविचाराणां प्रतिज्ञापूर्वकत्वात् । तदभिधीयते—

पञ्चिका

वगम्यमाने[1] विवक्षितार्थत्वमेवावगम्यते; अनवगम्यमानेऽध्यापनविधिसिद्ध्यर्थत्वमेवाध्ययनस्य; सर्वथा जिज्ञासावकाशो न स्यात् । सत्यम्; वि[2]प्रतिपन्ना इति । सत्यं गम्यते; किं तु गम्यमानेऽप्यर्थे विप्रतिपत्तिरस्ति । तेन तन्निवृत्तये जिज्ञासोचिता । केचित् प्रमाणान्तरपूर्वकमर्थं वर्णयन्ति वेद[3]स्य पौरुषेयत्वमिच्छन्तः ; केचिन्मन्त्रार्थवादानामपि यथाश्रुतमर्थं वर्णयन्ति सिद्धरूपमकार्येऽप्यर्थे वेदः प्रमाणमिति वदन्तः ; [4]कार्यमात्रप्रामण्यपक्षे हि कार्यानुगुण्यात् गुणवादादिभिर्व्याख्यानम्, इतरथा श्रौत एवार्थः स्यात् । तत्त्वेनापरिज्ञातोऽर्थोऽनुष्ठीयमानो विहन्त्यनुष्ठातारम्=अधिकारसिद्धिं न प्रापयति; ज्ञात्वा चानुष्ठितो निःश्रेयसेनाधिकारेण योजयतीति प्रारभ्यते धर्मजिज्ञासेति ॥

॥ इति प्रथमं जिज्ञासाधिकरणम् ॥

---

१. -माने वेदोऽपि विवक्षितार्थ एवावगम्यते. ग.
२. विप्रतिपन्नास्त्विति. ग.
३. वेदस्यापौरुषेयत्व- ग.
४. कार्यप्रामाण्य- ग.

भाष्यम्

## चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

चोदना—इति क्रियायाः प्रवर्तकं वचनमाहुः; आचार्यचोदितः करोमि—इति हि दृश्यते। लक्ष्यते येन तल्लक्षणम्; धूमो लक्षणमग्नेः—इति हि वदन्ति। तया यो लक्ष्यते, सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे। चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं

बृहती

चोदनालक्षणोऽर्थो धर्मः इति। "चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः"—इति कार्येऽर्थे वेदस्य प्रामाण्यं दर्शयति। तल्लक्षणो धर्मः—इति वदन् कार्यरूप एवेति दर्शयति। "चेदना हि भूतम्" इति।

पञ्चिका

कार्येऽर्थ इति। न कार्यावगमं विना प्रवृत्तिरुपपद्यते; तेन कार्याभिधायकतयैव वचनस्य प्रवर्तकता; कार्याभिधायकेन च कार्यमेव लक्ष्यते; तेन कार्य एव वेदः प्रमाणम्। तल्लक्षणो धर्म इति। अस्यार्थः—चोदनासूत्रेण चोदनालक्षणः कार्यरूप एव वेदार्थः, न सिद्धरूप इति प्रतिज्ञातम्। तदनेन भाष्येण व्याख्यायते। धर्मशब्दश्च वेदार्थमात्रपरः।

* अत्रापरोऽपरिपक्वविद्यावलेपोद्रेकतिरस्कृतविवेकः परिचोदयति—कथं पुनः कार्यरूप एव वेदार्थः? यावता वेदान्तानां सिद्ध एवार्थः "विज्ञानमानन्दं ब्रह्म" इति प्रतीयते। स्यान्मतम्—अपरिपूर्णत्वात्तत्र योग्यविध्यध्याहारः क्रियत इति; तन्न, अपरिपूर्तेः कारणाभावात्। अथोच्येत—वृद्धव्यवहारे शब्दानां स्वार्थव्युत्पत्तेः, प्रवृत्तिनिवृत्त्यात्मकत्वाच्च व्यवहारस्य, कार्यावगमपूर्वकत्वाच्च प्रवृत्तिनिवृत्त्योः, कार्यान्वयिन एवार्थाः सर्वशब्दाभिधेयाः; न चेह कार्यमस्ति; तेन कार्यान्वयं विना

---

१. तन्न तु. ग.

२. प्रवृत्तिनिवृत्तिमत्कार्यान्वित एवार्थः स शब्दाभिधेयः. ग.

* ब्रह्मसिद्धिनियोगकाण्डस्थमनूद्यमानमिदम्।

Printed at the Government Press, Madras.

पञ्चिका

अपरिपूर्णत्वात् कार्यमध्याह्रियत इति। [1]तदेतत्स्वमतिपरिकल्पितम्, विनापि व्यवहारेण सिद्धार्थेष्वपि शब्देषु कार्यान्वयरहितेषु व्युत्पत्तिसंभवात्—पुत्रस्ते जातः—इत्यादिषु। नन्वर्थविशेषविषयां प्रतीतिमनुमाय शब्दतद्भावभाविनीं शब्दस्य स्वार्थे शक्तिनिरूपणा व्युत्पत्तिरुच्यते; न च व्यवहारं विना परबुद्धिरनुमातुं शक्या। उच्यते-हर्षादिनिबन्धनैर्मुखप्रसादादिभिर्लिङ्गैः शक्यानुमानैव परेषां बुद्धिः। मुखप्रसादादि हर्षमनुमापयति, स च हर्षहेतुम्; प्रियार्थप्रतिपत्तिश्च हर्षहेतुः; सा च वाक्यनिबन्धनेति--पुत्रस्ते जातः—इत्यनेन हर्षहेतुभूतार्थप्रतीतिः कृतेति ज्ञायते। हर्षहेतुश्च त[2]स्य पुरुषस्य पुत्रजन्मैव केवलमस्तीत्येवमवगच्छन् विशिष्टार्थविषयां शब्दस्य शक्तिमध्यवस्यति; आवापोद्वापाभ्यां च प्रतिपदं व्यवहार इव व्युत्पत्तिरत्राप्युपपद्यत इति निरवद्यम्। अपि च व्युत्पन्नेतरपदविभक्त्यर्था वर्तमानापदेशेऽपि—काष्ठैः पचति—इति काष्ठपदार्थे व्युत्पद्यन्ते कार्यान्वयरहित एव। किं च व्यवहारेऽपि व्युत्पत्तौ [3]यद्यपि कार्यान्वितत्तैव पदानाम्, तथापि कार्यान्विताभिधायितया न व्युत्पत्तिः; किं तु अर्थान्तरान्विताभिधायितयैव। यो हि विशेषान्विताभिधानमिच्छति, इच्छत्येवासावर्थान्तरान्विताभिधानम्। तावता च प्रयोगप्रतिपत्त्युपपत्तौ न शक्यते विशेषान्विताभिधानकल्पना। तथा च लोके सिद्धार्थान्येव भूयिष्ठानि वाक्यानि दृश्यन्ते—कुशलं ते, कुशलं मे—इत्येवमादीनि। किं च कार्यमपि तदुच्यते, यदपेक्षितोपायः; तेन सिद्धैव कर्मणामपेक्षितोपायता कार्यपरेषु गम्यते। अतः सिद्ध एव वेदार्थः।

तदेतत् बालभाषितं बालेष्वेवादरणीयतां लभते। न हि वृद्धव्यवहारमन्तरेण व्युत्पत्तिस्संभवति। विशिष्टार्थविषया हि प्रतिपत्तिरर्थविशेषाभिधानकल्पनानिमित्तम्; न च हर्षो हर्षहेतुविशेषानुमाने प्रभवति। न च पारिशेष्ये[4]ण हर्षहेतुविशेषनिश्चयः, कालत्रयवर्तिव्यवहितविप्रकृष्टानां हर्षहेतूनां पारिशेष्येणावधारणानुपपत्तेः। व्यवहारः पुनः विशिष्टार्थविषय एव प्रत्यक्षमुपलभ्यमानस्तद्विषयामेव [5]प्रतीतिमनुमापयन् शब्दस्य विशिष्टार्थाभिधानकल्पनायां हेतुर्व्युत्पत्तावादिमार्गभूतः [6]कार्याभिधायित्वमेव सर्वशब्दानामापादयति। अत

---

१. तदेतत्स्वसमयपरि- ग.
२. Omitted "तस्य". ग.
३. यद्यप्यन्वितार्थतैव. ग.
४. -ष्येण हेतुविशेषणादिनिश्चय. ग.
५. प्रतीतिमनुष्ठापयन्. ग.
६. कार्यान्विताभिधायकत्व- ग.

भाष्यम्

# चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

चोदना—इति क्रियायाः प्रवर्तकं वचनमाहुः; आचार्यचोदितः करोमि—इति हि दृश्यते। लक्ष्यते येन तल्लक्षणम्; धूमो लक्षणमग्नेः—इति हि वदन्ति। तया यो लक्ष्यते, सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे। चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं

बृहती

चोदनालक्षणोऽर्थो धर्मः इति। "चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः"—इति कार्येऽर्थे वेदस्य प्रामाण्यं दर्शयति। तल्लक्षणो धर्मः—इति वदन् कार्यरूप एवेति दर्शयति। "चेदना हि भूतम्" इति।

पञ्चिका

कार्येऽर्थ इति। न कार्यावगमं विना प्रवृत्तिरुपपद्यते; तेन कार्याभिधायकतयैव वचनस्य प्रवर्तकता; कार्याभिधायकेन च कार्यमेव लक्ष्यते; तेन कार्य एव वेदः प्रमाणम्। तल्लक्षणो धर्म इति। अस्यार्थः—चोदनासूत्रेण चोदनालक्षणः कार्यरूप एव वेदार्थः, न सिद्धरूप इति प्रतिज्ञातम्। तदनेन भाष्येण व्याख्यायते। धर्मशब्दश्च वेदार्थमात्रपरः।

* अत्रापरोऽपरिपक्वविद्यावलेपोद्रेकतिरस्कृतविवेकः परिचोदयति—कथं पुनः कार्यरूप एव वेदार्थः? यावता वेदान्तानां सिद्ध एवार्थः "विज्ञानमानन्दं ब्रह्म" इति[1] प्रतीयते। स्यान्मतम्—अपरिपूर्णत्वात्तत्र योग्यविध्यध्याहारः क्रियत इति; तन्न, अपरिपूर्तेः कारणाभावात्। अथोच्येत—वृद्धव्यवहारे शब्दानां स्वार्थव्युत्पत्तेः, प्रवृत्तिनिवृत्त्यात्मकत्वाच्च व्यवहारस्य, कार्यावगमपूर्वकत्वाच्च [2]प्रवृत्तिनिवृत्त्योः, कार्यान्वयिन एवार्थाः सर्वशब्दाभिधेयाः; न चेह कार्यमस्ति; तेन कार्यान्वयं विना

---

१. तत्र तु. ग.

२. प्रवृत्तिनिवृत्तिमत्कार्यान्वित एवार्थः स शब्दाभिधेयः. ग.

* ब्रह्मसिद्धिनियोगकाण्डस्थमनूद्यमानमिदम्।

Printed at the Government Press, Madras.

पञ्चिका

अपरिपूर्णत्वात् कार्यमध्याह्रियत इति । [1]तदेतत्स्वमतिपरिकल्पितम्, विनापि व्यवहारेण सिद्धार्थेष्वपि शब्देषु कार्यान्वयरहितेषु व्युत्पत्तिसंभवात्---पुत्रस्ते जातः---इत्यादिषु । नन्वर्थविशेषविषयां प्रतीतिमनुमाय शब्दतद्भावभाविनीं शब्दस्य स्वार्थे शक्तिनिरूपणा व्युत्पत्तिरुच्यते; न च व्यवहारं विना परबुद्धिरनुमातुं शक्या । उच्यते-हर्षादिनिबन्धनैर्मुखप्रसादादिभिर्लिङ्गैः शक्यानुमानैव परेषां बुद्धिः । मुखप्रसादादि हर्षमनुमापयति, स च हर्षहेतुम्; प्रियार्थप्रतिपत्तिश्च हर्षहेतुः; सा च वाक्यनिबन्धनेति--पुत्रस्ते जातः--इत्यनेन हर्षहेतुभूतार्थप्रतीतिः कृतेति ज्ञायते । हर्षहेतुश्च त[2]स्य पुरुषस्य पुत्रजन्मैव केवलमस्तीत्येवमवगच्छन् विशिष्टार्थविषयां शब्दस्य शक्तिमध्यवस्यति ; आवापोद्वापाभ्यां च प्रतिपदं व्यवहार इव व्युत्पत्तिरत्राप्युपपद्यत इति निरवद्यम् । अपि च व्युत्पन्नेतरपदविभक्त्यर्था वर्तमानापदेशेऽपि---काष्ठैः पचति---इति काष्ठपदार्थे व्युत्पद्यन्ते कार्यान्वयरहित एव । किं च व्यवहारेऽपि व्युत्पत्तौ य[3]द्यपि कार्यान्वितत्तैव पदानाम्, तथापि कार्यान्विताभिधायितया न व्युत्पत्तिः ; किं तु अर्थान्तरान्विताभिधायितयैव । यो हि विशेषान्विताभिधानमिच्छति, इच्छत्येवासावर्थान्तरान्विताभिधानम् । तावता च प्रयोगप्रतिपत्त्युपपत्तौ न शक्यते विशेषान्विताभिधानकल्पना । तथा च लोके सिद्धार्थान्येव भूयिष्ठानि वाक्यानि दृश्यन्ते---कुशलं ते, कुशलं मे---इत्येवमादीनि । किं च कार्यमपि तदुच्यते, यदपेक्षितोपायः ; तेन सिद्धैव कर्मणामपेक्षितोपायता कार्यपरेषु गम्यते । अतः सिद्ध एव वेदार्थः ।

तदेतत् बालभाषितं बालेष्वेवादरणीयतां लभते । न हि वृद्धव्यवहारमन्तरेण व्युत्पत्तिस्संभवति । विशिष्टार्थविषया हि प्रतिपत्तिरर्थविशेषाभिधानकल्पनानिमित्तम्; न च हर्षो हर्षहेतुविशेषानुमाने प्रभवति । न च पारिशेष्ये[4]ण हर्षहेतुविशेषनिश्चयः, कालत्रयवर्तिव्यवहितविप्रकृष्टानां हर्षहेतूनां पारिशेष्येणावधारणानुपपत्तेः । व्यवहारः पुनः विशिष्टार्थविषय एव प्रत्यक्षमुपलभ्यमानस्तद्विषयामेव [5]प्रतीतिमनुमापयन् शब्दस्य विशिष्टार्थाभिधानकल्पनायां हेतुर्व्युत्पत्तावादिमार्गभूतः [6]कार्याभिधायित्वमेव सर्वशब्दानामापादयति । अत

---

१. तदेतत्स्वसमयपरि- ग.
२. Omitted ''तस्य''. ग.
३. यद्यप्यन्वितार्थतैव. ग.
४. -ष्येण हेतुविशेषणादिनिश्चय. ग.
५. प्रतीतिमनुष्ठापयन्. ग.
६. कार्यान्विताभिधायकत्व- ग.

पञ्चिका

एव वर्तमानापदेशेऽपि काष्ठैः पचतीति व्युत्पत्तिर्या, सा कार्यान्वितार्थान्तरसंबन्धानुगुण्यात् कार्यान्वयिन्येव । यच्चेदमर्थान्तरान्विताभिधानमात्रे पदानि व्युत्पद्यन्त इति, तदपि बालभाषितम्; [1]सर्वेष्वस्य व्यवहारेषु कार्यान्वितार्थप्रतीतेर्नार्थान्तरमात्रान्विताभिधानकल्पना संभवति । यदि हि कार्यान्वयोऽपि क्वचिद्व्यभिचरति, ततोऽर्थान्तरमात्रान्विताभिधानं कल्प्येत; न च तदस्ति । ननु च---निधिमानेष भूभागः, प्रतिरोधकवानयमध्वा—इति विनापि कार्यान्वयं प्रवृत्तिनिवृत्तिकरं वाक्यमुपलभ्यते; वाक्येन हि निधिमत्तायां बोधितायां तदुपादित्सोः तत्र प्रवृत्तिः, प्रतिरोधकवत्तायां च तज्जिहासोर्निवृत्तिरिति । अत्र ब्रूमः——यत्र तावत् प्रवृत्तिनिवृत्ती विद्येते, तत्र तत्कारणभूता कार्यावगतिरस्ति; न हि तां विना ते भवतः । शब्दानन्तर्याच्च शब्देनैव सा कृतेति कल्पयति पार्श्वस्थः । न च कार्यार्थः शब्दो न श्रूयत इत्येतावता शब्दस्याकारणत्वम्, अध्याहारादिलभ्यस्यापि वाचकत्वाविरोधात्, योग्यताविशेषेण चाध्याहार्यविशेषावगमसिद्धेः । न च प्रमाणान्तरेणापि कार्यावगमो घटत इति शब्दस्य तत्रौदासीन्यं शक्यं कल्पयितुम्, शब्दश्रवणे प्रवृत्तिदर्शनादानन्तर्येण शब्दस्यैव तत्र कारणत्वस्यावगमात् । प्रमाणान्तरेणाप्यसावर्थो लभ्यत इति कामं शब्दोऽनुवादकः स्यात्, [2]नाकारणम् । न चानुवादकत्वं पुरुषवचसां दोषः । तेन च साक्षात् श्रुत्या वाध्याहारेण वा सर्वव्यवहारवाक्येषु कार्यान्वयाव्यभिचारात् तदन्वितार्थाभिधानं लिङादिव्यतिरेकिणाम्, लिङादीनां तु कार्याभिधानमेवेति सिद्धम् । तेन सर्वपदानि तावत् कार्यान्वितमेवार्थमाहुः । न च प्रतिपदं विषयभावः, प्रणाड्यापि तादर्थ्योपपत्तेः । प्रणाडीसमाश्रयणे च परस्परपदार्थान्तरसंबन्धावगम एव प्रमाणम्; अन्यथा प्रतिपदं विषयभावेऽनुबन्धभेदात् भिन्नेषु नियोगार्थेषु [3]संबन्धानामरुणैकहायनीन्यायवैलक्षण्यात् परस्परसंबन्धावगमश्च क्रिययैव स्यात् । एतच्च प्रतिपदाधिकरणे निपुणतरमुपपादयिष्यामः । लोके तु यस्सिद्धार्थमात्रपरत्वेन प्रयोगः, स लोकवचसां प्रमाणान्तरप्रतीतार्थपरत्वात् लाक्षणिको द्रष्टव्यः । कार्यान्वयो हि परस्परान्वयाव्यभिचारीति [4]लक्षणोपपत्तिः । न चापेक्षितोपायतैव कार्यता; कृतिसाध्यं कार्यम्,

---

१. सर्वेषु वृद्धव्यवहारवाक्येषु. ग.
२. -वादः स्यात, न कारणम्. ग.
३. संभेदानाम्. ग.
४. लाक्षणिकोपपत्तिः. ग.

भाष्यम्

विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुम्; नान्यत् किञ्चनेन्द्रियम् । नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना, यथा यत्किञ्चन लौकिकं वचनम्---नद्यास्तीरे फलानि सन्ति---इति; तत् तथ्यमपि भवति, वितथमपि भवतीति । उच्यते,

बृहती

यदि कार्य एवार्थे वेदस्य प्रामाण्यम्, कथं तर्हि भूताद्यर्थावगतिर्मन्त्रार्थवादेषु ? तेषामपि हि कार्यार्थता द्वितीये पादे वक्ष्यति । तदुक्तम्—"शक्नोत्यवगमयितुम्"—इति । न च प्रमाणान्तरावगम्योऽयमर्थः—इति "नान्यत्किञ्चनेन्द्रियम्"—इति दर्शयति । "नन्वतथाभूतमप्यर्थं ब्रूयाच्चो-

पञ्चिका

साधनमुपायः, साध्यत्वोपायत्वे च भिन्ने ; किं तु क्लेशात्मकं कर्मापेक्षितोपायतया कार्यं प्रतीयत इति कार्यता साधनतां न व्यभिचरतीति तादात्म्यभ्रमो[1] मन्दधियाम् । तथा च सुखं स्वयमेव कार्यम् । एवं सर्वपदानां कार्यान्वितार्थाभिधायकत्वाद्यदि वेदान्तेषु कार्यं योग्यमध्याहारादिभिर्लभ्यते, तदा कार्यार्थतैव वेदान्तवाक्यानामपि[2] ; अथ न, ततोऽनभिधायकतैव व्युत्पत्तिविरहात् । अतो विधिनिराकरणमपि वेदान्तेषु न क्षतिमावहति । तस्मात् सिद्धं कार्य एव वेदस्य प्रामाण्यम् । चोदना हि भूतमिति । यदि कार्य एवार्थे वेदस्य प्रामाण्यम्, कथं तर्हि मन्त्रार्थवादेषु भूताद्यर्थावगतिः, अकार्यरूपत्वात्तेषाम् ; अत्राह भाष्यकारश्चोदना हीति । तद्व्याचष्टे--तेषामपीति । अस्यार्थः---भूतादिकोऽप्यर्थः कार्यान्वयित्वात्तेन रूपेण कार्य एव । तेन चोदनैव कार्यप्रतिपादकमेव वाक्यं भूतादिकमप्यर्थं[3] शक्नोत्यवगमयितुमिति कार्यरूप एव वेदार्थ इति न प्रतिज्ञाहानिः । ननु भूतादिकोऽप्यर्थो मन्त्रार्थवादविषयः [4]प्रमाणान्तरवेद्य एव कथं चोदनालक्षणो भवतीत्याशङ्क्याह—नान्यत्किञ्चनेन्द्रियमिति । तद्व्याचष्टे---न च प्रमाणान्तरगम्योऽयमित्यादिना ।

---

१. तादर्थ्यभ्रमो मन्दानाम्. ग.
२. वेदान्तानामपि. ग.
३. -मप्यवगमयितुं शक्नोतीति. ग.
४. प्रमाणान्तरावगम्य इत्यर्थः । नन्वतथा. ग.

बृहती

दना"—इति शब्दस्यार्थासंस्पर्शितां वदन् प्रतिज्ञादोषमाह। कथं पुनरर्थासंस्पर्शिता शब्दस्य? उच्यते—अर्थासंस्पर्शि हीयते प्रमाणम्; तस्य बाधकज्ञानोत्पत्तौ सत्यां न पुनः प्रतिपक्षविज्ञानं तन्निमित्तमेवोत्पद्यते। शब्दे पुनः स्पष्टेऽपि बाधकज्ञाने पुनः शब्दनिमित्तमेव प्रतिपक्षविज्ञानमुदेति—अङ्गुल्यग्रे हस्तियूथमस्ति—इति। तथा न शुक्तिकारजतादिष्वस्यार्थस्य संभवः। तस्मादर्थासंस्पर्शित्वाच्चोदनायाः तल्लक्षणो धर्मः इति प्रतिज्ञा नोपपद्यते। तदुच्यते अर्थं चावबोधयति, अर्थासंस्पर्शी चेति चित्रम्। यदि तावत् बाधकज्ञानावगम्यमर्थासंस्पर्शित्वम्, नैव तत् प्रमाणजन्यम्; विशेषाग्रहणात् स्मृतिज्ञानं तदिति प्रतिपादयिष्यामः। वेदे पुनः बाधकज्ञानाभावात् अर्थासंस्पर्शिताशङ्कापि नास्ति। ननु च सत्यपि बाधकज्ञाने लौकिकेषु वाक्येषु शब्दादेव ज्ञानमुत्पद्यते, निमित्तभावात्—अङ्गुल्यग्रे हस्तियूथशतम्—इति; तदर्था परिहृतैवार्थासंस्पर्शिताशङ्का, नैवम्। अनभिज्ञो भवान्

पञ्चिका

एतदुक्तं भवति—कार्यसंबन्धितारूपेण प्रमाणान्तरेण नावगम्यत इत्यर्थः। **नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदनेति शब्दस्यार्थासंस्पर्शितां वदन् प्रतिज्ञादोषमाहेति**। न कश्चिच्चोदनालक्षणो नाम। यदि हि कश्चिदर्थं चोदना प्रमिमीते, तदा[1] तल्लक्षणो नाम सिध्येत्; चोदना तु शब्दात्मिका; शब्दश्चार्थं व्यभिचारति; तथा ह्यसत्यप्यर्थे—नदीतीरे फलानि सन्ति—इति ज्ञानमुत्पद्यते। [2]ननु प्रत्यक्षमपि व्यभिचारि स्यात्; तत्रापि विनाप्यर्थेनैन्द्रियकं ज्ञानं दृश्यते शुक्तिकायाम्—[3]रजतम्—इति। न तत्रैन्द्रियकं ज्ञानं व्यभिचरति। एकं हि तत्र ज्ञानम्—इदम्—इति चाक्षुषम्, अपरमपि—[4]रजतम्—इति रजतमात्रावलम्बि स्मरणज्ञानम्; तयोर्विवेकाग्रहणनिबन्धनो भ्रमोऽयम्; न पुनरैन्द्रियकं ज्ञानं व्यभिचरति। बाधकं च तत्र ज्ञानं विवेकग्राहकम्। यदि शाब्देऽपि विज्ञान एवमेवाङ्गीक्रियते, तदा बाधकज्ञानोदये विवेकेऽ-

१. चोदनालक्षणो नाम प्रसिध्येत .ग.
२. नन्वेवं. ग.
३. रजतमिदमिति. ग.
४. रजतमिदमिति रजतावलंबिस्मरण- ग.

पञ्चिका

वधारिते पुनर्भ्रमो नोत्पद्येत ; उत्पद्यते तु बाधकेऽपि ज्ञानेऽङ्गुल्यग्रादिवाक्येषु ज्ञानम् । तथा प्रत्यक्षादिषु दोषवशादिन्द्रियं[1] न संपूर्णं कार्यं करोति, तेन विवेकाग्रहणात् भ्रमः; शाब्दे तु ज्ञाने शब्दः[2] कारणम् ; न च तदन्तर्गतो दोषोऽस्ति । पुरुषगतास्तु दोषाः सामग्रीबाह्या[3] इति न ते कार्यक्षतिहेतवः । तस्मात्[4] शाब्दज्ञानं व्यभिचरति । यच्च व्यभिचरति न तन्निश्चायकम् ; निश्चायकं च प्रमाणम् । तेनानिश्चायिका चोदनार्थासंस्पर्शिनीति न तल्लक्षणो नाम कश्चिदिति तात्पर्यार्थः । बाधकज्ञानोत्पत्तौ सत्यां विवेके चावधारिते,[5] प्रतिपक्षज्ञानं विवेकाग्रहणनिबन्धनं भ्रान्तिज्ञानम्, न तन्निबन्धनं बाधकावस्थाभावि निर्दोषेन्द्रियादिसामग्रीप्रभवम् ; किं तु दोषखण्डितशक्तिज्ञानकरणचक्रोत्थम् । शाब्दे[6] पुनः स्पष्टे बाधकज्ञाने अवधारिते विवेके, शब्दनिमित्तमेव सम्यग्-ज्ञानसामग्रीभूतादुष्टशब्दजन्यमेव, प्रतिपक्षज्ञानं सत्यप्रतिपक्षासद्भूतार्थग्राहीत्यर्थः[7] । एतच्च नन्वतथाभूतमित्यनेन भाष्येण व्यभिचारदर्शनोत्थं[8] संशयमर्थासंस्पर्शित्वनिब-न्धनमुपन्यस्तवानाचार्यः । उच्यते—अर्थं चावबोधयत्यर्थासंस्पर्शि चेति चित्रमेतत् । नैव कदाचिद्विज्ञानं व्यभिचरति, येनानिश्चयः स्यात् । बाधकज्ञानमपि नैवार्थासंस्पर्शितां दर्शयति ; किं तु ग्रहणस्मरणयोर्विवेकमवधारयति । वेदे पुनरीदृशोऽपि बाधो नास्तीति[9] दूरोत्सारितमनिश्चयलक्षणमर्थासंस्पर्शित्वम् । ननु चेत्यादिना प्रागुक्तमनुभाषते । **नैवमिति** । अत्रायमभिप्रायः—सर्वत्र पौरुषेयेण वचसा न साक्षादर्थ एव प्रतीयते, पुरुषेच्छापरतन्त्रत्वात् । असत्यप्यर्थे पुरुषा वाक्यं प्रयुञ्जाना दृश्यन्ते । तेनार्थं प्रति नियमाभावान्न तेभ्योऽर्थ-सिद्धिः । वक्तुरभिप्रायं तु[10] सूचयेयुः । स चायमभिप्रायः प्रमाणपूर्वकश्चेत् ततस्तस्य[11] प्रमेयाविनाभावात् प्रमाणस्य तन्मुखेन वाक्यार्थनिश्चयोऽनुमानमेव ; तेनानुमानस्यायं बाधः । तदाह—प्रमाणान्तरदर्शनमत्र बाध्यते, न पुनर्हस्ति-

---

१. दोषवदिति यन्न न संपूर्णं. ख.

२. शब्द एव करणं. ग.

३. सामग्रीवाबोध्यत इति. ग.

४. तस्माच्छब्दद्वये व्यभिचरति न तं निश्चायकं च प्रमाणं तेनानित्या-धिका चोदना. ग.

५. -रिते तमेव व्यभिचरतीति प्रति-पक्षविज्ञानं विवेकग्रहणप- ग.

६. शब्दे पुनः स्पष्टेऽपि वाधक- ग

७. सत्प्रतिपक्षा- ग.

८. व्यभिचरति शब्दोत्थं. ग.

९. -त्यतिदूरोत्सारितमेवानिश्चय. ग.

१०. तु स्वकारणं. ग.

११. तस्य प्रमाणस्य प्रमाविनाभावात्तन्मु-[ग.

भाष्यम्

विप्रतिषिद्धमिदमभिधीयते—ब्रवीति च वितथं चेति। ब्रवीति—इत्युच्यते अवबोधयति बुध्यमानस्य निमित्तं भवतीति; यस्मिंश्च निमित्तभूते सति अवबुध्यते सोऽवबोधयति; यदि च चोदनायां सत्याम् अग्निहोत्रात् स्वर्गो भवतीति गम्यते, कथमुच्यते—न तथा भवतीति? अथ न तथा भवतीति, कथमवबुध्यते? असन्तमर्थमवबुध्यते—इति विप्रतिषिद्धम्। न च "स्वर्गकामो यजेत" इत्यतो वचनात् सन्दिग्धमवगम्यते—भवति वा स्वर्गो न वा भवतीति। न च निश्चितमवगम्यमानमिदं मिथ्या स्यात्; यो हि जनित्वा प्रध्वंसते—नैतदेवमिति, स मिथ्याप्रत्ययः; न चैष कालान्तरे पुरुषान्तरे अवस्थान्तरे देशान्तरे वा विपर्येति। तस्मादवितथः। यत्तु लौकिकं वचनम्, तच्चेत् प्रत्ययितात् पुरुषात्, इन्द्रियविषयं वा, अवितथमेव तत्; अथाप्रत्ययितात्, अनिन्द्रियविषयं वा, तत् पुरुषबुद्धि-

बृहती

बाध्यबाधकभावस्य—अङ्गुल्यग्रे हस्तियूथशतम्—इति प्रमाणान्तरदर्शनमत्र बाध्यते, न पुनर्हस्तियूथशतम्। तदिदमाह—"विप्रतिषिद्धमिदमभिधीयते—ब्रवीति च, वितथं चेति"। अत एव "तच्चेत् प्रत्ययितात्"—इत्युक्तम्। प्रत्ययितस्य हि वचनमव्यभिचारि प्रमाणान्तरपूर्वकम्, यत्रोपलभ्यमानविषयम्;

पञ्चिका

यूथशतमिति। एतदुक्तं भवति—अनुमानावसेयं प्रमाणान्तरमत्र[1] बाध्यते;

१. -रदर्शनमत्र. ग.

भाष्यम्

**प्रभवमप्रमाणम्; अशक्यं हि तत् पुरुषेण ज्ञातुमृते वचनात्।**

बृहती

**यत्र तु द्वयं नास्ति, तत्र प्रमाणान्तरविपर्ययाद्विपर्ययः। वाक्यार्थे पुनरुक्तोऽविपर्ययः। कस्मात् पुनः पौरुषेये वचने प्रमाणान्तरविपर्ययाद्विपर्ययः? ज्ञातं**

पञ्चिका

न पुनर्हस्तियूथशतरूपं बाह्यं वस्तु, तत्र वचनस्याव्यापारात् । यत्र हि विषये यत्प्रमाणं प्रवृत्तम्, तत्र तस्य बाधो भवति । न च वचनस्य बाह्ये[1] प्रवृत्तिः, तत्र तस्य प्रवृत्तिनियमाभावादित्युक्तम् । तदुक्तमनभिज्ञो भवानिति । न चायमनुमानस्यापि बाधः; किं तु अलिङ्गे लिङ्गसाधरणं रूपं पश्यन्नलिङ्गतामविविञ्चन् लिङ्गतामन्यत्र दृष्टां स्मरन् लिङ्गव्यवहारं प्रवर्तयन् अलिङ्गज्ञानेन लिङ्गव्यवहारान्निवर्तते ; तथा हि श्रुतिलिङ्गाधिकरणे दर्शितम् । तदिदमाह— "विप्रतिषिद्धमिदमभिधीयते ब्रवीति च वितथं चेति" । ब्रवीतीति[2] ज्ञानं जनयतीति, वितथमिति ज्ञानं न जनयतीति विप्रतिषिद्धम् । ज्ञानाजनकत्वमेव[3] वितथत्वम्, नान्यत्। अत एव "तच्चेत् प्रत्यायितात्"----इत्युक्तम् । यत एव लिङ्गभूतं पौरुषेयं वाक्यम्, अत एव प्रत्यायितस्य नियमेन प्रमणान्तरपूर्वकार्थाभिधायिनो वचनं सत्यम्; [4]श्रोतुरिन्द्रियविषयमप्रत्ययितवचनमपि सत्यम्। यत्पुनरप्रत्ययितवचनम्, श्रोतुश्च न प्रमाणान्तरपूर्वकम्, तत्सत्यं नेत्युक्तम्; प्रमाणान्तरपक्षे हि सर्वत्रैवार्थासंस्पर्शिता स्यात्, तुल्यत्वात् सामग्रयाः; लिङ्गपक्षे तु यदेव प्रमाणान्तरकार्यतया वचनं निश्चीयते, तदेव लिङ्गभूतमर्थाव्यभिचारि भवति, नान्यदिति युज्यते । ननु यदि तावद्वाक्यस्यापि[5] विपर्ययोऽस्ति, तदार्थासंस्पर्शिता प्रसक्तेत्याशङ्क्याह— **वाक्यार्थे पुनरुक्तोऽविपर्यय इति** । अस्यार्थः—योऽयं विपर्ययः, नासौ वाक्यार्थे । किं[6] तर्हि? लिङ्गार्थे । तच्चोक्तमनभिज्ञो भवानिति। कस्मात्पुनः पौरुषेये

---

१. बाह्येप्यर्थे. ग.
२. ब्रवीतिं च ज्ञानं न जनयति वितथमपि ज्ञानं. ग.
३. ज्ञानजनकत्वमेव वितथत्वमन्यत्. ग.
४. तथा श्रोतु- ग.
५. यावद्वाक्यस्यापि- ग.
६. किं तर्हि लिङ्गार्थे एतच्च, ग.

## पञ्चिका

चोदना प्राप्नोति, वचनस्य स्वातन्त्र्यादर्शनात्; ततश्च प्रत्ययान्तर[1]सापेक्षत्वादप्रामाण्यमापद्यत इति। कः परिहारः? अयमुच्यते—यदि चोदना कार्यमर्थं प्रतिपादयति, तदा न पैरुषेयी; पुरुषा हि प्रमाणान्तरप्रतीतार्थप्रतिपत्तये वाक्यं प्रयुञ्जते; न च कार्यं प्रमाणान्तरप्रमेयम्; तेन तत्प्रतिपादकस्य न पौरुषेयत्वम्; अतोऽदृष्टमपि स्वातन्त्र्यं कल्प्यते कार्यप्रतीतिबलेन। न[2] चैत्यवन्दनादिषु, पौरुषेयत्वेन स्म[3]रणात्। तेनानपेक्षत्वं चोदनाया निर्वि[4]वादम्। एतदेव प्रदर्शयितुं व[5]चनादिति तद्विशेषाभिधानम्। ननु चेति। [6]वाक्यमेवंपरमिति मन्वानस्य चोद्यम्। बाढमिति। वाक्यं[7]सापेक्षत्वपरं विशेषसंकीर्तनस्यैतत्प्रयोजनमिति परिहारः। सापेक्षत्वनिराकरणदर्शनादिति। सापेक्षत्वं निराक्रियमाणं दृश्यते यस्माद्वचनस्य, तस्मान्नान्तरीयकमनपेक्षत्वं सिध्यतीत्यर्थः। ननु च कार्यमर्थं यद्यपि चोदना प्रतिपादयति, तथापि पौरुषेयत्वं चोदनायाः किमिति न भवति? प्रमाणान्तरशून्यत्वादिति चेन्न, अपरस्मात् पौरुषेयाद्वचनादवगतिसिद्धेः; तदाह—अपरस्मादिति भाष्येण। तद्व्याचष्टे–ननु ऋते वचनादि[8]त्युक्त इति। अत्रोत्तरं भाष्यम्—त[9]दपि तेनैव तुल्यमिति। तस्य व्याख्यानम्—उच्यते, वचनादित्युक्त इति। नन्वित्यविदुषामुपदेशान्यथानुपपत्त्योपलम्भकारणानुमानमाशङ्कते। तद्व्याचष्टे—कथं पुनरिदं सिध्यतीति। नैतदेवमुपदेशो हीति भाष्येण परिहरति। अस्यार्थः—न तावदुपलम्भकान्तरं शक्यानुमानम्, परिगणितप्रमाणसामग्रीव्यतिरिक्तस्याभावनिश्चयात्। उपदेशस्तु व्यामो[10]हादप्युपपद्यते; असति व्यामोहे वेदादप्युपपद्यते। अतः प्रमाणान्तरस्यानपे[11]क्षणात्तद्विपर्ययेण नाप्रामाण्यं चोदनायाः। स्वतश्चार्थप्रतिपादकतयार्थसंस्पर्शितेति संभवति प्रतिज्ञातार्थः। अपि च पौरुषेयाद्वचनादिति भाष्यं पैरुषेयस्य वचनस्य लिङ्गत्वेन गमकत्वमिति दर्शयति। पूर्वं हि प्रमाणान्तरप्रतीतप्रत्यायकतया पौरुषेयस्य वचनस्य न स्वातन्त्र्येणार्थप्रतिपादकत्वम्, अपि त्वन्तर्भावितपूर्वप्रमाणस्यैव; ततश्च प्रमाणान्तरोपस्थापकतया लिङ्गत्वमेवेत्युक्तम्। लिङ्गव्यभिचाराच्च शब्दस्यार्थासंस्पर्शिताशङ्कापि

---

१. -रापेक्षत्वात्. ग.
२. Omitted न. ग.
३. स्मरणम्. ग.
४. Omitted निर्विवादं. ग.
५. वचनादृत इति विशेषा- ग.
६. वाक्यमेवैवं, ग.
७. वाक्यं सापे- ग.
८. इत्युक्तेऽपीति ग.
९. तदपि हि. ग.
१०. मोहेनाप्युप- ग.
११. -णान्न तद्विपर्ययेण प्रामाण्यम्. ग.

भाष्यम्

किञ्चन प्रमाणमस्ति । ननु सामान्यतो दृष्टं पौरुषेयं वचनं वितथमुपलभ्य वचनसाम्यादिदमपि वितथमवगम्यते । न, अन्यत्वात्; न ह्यन्यस्य वितथभावेऽन्यस्य वैतथ्यं भवितुमर्हति, अन्यत्वादेव; न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति । अपि च पुरुषवचन-

बृहती

ननु वेदेत्येतदपि कल्पनीयमेव । न, प्रसिद्धकारणत्वात् संविदः; अप्रसिद्धमूलत्वाच्चार्थस्य । वेदेत्येतदपि तावत् पुरुषवचनान्नावगतिर्भवति, विक्षेपस्य सम्भवाच्चित्तानाम्; किमुतार्थे? तद्दर्शयति—"विप्लवते खल्वपि कश्चित् पुरुषकृताद्वचनात् प्रत्ययः"—इति । किमिदं सामान्यतो दृष्टम्? द्विविधस्यापि निरस्तत्वात् किमन्यदवशिष्यते, येनेदमुच्यते—"ननु सामान्यतो दृष्टम्" इति? सत्यमेवम्; किं तु विषयान्तरे सामन्यतो दृष्टमनपास्तं मन्यते—

पञ्चिका

नास्तीत्युक्तम् । [1]अधुनानुमानादन्यत्वबुद्धिर्नास्तीति कथ्यते । कथम् पुरुषवचनादर्थानिश्चयात्, वक्तृबुद्धिनिश्चये चानुमानत्वमेव । अर्थो हि न कारणं वचनस्य; वक्तृबुद्धिस्तु कारणमेव । कार्यतश्च कारणाव[2]गतिरनुमानमेव । अनुमानेऽपि पौरुषेयवाक्यसमुत्थज्ञाने यथा व्युत्पत्तिः, तथौत्पत्तिकसूत्रे वक्ष्यामः । तमिममर्थमस्य भाष्यस्य व्याचष्टे—किं चेत्यादिना । किं वा अर्थावगतावनु[3]मानात् प्रमाणान्तरं शाब्दमित्यवगतिर्भवति? बाढं भवति; अर्थानुसारि हि तदा कारणभूतमर्थमुपस्थापयदनुमानात् प्रमाणान्[4]तरं शाब्दमित्यवकल्पते । न[5]नु वेदेत्यपि वक्तृबुद्धिरपि कल्पनीया पौरुषेयाद्वाक्यात्; ततश्च तत्कल्पकतया किमिति प्रमाणान्तरं न

---

१. अधुना त्वनुमानबाह्यत्वबुद्धिं. ग.
२. तावन्नुमानत्वम्. ग.
३. -मानप्रमाणात्. भ.
४. -न्तरमवकल्पते. ग.
५. वेदेऽपि ग.

भाष्यम्

साधर्म्यात् वेदवचनं वितथम्—इत्यनुमानादवगम्यते; प्रत्यक्षस्तु वेदवचनेन प्रत्ययः; न चानुमानं प्रत्यक्षविरोधि प्रामाणं भवति। तस्माच्चोदनालक्षणोऽर्थः श्रेयस्करः। एवं तर्हि श्रेयस्करो जिज्ञासितव्यः, किं धर्मजिज्ञासया? उच्यते—य एव श्रेयस्करः, स एव धर्मशब्देनोच्यते।

बृहती

"विप्लवते खल्वपि कश्चित्पुरुषकृताद्वचनात्"—इत्युक्तम्; तदान्यथैवार्थोऽन्यथा शब्दाद्विज्ञानम्; तदिदमुपपन्नार्थं भवति; अस्यां किमुपत्तौ? प्रसक्ता खल्वर्थासंस्पर्शिता शब्दस्य शब्दत्वाद्विप्लुतार्थशब्दवत् इति। सत्यम्; यदि विप्लुतौ शब्दादयथार्थत्वम्, अयथार्थस्य विषये शब्दादवगम्ये सति, नायथार्थात्। तदिदमुक्तम्—"न, अन्यत्वात्"—इति। अन्य

पञ्चिका

भवति? न; प्रसिद्धं हि कारणं वाक्यस्य वक्तृबुद्धिः; अतस्तत्कल्पना कार्यात् कारणानुमानम्; अप्रसिद्धं च मूलमर्थः; ततस्तदवगतिर्नानुमानम्। विप्लवते खल्वपीत्यनेन दूरोत्सारितं पुरुषवचनात् अर्थनिश्चयं दर्शयति। तथा[1] हि—प्रतारका अन्यथा जानन्तोऽप्यन्यथा वाक्यानि प्रयुञ्जते। तथा प्रमादिनो दुष्टसामग्रीकाश्चान्यविवक्षायामन्यदेव वाक्यमुच्चारयन्ति। तेषां वाक्याद्वक्तृबुद्धिरपि निश्चेतुं न शक्यते, दूरेणार्थः। तदाह—वेदेत्येतदपि[2] तावात् पुरुषवाचनान्नावगतिः, विक्षेपस्य प्रतारणाशयप्रमादलक्षणस्य चित्तगतस्य सम्भवात्। एतच्चोपलक्षणम्; उच्चारणदोषोऽपि द्रष्टव्यः। न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्तीत्युक्तम्। ननु सामान्यतो दृष्टं प्रमाणमस्तीति भाष्यम्। तदाक्षिपति—किमिदं सामान्यतो दृष्टमिति। द्विविधस्यापि प्रत्ययान्तरापेक्षितार्थासंस्पर्शित्वलक्षणस्याप्रामाण्यहेतोर्निरस्तत्वात्। सत्यमेवमिति समाधिः। विषयान्तरे लौकिकवाक्यगम्यात् सिद्ध-

---

१. Omitted वाक्यद्वयं ग. २. -पीति। वक्तृवच- ग.

भाष्यम्

कथमवगम्यताम्? यो हि यागमनुतिष्ठति, तं धार्मिकः—इति समाचक्षते; यश्च यस्य कर्ता, स तेन व्यपदिश्यते यथा पाचकः, लावक इति। तेन यः पुरुषं निःश्रेयसेन संयुनक्ति,

बृहती

एवायथार्थत्वे हेतुः शब्दाद्विषये स्यात्। अथापि शब्दादेव विप्लवः, तथाप्येतदनुमानं नैवोपपद्यते; अदुष्टपक्षप्रतिज्ञानसापेक्षं हेतुवचनं भवति; दुष्टश्चायं पक्षः, संविदः प्रत्यक्षत्वात्। तदिदमुक्तम् — "प्रत्यक्षस्तु वेदवचनेन प्रत्ययः" इति। प्रतीतिः प्रत्ययः। ननु नैव कार्यो धर्मः। कस्तर्हि? गुणः। तथा च केचित् धीगुणं मन्वते, केचिदात्मगुणम्। तस्मात्

पञ्चिका

रूपादन्यस्मिन् विषये कार्यरूपे सामान्यतो दृष्टमनपास्तं मन्यते। पूर्वं हि पुरुषकृताद्वचनात्[1] विप्लवाभिधाने वचनादेव विप्लव उक्तः। ततश्च व्यभिचारिणो वचनस्यार्थासंस्पर्शिता। तेन वेदस्याप्यर्थासंस्पर्शित्वनिबन्धनमप्रामाण्यम्। सत्यं यदीति परिहारः। अत्रायमभिप्रायः—यत्र विप्लवः तत्र यदि शब्दादयथाभूतस्यार्थस्यावगतिः स्यात्; किं तु शब्दस्तत्र लिङ्गम्; ततस्तत्र[2] तस्य वक्तृबुद्धिपर्यवस्थापकत्वम्[3], वक्तृबुद्धिमुखेन चार्थावगमः। तेनायथार्थत्वस्य वक्तृबुद्धिर्विषयः, न शब्दः। अथापीत्यादिरभ्युपगम्य वादः। ननु च नैव कार्यो धर्मः इति। अस्यार्थः--यदि कार्यात्मको धर्मः स्यात्, तदा कार्यप्रतिपादकचोदनालक्षणो धर्मः स्यात्; यावता कार्यात्मको धर्मो न भवति। कस्तर्हि? बुद्धिगुण आत्मगुणो वा[4]; अतः कथं चोदनालक्षणो धर्मः स्यादिति। श्रेयस्करो धर्म इत्युक्ते कथं कार्यस्य धर्मत्वम्? अपूर्वाधिकरणे तस्यैव श्रेयस्करत्वस्य[5] ज्ञापितत्वात्। अत्र च पक्षे यागाद्यनुष्ठातरि धार्मिकशब्दप्रयोगो नियोगानुष्ठाननिमित्तकः। तथा हि अनधिकृते यागाद्यनुष्ठातर्यपि धार्मिकशब्दो न प्रयुज्यते नियोगासिद्धिमन्तरेण; नियोगसिद्धिश्च चोदितयागाद्यनुष्ठानसमधिगम्येत्यनेनाशयेनोक्तम्[6]—यो यागमिति। सूत्रस्या-

---

१. -धानाद्वचनात्. ग.
२. तेन तत्र. ग.
३. -बुध्यवस्थापकत्वं. ग.
४. वा विवक्षितः कथं. ग.
५. श्रेयस्करस्य. ग.
६. -गम्येति तेनाशयेन. ग.

भाष्यम्

स धर्मशब्देनोच्यते । न केवलं लोके, वेदेऽपि "यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन्"—इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति । उभयमिह चोदनया

बृहती

क्रियायाः प्रवर्तकं वचनं चोदना, तल्लक्षणोऽर्थो धर्मः—इति वचनं नोपपद्यते, अकार्यत्वाद्धर्मस्य । अतस्तन्निराकरणाय चोदनालक्षणस्य तत्रोपसंहारमुखेन उपन्यस्तवान् भाष्यकारः तस्मात् श्रेयस्करो धर्मः इत्यादि । कथं पुनर्निरासः? शब्दार्थसम्बन्धस्य लोकव्यवहारगम्यत्वात् कार्यार्थे धर्मशब्दं लौकिकाः प्रयुञ्जत इति "यो यागमनुतिष्ठति"—इत्येवमादिना

पञ्चिका

प्येवं योजना—चोदनालक्षणः कार्यरूपो वेदार्थः, नेन्द्रियादिलक्षणः क्रियाकारकसंसर्गादिः; तत्रार्थो यो निःश्रेयसफलकः स धर्मः, नानर्थः श्येनादिनियोगः । उभयमिति[1] भाष्यमर्थशब्दस्यान्वयप्रयोजनप्रदर्शनार्थम् । पुनरपि कोऽर्थ इति प्रश्नं कृत्वा यो निःश्रेयसायेत्युत्तरमुक्तम्; तथा कोऽनर्थ इति पृष्टे[2] पुनरुत्तरं यः प्रत्यवायायेति । अनेन च ग्रन्थेन निःश्रेयसप्रत्यवायहेतुत्वेन धर्माधर्मत्वमुक्तम् । एवं चोपदर्शयता भाष्यकारेणोभयमप्यर्थानर्थत्वेन चोदनालक्षणमित्युक्तम्। इदं तर्हि तथा च सत्ययुक्तं यदुक्तम्—तत्र यो निःश्रेयसाय तस्यैव धर्मता कथं नाम स्यात्; प्रत्यवायहेतोर्मा भूदिति। इदं तर्हीति पूर्वेण सहैकग्रन्थः । कथं पुनरनर्थः कर्तव्यतयोपदिश्यत इति भाष्यमनुभाष्य[3] व्याचष्टे—कथं कर्तव्यतयानुपादिश्यमानोऽर्थश्चोदनालक्षणो भवति, कथं वा चोदनालक्षणस्य सतो धर्मत्वनिवृत्त्यर्थमर्थशब्दान्वय उपपद्यते? अत्रायमभिप्रायः—यत्किल चोदनालक्षणं तत्कर्तव्यतयोपदिश्यते ; यच्च कर्तव्यतयोपदिश्यते न तदनर्थकम् , कर्तव्यतावगमादेवानर्थतानिवृत्तेः । अथोच्येतानर्थः श्येनादिनियोगः, न तर्हि कर्तव्यतयोपदिश्यते । यच्च कर्तव्यतया नोपदिश्यते, न तच्चोदनालक्षणम्; अचोदनालक्षणनिवृत्त्यर्थमर्थग्रहणमिति[4] नोप-

१. -मिह चोदनयेति. ग.
२. प्रश्ने. ग.
३. भाष्यम् तद्व्याचष्टे. ग.
४. -मिति तत्रोप- ग.

भाष्यम्

लक्ष्यते अर्थोऽनर्थश्चेति। कोऽर्थः ? यो निःश्रेयसाय ज्योतिष्टोमादिः। कोऽनर्थः ? यः प्रत्यवायाय श्येनो वज्र इषुरित्येवमादिः। तत्रानर्थो धर्म उक्तो मा भूत् इत्य-

बृहती

प्रदर्शितम्। अर्थशब्दस्यान्वयप्रयोजनप्रदर्शनार्थं भाष्यकारेण—"उभयमिह चोदनया लक्ष्यते अर्थोऽनर्थश्चेति"; पुनरपि च प्रश्नपूर्वकमिदमुक्तम्—"कोऽर्थः ? यो निःश्रेयसाय ज्योतिष्टोमादिः; कोऽनर्थः ? यः प्रत्यवायाय श्येनादिः"—इति। निःश्रेयसप्रत्यवायलक्षणं धर्माधर्मत्वमुक्तम्। एवं चोपदर्शयता उभयं चोदनालक्षणमित्युक्तं भवति।

पञ्चिका

पद्यते, अचोदनालक्षणत्वेनैव व्यावृत्तिसिद्धेः। एतच्चाक्षेपानुगुणमिति कृत्वा व्याख्यातम्। यदप्यस्योत्तरम्, तेनापि प्रत्युत चोद्यमेव प्रकटीकृतम्। तदाह—पुनरपि च स्पष्टीकरोतीति। नञर्थस्यानन्यार्थत्वादिति। न हि निषेधेन नञर्थस्याकरणे प्रत्यवायपरिहारार्थता। यदि हि नञ्विधिर्नञर्थस्य प्रत्यवायपरिहारार्थतां गमयेत्, ततोऽवगम्येताकरणे[1] प्रत्यवाय इति; तथा चैतदपि सिध्येत्—प्रतिषिद्धं प्रत्यवायायेति; न त्वेवमस्ति। आक्षेपमिदानीं परिहरति—अत्राहानिरूपित-[2]नियोगव्यापारस्येदं चोद्यम् इत्यादिना। अयमभिप्रायः—यदि कामाधिकारेऽपि नियोगो यागस्य कर्तव्यतां वदेत्, स च यागः फलसाधनीभूतोऽकर्तव्ये[3] फले न कर्तव्यः स्यादिति फलस्याप्यर्थान्नियोग एव कर्तव्यतां वदेत्; ततश्च फलेऽपि विध्याक्षिप्तौपादानिकी प्रवृत्तिरिति श्येनफलं हिंसा "न हिंस्यात्" इत्यनेन प्रतिषेद्धुं न शक्यते, प्रतिषेधस्य पुरुषार्थत्वात्; औपादानिकप्रवृत्तिनिषेधे च क्रत्वर्थत्वप्रसक्तेः "नानृतं वदेत्" इतिवत्[4]। तथा चाप्रतिषिद्ध-

---

१. -गम्येत करणे. ग.
२. अत्राहेत्यादिना. ग.
३. व्येत्यनेन कर्तव्यं. ग.
४. इति चे.। . ग.

भाष्यम्

र्थग्रहणम्। कथं पुनरसावनर्थः? हिंसा हि सा; सा च प्रतिषिद्धेति। कथं पुनरनर्थः कर्तव्यतयोपदिश्यते? उच्यते—नैव श्येनादयः कर्तव्यतया विज्ञायन्ते; यो हि

बृहती

तत्र यो निःश्रेयसाय, तस्यैव धर्मता कथं नाम स्यात्; प्रत्यवायहेतोः मा भूत्—इतीदं तर्ह्ययुक्तम्। "कथं पुनरनर्थः कर्तव्यतयोपदिश्यते"— इति। कथं कर्तव्यतयानुपदिश्यमानोऽर्थश्चोदनालक्षणो भवति? कथं चोदनालक्षणस्य सतो[1] धर्मत्वनिवृत्त्यर्थमर्थशब्दान्वय उपपद्यते? पुनरपि च स्पष्टीकरोति— "नैव श्येनादयः कर्तव्यतया विज्ञायन्ते"—इत्युत्तरेण।

पञ्चिका

पुरुषाभिलषितशत्रुवधफलत्वात् श्येननियोगो नानर्थः स्यात्। स हि नियोगोऽनर्थो यः प्रतिषिद्धफलः। न च कामाधिकारे नियोगो यागस्य कर्तव्यतां वदति, फलत एव कर्तव्यतासिद्धेः। यद्यपि नियोगः कर्तव्यतया प्रतीयते; तत्साधनतया च यागः; तथापि कामाधिकारे काम्यमानफलसिद्धिपर्यन्तत्वात् शास्त्रस्य न नियोग एव स्वसिद्ध्यर्थं पुरुषं प्रयुङ्क्ते, रागाक्षिप्तप्रवृत्तित्वात् पुरुषाणां फलत एव प्रवृत्तिसिद्धेः। तथा च यागे फले च प्रवृत्तिर्नैौपादानिकीति तत्प्रतिषेधो न क्रत्वर्थः स्यादिति न श्येनफलस्यापि प्रतिषेधो नानुपपन्न इति निषिद्धफलत्वादनर्थः श्येनादिनियोगश्चोदना-लक्षणः, न धर्म इति न किञ्चिदनुपपन्नमिति। भाष्याक्षरयोजना तु—उभयमिह चोदनया लक्ष्यतेऽर्थोऽनर्थश्चेति। अर्थोऽनिषिद्धफलः, अनर्थश्च निषिद्धफलः। कोऽर्थो यो निःश्रेयसायानिषिद्धफलो ज्योतिष्टोमादिः; कोऽनर्थो यः प्रत्यवायाय निषिद्धाय फलाय श्येनो वज्र इषुरित्येवमादिः। तत्रानर्थो धर्म उक्तो मा भूदित्येवमर्थमर्थ-ग्रहणम्। कथं पुनरसावनर्थ इत्यौपादानिकीं फले प्रवृत्तिं मन्वानस्य चोद्यम्।

---

१. Omitted ग.

भाष्यम्

हिंसितुमिच्छेत्, तस्यायमभ्युपायः—इति हि तेषामुपदेशः; "श्येनेनाभिचरन् यजेत"—इति हि समामनन्ति, न 'अभिचरितव्यम्'—इति। ननु अशक्तमिदं सूत्रमिमावर्थाव-

बृहती

कर्तव्यतया नोपदिश्यन्ते, चोदनालक्षणाश्च—इति सङ्कटमिवोपलक्ष्यते। यदपि च "कथं पुनरसावनर्थः?"—इति प्रश्नमुल्लिख्य "हिंसा हि सा, सा च प्रतिषिद्धा"—इत्युक्तम्, तदपि पूर्वापरविरुद्धम्; "यः प्रत्यवा-याय"—इति प्रत्यवायलक्षणमनर्थत्वमुक्त्वा पुनः प्रतिषेधलक्षणमुक्तवान्। तस्मादसामञ्जस्यम्। अथ प्रतिषेधप्रत्यवाययोरप्यविरोधितोच्यते प्रत्यवायस्य

पञ्चिका

हिंसा हि सा; सा च प्रतिषिद्धेति। कामिनां [1]फले स्वतः प्रवृत्तत्वात् तदर्थितयैव कर्मणि प्रवृत्तिसिद्धेः "न हिंस्यात्" इति निषेधाविरोधः। कथं पुनरसावनर्थः कर्तव्यतयोपदिश्यत इति पूर्वोक्तमेव चोद्याभिप्रायं विवृणोति। उच्यते—नैव श्येनादयः कर्तव्यतया विज्ञायन्त इति। नैव विधिना श्येनादयः कर्तव्यतया प्रतिपाद्यन्ते, फलार्थितयैव प्रवृत्तिसिद्धेः। यो हि हिंसितुमिच्छेत् तस्यायमभ्यु-पाय इति हि तेषामुपदेश इति। फले स्वयं [2]प्रवृत्तेः तदिच्छयैव कर्मण्यपि प्रवर्तत इति भावः। तदेतत् स्फुटीकरोति—श्येनेनाभिचरन् यजेतेति हि समामनन्ति; नाभिचरितव्यमिति इत्यभिचारे स्वतः प्रवृत्तिं दर्शयति। टीकार्थस्तु—अनिरूपित-नियोगव्यापारस्य न निरूपित उपादानलक्षणो नियोगव्यापारः येन तस्यै-तच्चोद्यम्। यागकर्तव्यतानुष्ठा[3]नं विषयो नियोगस्य; तेन नियोगः साध्यते, [4]न तु नियोगो यागस्यानुष्ठानं ज्ञापयति। कथं तर्हि कार्येऽर्थे वेदस्य प्रामाण्यमिति। यदि यागादेः कर्तव्यता न ज्ञाप्यते, कथं कार्येऽर्थे वेदस्य प्रामाण्यम्? [5]अकार्यप्रतिपादकत्वादिति

१. स्वयं फले प्रवृत्तत्वात्तदर्थतयैव. ग.
२. -त्तेस्ततदिच्छयैव. ग.
३. -ष्ठानविषयो नियोगः- ग.
४. ननु. ग.
५. कार्याप्रति- ग.

भाष्यम्

भिवदितुम्----चोदनालक्षणो धर्मः, न इन्द्रियादिलक्षणः; अर्थश्च धर्मः, न अनर्थ इति; एकं हीदं वाक्यम्, तदेवं सति भिद्येत। उच्यते----यत्र वाक्यादर्थोऽवगम्येत, तत्रैवम्; तत्तु

बृहती

प्रतिषेधहेतुत्वात्, तदयुक्तम्; नञर्थस्यानन्यार्थत्वात्; नञर्थपर्यवसाय्येव हि प्रतिषेधविधिः, न पुनस्तदर्थस्यान्यार्थतामवगमयितुं क्षमः।

अत्राह—अनिरूपितनियोगव्यापारस्येदं चोद्यम्। कर्तव्यताविषयो नियोगः, न पुनः कर्तव्यतामाह। कथं तर्हि कार्येऽर्थे प्रामण्यं वेदस्य-इत्युक्तम्? युक्तम्, तद्विषयत्वान्नियोगस्य। कोऽयं विषयविषयिभावः? यस्मिन्नयं पुरुषो

पञ्चिका

भावः। युक्तं तद्विषयत्वान्नियोगस्येति। अत्रेदमभिप्रेतम्--यद्यपि[1] यागादेः कर्तव्यता न ज्ञाप्यते, तथापि यागविषयो नियोगः कर्तव्यतया प्रतिपाद्यत इति कार्यप्रतिपादकत्वाद्युक्तं कार्येऽर्थे[2] वेदस्य प्रामाण्यम्। कोऽयं विषयविषयिभाव इति पृच्छतोऽयमाशयः--कर्मणि प्रेरकत्वान्नियोगस्य कर्मणो विषयत्वम्, नियोगस्य विषयिता। तथा च विधित एव कर्मणि प्रवृत्तिरिति यस्मिन्नर्थे पुरुषो नियुज्यते[3] स विषय इति नैव कर्मणि प्रेरकत्वाद्विषयविषयिभावः। किं तर्हि? यत्तत्र कर्मणि पुरुषो नियुज्यते—कार्यं बोध्यत इति; कार्यबोधनमेव हि पुरुषस्य नियोजनम्। एतदुक्तं भवति—कर्मणि यागादौ कार्यभूतो[4] नियोगः प्रतीयते, न पुनः कर्मण्येव प्रेरयति। एतच्चापूर्वाधिकरणे वक्ष्यामः। तस्मान्नैव विधिः कर्तव्यतामाहेति साधितमर्थमुपसंहरति। विषयतया तूपादत्ते स्वीकरोति। यतश्च विधिः कर्तव्यतां कर्मणो न बोधयति, तस्माद्यद्यदुपादीयते तद्विधे[5]यमिति तन्त्रे व्यवहारः; न पुनर्यत्कर्तव्यतया ज्ञाप्यते, तत्तद्विधेयमिति मीमांसासिद्धान्ते व्यवहारः। ननु मा भवतु यागकर्तव्यताज्ञापनद्वारेणाभिचारे वैधी प्रवृत्तिः, स्वत

---

१. यदि. ग.

२. कार्यं प्रति प्रामाण्यं. ग.

३. Omitted स वि...नियुज्यते. ग.

४. -भूते नियोगः. क.

५. तत्तद्वि- ग.

भाष्यम्

वैदिकेषु, न पुनः सूत्रेषु; अन्यतोऽवगतेऽर्थे 'सूत्रमेवमर्थमिदम्'---इत्यवगम्यते; तेन चैकदेशः सूत्र्यते---इति सूत्रम्;

बृहती

नियुज्यते, स तद्विषयः। तस्मान्नैव विधिः कर्तव्यतामाह, विषयतया तु उपादत्ते। तस्माद्यद्यदुपादीयते, तत्तद्विधेयमिति तन्त्रे व्यवहारः। यत्तूपादान-हेतुतां प्रतिपद्यते, तदधिकृतौ कारणम्। तस्मादधिकारनिमित्तत्वमङ्गीकृत्यैत-

पञ्चिका

एव तत्र किमिति न भवति वैधमुपादानमित्यत्राह—यत्तूपादा[1]नहेतुतां प्रतिपद्यते तदधिकृतौ कारणमिति। अस्यार्थः--अभिचारस्तावदधिकारिविशेषणतया अधिकार-कारणम्; यच्चोपादानहेतुभूतम्, तदधिकारे कारणं भवति; [2]यश्चोपादानहेतुः, नासावुपादेयः; तेनाभिचारे नौपादानिकी प्रवृत्तिरिति सिद्धम्। यत एवाधिकारनिमित्तभूते वैधमुपादानं न भवति, अत एव न हिंस्यादिति प्रतिषेधोऽवतरति। तस्मादधिकार-निमित्तमभिचारम्, अङ्गीकृत्य अभिप्रेत्य[3], अभिहितम्—हिंसा हि सा, सा च प्रतिषिद्धेति। नन्वेवमपि कथं क्रत्वर्थता प्रतिषेधस्य न भवतीत्यत्राह—उपादानगतो हि प्रतिषेधः क्रत्वर्थः स्यात्, [4]प्रतिषेध्यायाः प्रवृत्तेः क्रतुप्रवृत्त्यधीनत्वेन क्रतुसम्बन्धात्; नाधिकारगतः, स्वतन्त्रत्वात् तत्र प्रवृत्तेः। नन्वेवमग्नीषोमीयादिहिंसापि किमिति न प्रतिषिध्येत? ततश्च प्रतिषिद्धानर्थफलानुबन्धित्वाद्यथानर्थतया श्येनादेर्न धर्मत्वम्, एवं प्रतिषिद्धाङ्गानुबन्धित्वात् ज्योतिष्टोमादेरपि स्यात्; तत्राह—न हिंस्याद्भूतानीति चाधिकारग[5]तोऽयं स्वतन्त्रप्रवृत्तिगतोऽयं प्रतिषेधः, नोपादानगतः; औपादानिकी चाङ्गेषु प्रवृत्तिः, तत्र स्वयं प्रागप्रवृत्तेः; फले हि स्वतः प्रवृत्तिः, [6]फलार्थितया प्रधाने, प्रधानोपकारकतयाङ्गेष्विति प्रधानप्रवृत्त्याङ्गेषु प्रवृत्तिरिति प्रधानार्थाङ्गेषु प्रवृत्तिः। अतोऽस्याः क्रतुसम्बन्धात् प्रतिषेधोऽपि क्रत्वर्थः; पुरुषार्थश्चायं

---

१. -दाने हेतुतां. ग.
२. यच्चोपादाने. ग.
३. -त्याभिप्रेत्यैतदुक्तम्. ग.
४. प्रतिषेधाय प्रवृत्तेः क्रतुप्रत्याधानत्वेन. ग.
५. गतोऽयं प्रतिषेधः. ग.
६. फलार्थिनः। या च प्रधाने प्रधानोपकाराय चाङ्गेषु प्रधानप्रवृत्त्यैवाङ्गेषु प्रवृत्तिरिति वक्ष्यते। तस्मात् क्रतुसम्बन्धात्. ग.

भाष्यम्

तत्र भिन्नयोरेव वाक्ययोरिमावेकदेशावित्यवगन्तव्यम् ।

बृहती

क्तम्—"हिंसा हि सा, सा च प्रतिषिद्धा"—इति। उपादानगतो हि प्रतिषेधः क्रत्वर्थः स्यात्, नाधिकारगतः। "न हिंस्याद्भूतानि"—इति चाधिकारगतोऽयं प्रतिषेधः पुरुषार्थश्च । तस्मादभिचारस्यानर्थतां प्रतिपादयितुं क्षमः; नाग्नीषोमीयादेः, क्रत्वर्थत्वात्। अथ कस्मान्नोभयार्थः प्रतिषेधोऽयम्—"न हिंस्यात् भूतानि"—इति? न ह्येकस्य विधेः प्रयोक्तृत्वाप्रयोक्तृत्वे भवतः। अथ क्रत्वर्थ एवायं कस्मान्न भवति? प्रयोक्तृत्वाप्रयोक्तृत्वयोः प्रयोक्तृत्वं श्रौतम्, अनपेक्षावगतेः; अप्रयोक्तृत्वं तु वाक्यान्तरपर्यालोचनयावगम्यम्। न च "न हिंस्यात् भूतानि"—इति वाक्यान्तरावगतिर्भवति, अनारभ्य विधानात् । तस्मादधिकारगत एवायं प्रतिषेधः । भवति च चोदनालक्षणः, तद्विषयत्वात् श्येनविधेः । तस्मात् "उभयमिह चोदनया लक्ष्यते"—इत्येवमाद्युपपन्नार्थं भाष्यम् ।

पञ्चिका

प्रतिषेधः । तस्मादभिचारस्यानर्थतां ज्ञापयितुं क्षमः; नाग्नीषोमीयादेः, क्रत्वर्थत्वात् तस्य। अथ कस्मान्नोभयार्थः क्रतुपुरुषार्थः प्रतिषेधोऽयम् न हिंस्याद्भूतानीति ? तत्रोत्तरम्—न ह्येकस्य विधेः पुरुषार्थत्वपक्षे प्रयोजकत्वम्, क्रत्वर्थत्वपक्षे चाप्रयोजकत्वं संभवति विरोधात्। अथ क्रत्वर्थ एवायं प्रतिषेधः प्रयुक्तिलाघवात् कस्मान्न भवति ? अत्रोत्तरम्—प्रयोजकत्वाप्रयोजकत्वयोः प्रयोजकत्वं श्रौतम्, अनपेक्षावगतेः; प्रथमं हि लिङादयः कार्यं बोधयन्ति ; तच्चानुष्ठापकम्; अप्रयोजकत्वं तु वाक्यान्तरपर्यालोचनावगम्यम् । सन्निहितेऽधिकारविधौ वाक्यान्तरगता लिङादयः तदनुवादका एव । न च—न हिंस्याद्भूतानीति वाक्यान्तरावगतिरस्ति, अनारभ्यविधानात्। तस्मादधिकारगत एवायं प्रतिषेधः, नोपादानगतः। भवति च चोदनालक्षणः श्येनादिनियोगः, तद्विषयत्वात् प्रमेयत्वात् श्येनविधेः; श्येनयागश्च प्रतिषिद्धाभिचारफलत्वादनर्थ इति सिद्धं प्रत्युदाहरणम् । तस्मादुभयमिह चोदनया लक्ष्यत इत्येवमाद्युपपन्नार्थं भाष्यम् ।

भाष्यम्

अथ वा---अर्थस्य सतश्चोदनालक्षणस्य धर्मत्वमुच्यत इत्येकार्थमेवेति ॥

बृहती

"नन्वशक्तमिदं सूत्रम्"—इति लौकिकवैदिकवाक्ययोः विवेकप्रदर्शनार्थम् । "अथ वार्थस्य सतः"— इति यथावाक्यमप्येकार्थत्वं संभवतीति प्रदर्शयितुम् ॥

पञ्चिका

नन्वशक्तमित्येवमादिभाष्यं वाक्यभेददोषेण सूत्रमाक्षिपति ; तच्चानुपपन्नम्, पौरुषेयवचसां प्रमाणान्तरप्रतीतार्थप्रत्यायनपरत्वेन प्रमाणान्तरवशाद्वाक्यभेदादयो दोषा एव न भवन्तीति । तदिदं भाष्यं समर्थयते—**नन्वशक्तमिदं सूत्रमिति लौकिकवैदिकवाक्ययोर्विवेकप्रदर्शनार्थमिति** । अस्यार्थः—यदेवेदं लौकिकवैदिकयोः[1] वाक्ययोः प्रमाणान्तरापेक्षित्वात्[2] निरपेक्षत्वात् प्रमाणान्तरवशेन स्वातन्त्र्येण चार्थप्रत्यायकत्वम्, तदेव चोद्यपूर्वकं भाष्येणोच्यत इति । अथ वार्थस्य सतश्चोदनालक्षणस्येति भाष्यमेकवाक्यत्वमाह, तच्चानुपपन्नम् ; अस्मिन्नपि पक्षे विशिष्टानुवादलक्षणवाक्यभेदापत्तेः । अत्र टीकाकारः प्रतिसमाधत्ते—**अथ वार्थस्य सत इति यथावाक्यमप्येकार्थता सम्भवतीति प्रदर्शयितुम्**[3] । अत्रायमभिप्रायः—--विध्यावृत्तिलक्षणो वाक्यभेदो नास्ति[4], अन्वयभेदमात्रं तु भवत्येवेति ॥

॥ इति द्वितीयं धर्मलक्षणाधिकरणम् ॥

---

१. वैदिकयोर्विवेक- ग.
२. -रापेक्षनिरपेक्ष- ग.
३. प्रदर्शितं. ग.
४. नास्तीत्यन्वयः । भेद- ग.

# तस्य निमित्तपरीष्टिः ॥ ३ ॥

भाष्यम्

उक्तमस्माभिः चोदनानिमित्तं धर्मस्य ज्ञानम्---इति; तत् प्रतिज्ञामात्रेणोक्तम् । इदानीं तस्य निमित्तं परीक्षिष्यामहे---किं चोदनैव, उत अन्यदपीति ; तस्मान्न तावन्निश्चीयते 'चोदनालक्षणोऽर्थो धर्मः' इति ॥

तदुच्यते----

बृहती

"तस्य निमित्तपरीष्टिः" इति हेत्वभिधानावसरः कथ्यते ॥

पञ्चिका

तस्य निमित्तपरीष्टिरिति हेत्वभिधानावसरः कथ्यत इति । अनेन सूत्रं तात्पर्यतो व्याचष्टे । चोदनालक्षणसूत्रे[1] श्रुत्यर्थाभ्यां वेदार्थस्वरूपं तत्र च प्रमाणं प्रतिज्ञातम्; तत्र किं स्वरूपं तावत् कथ्यतां[2] भेदाभेदरूपेण, उत प्रमाणप्रतिज्ञायां[3] हेतुरिति संशये प्रधानत्वात् स्वरूपस्य तदेव भेदाभेदाभ्यां कथनीयमिति प्राप्ते[4] अनपेक्षत्वसव्यपेक्षत्वात् भेदाभेदनिर्णयस्य प्रामाण्यहेतुरनपेक्षत्वमेवाधुना कथनीयमिति सूत्रेण कथ्यते । तथा च भाष्यम्---"इदानीं तस्य निमित्तं परीक्षिष्यामहे" इति । तस्मादनपेक्षत्वरूपप्रामाण्यहेत्वभिधानावसरकथनं सूत्रेण क्रियत इति ॥

॥ इति तृतीयं निमित्तपरीक्षाधिकरणम् ॥

---

१. -सूत्रेण. ग.
२. भेदाभेदरूपेण कथ्यताम्. ग.
३. -प्रतिज्ञातायां. ग.
४. प्राप्ते भेदाभेदनियमस्यानपेक्षत्वरूपप्रामाण्यहेत्वभिधाना- ग.

# सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४॥

भाष्यम्

इदं परीक्ष्यते—प्रत्यक्षं तावदनिमित्तम्। किं कारणम्? एवंलक्षणकं हि तत्, सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म,

बृहती

कथं पुनः कार्येऽर्थे चोदनैव निमित्तम्? अन्यस्य प्रत्यक्षादेरसंभवात्। कथमसंभवतः?

"सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्।" अथ कस्मादनुमानादेरनिमित्तत्वम्? अनुमानादीनां हि निमित्तग्रहणपूर्वकं स्वार्थे प्रामाण्यम्; निमित्तं चात्र प्रत्यक्षग्राह्यमेव

पञ्चिका

कथं पुनरसंभवः? सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् इति। अनेन वर्तमानोपलम्भनत्वात् प्रत्यक्षस्य, कार्यस्य चावर्तमानत्वादनिमित्तत्वमुक्तम्। अत एव पृच्छति—अथ कस्मादनुमानादेरनिमित्तत्वमिति। अयमभिप्रायः—यद्यपि वर्तमानैकविषयत्वात्प्रत्यक्षमनिमित्तम्; तथाप्यनुमानादीनामवर्तमानविषयाणामपि कथमनिमित्तत्वमिति। अनुमानादीनां हि निमित्तग्रहणपूर्वकमिति। अयमाशयः—लिङ्गसादृश्यादीनां[1] निमित्तानां ग्रहणे सति स्वार्थेऽनुमेयादावनुमानादीनि प्रवर्तन्ते। कार्ये चार्थे वर्णादि निमित्तम्; नान्यत्, तस्य प्रत्यक्षप्रतीतत्वादन्यस्य चाप्रतीयमानत्वात्; वर्णादेश्च न लिङ्गत्वादिकमुपपद्यते। तस्माल्लिङ्गादिग्रहणमन्तरेण प्रतीयमानत्वान्न कार्येऽर्थेऽनुमानादेरपि निमित्तत्वम्। भाष्यं चैवं योज्यम्। प्रत्यक्षवर्णादिद्वारत्वात्कार्यस्य तस्य च लिङ्गत्वाद्यनुपपत्तेरनुमानादीनामपि कार्येऽनिमित्तत्वमिति।

---

१. -सदृशादीनां. क.

भाष्यम्

तत् प्रत्यक्षम्; सति इन्द्रियार्थसम्बन्धे या पुरुषस्य बुद्धिर्जायते, तत् प्रत्यक्षम्, भविष्यंश्चैषोऽर्थो न ज्ञानकालेऽस्तीति; सतश्चैतदुपलम्भनम्, नासतः। अतः प्रत्यक्षमनिमित्तम्। बुद्धिर्वा, जन्म वा, सन्निकर्षो वेति नैषां कस्यचिदवधारणार्थमेतत्

बृहती

वर्णादि; तस्मात्तदप्यप्रमाणम्। ननु शाब्दं प्रमाणं प्रमाणान्तरसापेक्षमेव लोकव्यवहार उपलभ्यते। सत्यम्; प्रमाणान्तरविषयमुपलभ्यते, न तु प्रमाणान्तरसापेक्षम्; स्वार्थे ह्यौत्पत्तिकी शब्दशक्तिः। तदुक्तम्—

पञ्चिका

ननु च शाब्दं प्रमाणं प्रमाणान्तरसापेक्षमेव लोकव्यवहार उपलभ्यत इति। पौरुषेये हि वाक्ये प्रमाणान्तरसापेक्षमेव शाब्दम्। एतदेव वाक्यस्य पौरुषेयत्वम्, यत्प्रमाणान्तरप्रतीतार्थप्रत्यायनपरतया प्रयोगः; न वर्णादिकार्यता। लोकावगतसामर्थ्यश्च शब्दो वेदेऽर्थबोधकः। तेन वेदेऽपि शब्देन प्रमाणान्तरसापेक्षमेव कार्यं प्रत्याय्यते। न च तत्प्रमाणान्तरमस्ति इत्यभाव एव कार्यस्य प्रसक्तः। सत्यम्; प्रमाणान्तरविषयमुपलभ्यते, न तु प्रमाणान्तरसापेक्षम्; स्वार्थे ह्यौत्पत्तिकी शब्दशक्तिः। अस्यार्थः—प्रमाणान्तरप्रतीतमर्थं[1] शब्दो ब्रवीति स्वरूपेणैव, न तु प्रमाणान्तरप्रतीतत्वेनैव। एतदुक्तं भवति—यद्वस्तुतः[2] प्रमाणान्तरप्रतीतम्, तदाह; न तु प्रमाणान्तरप्रतीतत्वमेवाहेति। यस्मात् स्वार्थ एव शब्दस्य स्वाभाविकी शक्तिः। तेनानपेक्षार्थमात्रप्रत्यायकत्वादसत्यपि[3] प्रमाणान्तरे शब्द एव कार्येऽर्थे प्रमाणमिति स्थितम्।

ननु कथं वृद्धव्यवहाराप्रसिद्धं स्वार्थमात्रे शब्दस्य सामर्थ्यम्? अत्र ब्रूमः—शब्दस्य स्वार्थप्रतिपादकत्वे स्वाभाविकेऽपि प्रमाणान्तरप्रतीतार्थपरतया प्रयुक्तत्वात् सापेक्षार्थप्रतिपादकत्वमुपपद्यते; तथाभूतस्य च लिङ्गत्वमपि घटते,

---

१. —रापेक्षस्वार्थप्रती—ग. त्वमेवाह. ग.

२. वस्तुतः प्रमाणान्तरप्रतीत-

३. असत्यर्थे प्रमाण- ग.

भाष्यम्

सूत्रम्; सति इन्द्रियार्थसम्प्रयोगे, नासति---इत्येतावद-
वधार्यते ; अनेकस्मिन्नवधार्यमाणे भिद्येत वाक्यम्। प्रत्यक्ष-
पूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामप्यकारणत्वमिति ॥

अभावोऽपि नास्ति, यतः----

पञ्चिका

प्रसिद्धिकारणत्वात्प्रतीतिविषयभूतस्यार्थस्य; वाक्यप्रयोगो हि पुरुषाणां प्रतीतार्थ-पूर्वकः। सत्यमेवमेवैतत्[1]; तथापि लोके स्वातन्त्र्यमदृष्टपूर्वं न शक्यते कल्पयितुम्। उच्यते—लिङादिशब्दस्तावत् प्रमाणान्तराविषयं कार्यमर्थमवबोधयति। शब्दान्त-राण्यपि च कार्यस्यानन्यार्थत्वात्तत्परानेव स्वार्थानभिदधति। तदन्वयिनश्च तेऽप्य-र्थाः प्रमाणान्तरस्याविषयभूताः। तेनार्थस्वभावालोचनया तावन्न सापेक्षता।

ननु च लोके प्रमाणान्तरप्रतीतार्थविषयत्वात्प्रयोगस्य कथमनन्यगोचरे[2] कार्ये लिङादिप्रयोगः? सत्यमेवं पौरुषेये, किन्तु वेदे कार्याभिधायकत्वं तावल्लिङा-देरवसीयते[3]। न चापौरुषेयत्वाच्छक्यं वक्तुम्—कथमनन्यगोचरमर्थमाहेति।

ननु चानन्यगोचरे कथं सम्बन्धग्रहः? अगृहीतसम्बन्धस्य च कथमभि-धायकत्वम्? अत्रोच्यते—लिङादियुक्तवाक्यश्रवणानन्तरं तद्भावभाविनीं[4] प्रयोज्य-वृद्धस्य प्रतिपत्तिं प्रवृत्त्यानुमाय पार्श्वस्थः—प्रवृत्तिहेतुभूतोऽनेनास्माच्छब्दादर्थः प्रतीतः—इति कल्पयति। प्रवृत्तिहेतुभावश्च[5] कार्यावगतेर्दृष्टः; सर्वो हि यावत् ममेदं कार्यम्—इति नावबुध्यते, तावन्न प्रवर्तते। नन्वपेक्षितोपायावगमा-त्प्रवृत्तिः। मैवम्; अपेक्षितोपायोऽपि यावत्कार्यतया नावसीयते, तावन्न प्रवर्तते। नन्वपेक्षितोपायतैव कार्यता। न; कार्यता हि कृतिसाध्यता, अपेक्षितोपायता हि साधनता; अन्या हि साधनता, अन्या साध्यता; किन्तु लोके श्रेयःसाधनतया कार्यावगमः। तेन च रूपेण कार्याभिधायका लिङादयः। यदि परं पौरुषेये वाक्ये सापेक्षकार्यावबोधकत्वं प्रमाणान्तरावगम्या च श्रेयःसाधनभूतायाः क्रियाया एव कार्यता, तेन लोके क्रियैव कार्यतया शब्देनाभिधीयते; वेदे तु स्वर्गकामादि-

---

१. एवमेतत्. ग.
२. अन्यागोचर- ग.
३. न त्वप्रवृत्तिः. ग.
४. तद्भाविनीं. ग.
५. प्रतिपत्ति- ग.

**औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥**

भाष्यम्

औत्पत्तिकः—इति नित्यं ब्रूमः। उत्पत्तिर्हि भाव उच्यते लक्षणया। अवियुक्तः शब्दार्थयोर्भावः सम्बन्धेन, नोत्पन्नयोः पश्चात् सम्बन्धः, औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः। तस्य अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य। कथम्? उपदेशो हि भवति। उपदेशः—इति विशिष्टस्य शब्दस्योच्चारणम्। अव्यतिरेकश्च ज्ञानस्य; न हि तदुत्पन्नं ज्ञानं विपर्येति; यच्च नाम ज्ञानं न विपर्येति, न तत् शक्यत वक्तुम्—नैतदेवमिति; तथा भवति, यथा विज्ञायते; न तथा भवति, यथैतन्न विज्ञायते; तथैतदिति अन्यदस्य हृदयेऽन्यद्वाचि स्यात्; एवंवदतो विरुद्धमिदं गम्यते—अस्ति नास्ति चेति। तस्मात्तत्प्रमाणम्, अनपेक्षत्वात्। न ह्येवं सति प्रत्ययान्तरमपेक्षितव्यम्, पुरुषान्तरं वापि; स्वयंप्रत्ययो ह्यसौ। बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्यते बादरायणं पूजयितुम्, नात्मीयं मतं पर्युदसितुम्॥

वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयांचकार 'तस्य निमित्तपरीष्टिः' इत्येवमादिम्। न परीक्षितव्यं निमित्तम्; प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि, तदन्तर्गतं च शास्त्रम्; अतस्तदपि न परीक्षितव्यम्। अत्रोच्यते—व्यभिचारात् परी-

भाष्यम्

क्षितव्यम्, शुक्तिका हि रजतवत् प्रकाशते यतः; तेन प्रत्यक्षं व्यभिचरति, तन्मूलत्वाच्चानुमानादीन्यपि । तत्रापरीक्ष्य प्रवर्तमानोऽर्थात् विहन्यते, अनर्थं चाप्नुयात् कदाचित् । नैतदेवम्; यत् प्रत्यक्षम्, न तत् व्यभिचरति; यत् व्यभिचरति, न तत् प्रत्यक्षम् । किं तर्हि प्रत्यक्षम्? तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम्; यद्विषयं ज्ञानम्, तेनैव संप्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म सत्प्रत्यक्षम्; यदन्यविषयज्ञानमन्यसंप्रयोगे भवति, न तत् प्रत्यक्षम् । कथं पुनरिदमवगम्यते—इदं तत्संप्रयोगे, इदमन्यसंप्रयोगे इति? यत् न अन्यसंप्रयोगे, तत् तत्संप्रयोगे; एतद्विपरीतमन्यसंप्रयोगे इति । कथं ज्ञेयम्? यत् शुक्तिकायामपि रजतं मन्यमानः—रजतसंनिकृष्टं मे चक्षुः—इति मन्यते । बाधकं हि यत्र ज्ञानमुत्पद्यते—नैतदेवम्, मिथ्याज्ञानम्—इति, तत् अन्यसंप्रयोगे, विपरीतं तत्संप्रयोगे इति । प्राग्बाधकज्ञानोत्पत्तेः कथमवगम्यते? यदा न तत्काले सम्यग्ज्ञानस्य मिथ्याज्ञानस्य वा कश्चिद्विशेषः । यदा हि चक्षुरादिभिरुपहतं मनो भवति, इन्द्रियं वा तिमिरादिभिः, सौक्ष्म्यादिभिर्बाह्यो वा विषयः, ततो मिथ्याज्ञानम्; अनुपहतेषु हि सम्यग्ज्ञानम्; इन्द्रियमनोऽर्थसंनिकर्षो हि सम्यग्ज्ञानस्य हेतुः; असति तस्मिन्मिथ्याज्ञानम्, तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः; दुष्टेषु हि ज्ञानं मिथ्या भवति । कथमवगम्यते? दोषापगमे संप्रतिपत्तिदर्शनात् । कथं दुष्टादुष्टा-

बृहती

"औत्पत्तिकस्तु" इति। "वृत्तिकारस्त्वन्यथेमं ग्रन्थं वर्णयांचकार" —इति व्याख्यानान्तरोपन्यासः कस्मै प्रयोजनाय ? यदि तावद्दूषणाभिप्रायः; तदयुक्तम्, सम्यगर्थाभिधानात् । तदभ्युपगतिश्च सूत्रत्रयस्यार्थान्तरप्रदर्शनार्थमिति चेत्, तत्रापि वृत्तिकारग्रहणमयुक्तम् । अर्थान्तरकथनेन वा विना किं न सिध्यति ? उच्यते—द्वयमप्यस्ति दूषणमर्थान्तरकथनं च । किमत्र दूषितम् ? "निमित्तपरिक्षणं न कर्तव्यम्" इत्येतत्तावदयुक्तम्, नञोऽश्रुतत्वात्, अस्त्यर्थस्य नित्यप्राप्तेः । यदपि हेत्वभिधानम्—

पञ्चिका

पदान्वयालोचनया स्वर्गसाधनानुगुणकालान्तरस्थायिकार्याभिधानसामर्थ्यमवधार्यते । न च तत्प्रमाणान्तरावगम्यमिति कार्यार्थतयैवानपेक्षत्वम्[1] । न च प्रमाणान्तरानवगम्यमानकार्यार्थतैव प्रतीयमाना त्यागमर्हति, अनपेक्षार्थाभिधायकत्वेऽपि लोके सापेक्षत्वोपपत्तेः ।

नन्वेवं तर्हि वृद्धव्यवहारप्रसिद्धार्थग्रहणं वेदे न स्यात् । मैवम्; व्यवहारप्रसिद्ध एवार्थः; स तु प्रमाणान्तरनिरपेक्ष इति स्थितम् ॥

॥ इति तुरीयं प्रत्यक्षलक्षणाधिकरणम् ॥

"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति। वृत्तिकारस्तु । यदि तावद्दूषणाभिप्रायमिति । यदि परमतं दुष्टमित्यभिप्रेत्योपन्यासः, सोऽयुक्तः, सूत्रत्रयस्यापि सम्यगर्थत्वात् । उपयोग्यर्थान्तरवर्णनार्थत्वेऽपि वृत्तिकारग्रहणानर्थक्यम्, अस्याप्यर्थस्य स्वाभिप्रेतत्वात् ; अर्थान्तरकथनस्याप्युपयोगो न दृश्यते । उच्यते—द्वयमप्यस्ति[2] ; तेन वृत्तिकारग्रहणं परमतत्वप्रदर्शनार्थम् । निमित्तपरीक्षानिषेधस्तावदयुक्तः, सूत्रे नञोऽश्रुतत्वात्, क्रियापदा[3]श्रवणे चास्त्यर्थस्य नित्यप्राप्तेः । योऽपि हेतुः प्रमाणानां प्रसिद्धत्वं नाम, सोऽप्यसिद्धः, वादिनां प्रमाणविषयसंख्यास्वरूपादिषु वि[4]वादात्—केचिदेकं द्वे त्रीणि चत्वारि पञ्च षट्[5] चेति सङ्ख्याविवादः; स्वरूपविवादस्तु "कल्पनापोढमभ्रान्तं

---

१. -तैवानपेक्षत्वम्. ग.
२. अस्तीति वृत्तिकार- ग.
३. -पदाश्रयणे. ग.
४. विचारात्. ग.
५. Omitted षट्. क.

बृहती

"प्रसिद्धानि प्रमाणानि"—इति, तदप्ययुक्तम्, विप्रतिपत्तिदर्शनात्। स्वयं चोक्तम्—"ननु व्यभिचरति प्रत्यक्षम्"—इति। निमित्तपरीक्षणेन चाव्यभिचारितोक्ता। सूत्रकारेण च तदेव प्रतिज्ञातं परीक्ष्यतया; कथमत्र नञोऽध्याहार उपपद्यते? वक्तव्यं च निरालम्बनतानिराकरणार्थं च, तच्च नोक्तं वृत्तिकारेण; तस्माद्दूषणम्। वक्तव्यं पुनः किमन्यदर्थान्तरम्? पूर्वोक्तस्य सूत्रत्रयार्थस्य साधनभूतमन्यदर्थान्तरमनेनोक्तं प्रदर्शयितुम्। तथा च तत्सतोर्व्यत्ययः, लक्षणाभिधानं च सर्वप्रमाणानाम्॥

पञ्चिका

प्रत्यक्षम्" इत्यादि; विषयविवादः सामान्यमेवानुमानस्य विषयः, इत्यवंविधः। स्वयं चोक्तम्—"ननु व्यभिचरति प्रत्यक्षम्" इति। तेन प्रमाणान्यपि व्यभिचरन्तीति विप्रतिपत्तिरस्ति। निमित्तपरीक्षणेन चाव्यभिचारितोक्ता।[1] सिद्धान्तेऽपि यदव्यभिचारित्वमुक्तम्, तत् परीक्षां कृत्वैव; तेन परीक्षानिषेधः स्वानुष्ठानविरुद्धः।[2] सूत्रकारेण च तदेव प्रतिज्ञातं परीक्ष्यतया चोदनालक्षणसूत्रेणार्थात् कार्येऽर्थे चोदनां प्रमाणं प्रतिजानानेन प्रमाणमेव परीक्ष्यतया प्रतिज्ञातम्। अन्यथा लोकसिद्धत्वात् किं प्रमाणप्रतिज्ञया? सूत्रकारस्य च प्रमाणप्रतिज्ञाप्यार्थी संमता, कार्यो धर्मः—इति सिद्धे चोदनालक्षणग्रहणात् प्रामाण्यहेत्वभिधानाच्च। वक्तव्यं च निमित्तपरीक्षणम्; अन्यथा प्रत्यक्षस्य [3]निमित्तपरीक्षणेनाव्यभिचारित्वेऽप्रदर्शिते निरालम्बनता ज्ञानानामापद्येत। **वक्तव्यं पुनः किमन्यदर्थान्तरम्।** किमर्थमन्यदर्थान्तरं सूत्रत्रयस्य वक्तव्यं पुनरित्यर्थः। एतदुक्तं भवति—किमर्थं सूत्रत्रयस्यापरमर्थान्तरमुच्यते? यावता स्वातन्त्र्येणैव किमित्येतन्नोच्यते [4]पूर्वोक्तसूत्रत्रयार्थाक्षेपलब्धमिति? **पूर्वोक्तसूत्रत्रयार्थस्य साधनभूतमन्यदर्थान्तरमनेनैवोक्तमिति[5] प्रदर्शयितुम्।** अस्यार्थः—यदेवेदं पूर्वसूत्रत्रयम्, अनेनैव पूर्वोक्तार्थसाधनमर्थान्तरमुक्तम्; न पुनरर्थाक्षेपलभ्यमिदमिति[6] दर्शयितुं पूर्वोक्तसूत्रत्रयार्थत्वेनैवार्थान्तरमु-

१. निमित्तमिति. क.
२. -श्चानुमानविरुद्धः. ग.
३. Omitted निमित्त- ग.
४. उच्यते—पूर्वो- ग.
५. -मनेनोक्तमिति. ग.
६. Omitted इदम्. ग.

भाष्यम्

वगम इति चेत् ; प्रयत्नेनान्विच्छन्तो न चेद्दोषमवगच्छेम, प्रमाणाभावाददुष्टमिति मन्येमहि । तस्मात् यस्य च दुष्टं

बृहती

यत्पुनः प्रत्यक्षलक्षणस्यान्ते "यस्य च दुष्टं करणम, यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्यय ; नान्यः"—इत्यवधारणम्, किमनेनावधार्यते ? उच्यते—यस्येदं द्वयं नास्ति, नासौ मिथ्याप्रत्यय इत्यवधार्यते । कः पुनरसौ ? नामजात्यादियोगेनोत्पद्यते यः । न चेदमस्ति तस्य । तथा च परैर्नार्थान्तरालम्बनतेष्यतेऽस्य,

पञ्चिका

क्तम्; न स्वातन्त्र्येणेति । किं पुनस्तत् यदर्थतो न लभ्यते ? तत्राह—तथा च तत्सतोर्व्यत्ययः लक्षणाभिधानं च सर्वप्रमाणानाम् । अनिमित्तपरे हि सत्संप्रयोगसूत्रे पूर्वव्याख्याने तत्सतोर्व्यत्ययो न लभ्यते ; ततश्चान्यविषयसंप्रयोगेऽ[1]न्यविषयज्ञाने प्रत्यक्षत्वा[2]पत्तेर्निरालम्बनपक्षसिद्धेः पूर्वोक्तं सर्वमेव न सिध्येत् , लक्षणाभिधानं च सर्वप्रमाणानाम् । पूर्व[3]व्याख्याने हि न लक्षणपरता, किन्तु अनिमित्तपरता । अस्मिंस्तु व्याख्याने लक्षणपरत्वेन तत्संप्रयोगसूत्रस्य प्रदर्शनार्थतया सर्वप्रमाणलक्षणाभिधानं सिध्यति । सर्वप्रमाणलक्षणोपयोगस्त्वव्यभिचारप्रदर्शनेन निरालम्बनत्वनिरासः ॥

"यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययः ; नान्यः"—इत्यनेन भाष्येण बाधकारणदोषज्ञानाभावेऽपि मिथ्याप्रत्ययः पूर्वपक्षिणा शङ्कितो निराकृत इति प्रतिभाति, "स एवासमीचीनः प्रत्ययः"—इत्यवधारणात् । तत्र टीकाकारः पृच्छति—किमनेनावधार्यते—इति । उत्तरम्—यस्येदं द्वयं नास्तीति । कः पुनरसाविति। पुनरपि विशेषनिर्धारणाय प्रश्नः । नामजात्यादियो[4]जनयोत्पद्यते य इति । विशेषणोत्तरम् ।

---

१. प्रयोगेऽप्यन्य- ग.
२. प्रत्यक्षत्वान्निरा- ग.
३. पूर्वोक्तव्या- ग.
४. योगेनोत्पद्यते- ग.

भाष्यम्

**करणम्, यत्र च मिथ्येति प्रत्ययः; स एवासमीचीनः प्रत्ययः, नान्य इति ॥**

बृहती

**निर्विकल्पकप्रमितविषयतैवेष्यते विकल्पमात्रमेवायमिति वदद्भिः । स एव च संवृतिरित्युक्तम् । न चास्मिन्नपि राद्धान्ते निर्विकल्पकप्रत्यय-**

पञ्चिका

नामयोगेन यथा—देवदत्तः—इति ; जातियोगेन यथा—गौरयम्—इति ; गुणयोगेन यथा—शुक्लः—इति[1] ; क्रियायोगेन—पचतीति, द्रव्ययोगेन—दण्डीति । न चेदं द्वयमस्ति तस्य; न हि लौकिकानां बाधकज्ञानं कारणदोषज्ञानं वाऽत्र विद्यते, परीक्षकाणां तु यौक्तिको बाधोऽस्त्येव । कथं पुनरवगम्यते--नामजात्यादियोगेनोत्पद्यमानस्य[2] निर्विशङ्कितज्ञानस्य विकल्पसंज्ञकस्य लौकिकानां बाधकारणदोषज्ञानाभावेऽपि यौक्तिकबाधबलेन परेषां मिथ्याभावोऽभिमत इति[3], तत्राह— **तथाचेत्यादि** । अर्थान्तरभूता व्यक्तितो जात्यादयो ये, ते विकल्पप्रत्ययस्यालम्बनमिति परैर्नेष्यते; किन्तु निर्विकल्पकेन प्रत्ययेन प्रथमभाविनेन्द्रियजेन[4] या व्यक्तिः प्रतीता, सैव सविकल्पकेन प्रत्ययेनाप्यालम्ब्यते ; तामेव त्ववलम्बमानं[5] जात्यादियोगितया विकल्पमात्रमेवेदम्, न वस्त्वन्तरावच्छेदकमुत्पद्यते[6]—इति परैरुक्तम् । एवं च ब्रुवाणैर्मिथ्यात्वमभ्युपगतमिति गम्यते । स एव च संवृतिरित्युक्तम् । स एव विकल्पप्रत्ययः संवृतिरिति च यस्मात्परैरुक्तं तस्मात्परैर्मिथ्यात्वमुक्तम्[7] । केन पुनः कारणेन[8] विकल्पप्रत्ययः संवृतिरित्युच्यते ? संव्रियतेऽनेनेति; विकल्पप्रत्ययो हि स्वाकारेण जात्यात्मकेन पररूपं स्वलक्षणस्यात्यन्तिकभेदं संवृणोत्याच्छादयति । तदाह कीर्तिः—

१. शुक्लोऽयमिति. ग.
२. -मानस्य ज्ञानस्य. ग.
३. इत्यत्राह. ग.
४. -नैन्द्रियकेन. ग.
५. -वचालम्बमान. ग.
६. -बाह्यवस्त्ववच्छेदक- ग.
७. परैर्मिथ्यात्वमिष्टम्. ग.
८. प्रकारेण. ग.

बृहती

प्रमितविषयतैवेष्यते सविकल्पकानां जात्यादिप्रत्ययानाम् । इयांस्तु विशेषः—पूर्वानुभूतार्थानुसन्धानेनास्मिन्नपि निर्विकल्पकप्रत्ययप्रमितविषयता नापैति । अनुसन्धानप्रत्ययस्यापि नार्थान्तरानुसन्धानेन विषयीतरत्वं सविकल्पकस्य शक्यते वक्तुम् । तस्मादर्थान्तरविषयत्वात् नैवास्य मिथ्याशङ्कोपपद्यते, द्वयस्य चाभावतः । तस्मात्तदर्थमिदमवधारणं

पञ्चिका

"पररूपं स्वरूपेण यया संव्रियते धिया ।
एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः ॥
तया संवृतनानात्वात्प्रकृत्या भेदिनः स्वयम् ।
अभेदिन इवाभान्ति भावा रूपेण केनचित् ॥
तस्यास्त्वभिप्रायवशात्सामान्यं संप्रकीर्तितम् ।
तदसत्परमार्थेन यथा सङ्कल्पितं तथा ॥" इति ।

न चास्मिन्नपि राद्धान्त इति । परेषामपि राद्धान्ते नैवास्य मिथ्याशङ्कोपपद्यते; यस्मान्निर्विकल्पकप्रत्ययप्रमितमेव स्वलक्षणं सविकल्पकानां विषय इष्यते। स्वलक्षणं च परमार्थतोऽस्त्येव; सदर्थविषयं च ज्ञानं सत्यम्, न मिथ्या यथा निर्विकल्पकज्ञानम्, इयांस्तु विशेषः—निर्विकल्पकेन सह यत्पूर्वानुभूतं स्वलक्षणं तस्य यदनुसन्धानमर्थान्तरेण घटनं योजनम्, तेनेदमुत्पद्यते सविकल्पकज्ञानम्; निर्विकल्पकज्ञानं तु न पूर्वानुभूतानुसन्धानेनोत्पद्यते। अस्मिन् परसिद्धान्ते निर्विकल्पकप्रमितविषयता; स्वलक्षणविषयता पुनः समानैवानुसन्धानप्रत्ययस्यापि । समानविषयत्वे च सविकल्पकं मिथ्या, निर्विकल्पकं सत्यमिति न युक्तम्, द्वयस्य चाभावः; न हि लैकिकानां द्वयमिदमस्तीति। तस्मान्मिथ्यात्वशङ्काभावान्नास्ति पूर्वः पक्ष इति निराकरणमनुपयोगि ।

---

१. स्वकार्य- ग.
२. तस्याश्चाभि- ग.
३. ननु चास्मिन्. क. ग.
४. शङ्कोपजायते. ग.
५. तल्लक्षणं. ग.
६. विषयं तु ज्ञानं. ग.
७. अर्थान्तरघटनं. ग.
८. पूर्वानुसन्धानेन. ग.
९. अस्मिन्नपि सिद्धान्ते. ग.
१०. प्रमितविषयतया. क.

बृहती

मन्दतरफलमिव प्रतिभाति। ननु च त्वयैवेदमुक्तम्—इयांस्तु विशेषः—इति; अनेन विशेषेण परैरिदमुक्तम्—अनुसन्धीयमानार्थसंहितार्थान्तरविषयत्वात् नैव स्वैकप्रत्ययविषयोऽर्थः परिच्छेद्यतामस्य प्रत्ययस्य प्रतिपद्यते । आलम्बनतां तु प्रतिपद्यते । तस्मान्न परिच्छेदकत्वमनुसन्धानप्रत्ययस्येच्छन्ति स्मृतिवदिति वदन्तः। इष्यते चास्मिन् राद्धान्ते सविकल्पकस्यापि प्रमाणत्वम् । न च परेषामप्यनुसन्धानप्रत्यये विकल्पमात्रवादिनां द्वयमिदमस्तीति सिद्धम् । तस्मादस्य प्रमाणत्वमिच्छता कृतमिदमवधारणम् । कथं पुनरनुसन्धानप्रत्ययं कल्पनां मन्यन्ते ? जातिजातिमतोरभेदात् तदनुसन्धान-

पञ्चिका

ननु च त्वयैवेति पूर्वपक्षसमर्थनम्। अनेन विशेषेण जात्याद्यनुसन्धानेन जायत इति । परैरिदमुक्तम्—निर्विकल्पकेन यत् स्वलक्षणं बाह्यार्थरूपं प्रतीयते तद्विकल्पप्रत्ययस्य परिच्छेद्यं न भवति ; आलम्बनं तु भवतीति । एषोऽभिप्रायः—न हि बाह्यं वस्तु जात्यादिभिर्योजयितुं शक्यते, तस्य विकल्पैरसंस्पर्शात् ; किन्तु तदगृह्णन्तोऽपि विकल्पास्तद्ग्रहाभिमानिनो भासन्ते, तदभिमानानुरोधेन तदालम्बना इत्युच्यन्ते ; परमार्थतस्तु निरालम्बना एवेति । एवं मिथ्यात्वमुक्तमेव च परैः । तस्मान्न परिच्छेदकत्वमस्यानुसन्धानप्रत्ययस्येच्छन्ति स्मृतिवदेतद्विकल्पज्ञानमिति वदन्तः। यथा स्मृतिज्ञानं बाह्यं वस्तु न गृह्णाति अस्फुटावभासित्वात् , बाह्यस्य स्फुटरूपत्वात् ; न च ग्राहकसामग्रीभेदेन स्फुटास्फुटावभासभेदः, वेद्याभेदात् ; अतो बाह्यावभासाभावेऽपि तदध्यवसायित्वेनोपजायमानं तदालम्बनमिव भाति स्मृतिज्ञानम् ; तथा विकल्पज्ञानमपि । तदुक्तं कीर्तिनैव—"शास्त्रचिन्तकाः खल्वेवं विवेचयन्ति, न प्रतिपत्तारः । ते तु दृश्यविकल्पावर्थावेकीकृत्य बाह्यमेवानुमन्यमानाः प्रवर्तन्ते" इति । इष्यते चास्मिन् राद्धान्ते मीमांसकानां सिद्धान्ते सविकल्पकस्यापि प्रमाणत्वम् । न च परेषामनुसन्धानप्रत्यये विकल्पमात्रवादिनां द्वयमिदं बाधकारणदोषरूपं लौकिकानां साक्षादस्तीति सिद्धं सर्वेषाम् । तस्मात् पूर्वपक्षसंभवादस्य विकल्पप्रत्ययस्य प्रमाणत्वमिच्छता भाष्यकारेण कृतमिदमवधारणम्—"स एवासमीचीनः प्रत्ययः" इति ।

---

१. तद्गुणाभिमानिनः ग.

बृहती

**प्रत्यये भेदाभ्युपगमाच्च । अयं गौः—इति लौकिकाः प्रतिपद्यन्ते, न—इदं गोत्ववद्द्रव्यम्—इति । ननु च भेदप्रत्ययेऽप्यभेदोपचारो दृष्टः—कुन्तान् प्रवेशय—इति । सत्यमभेदोपचारः ; न पुनः—अयं गौः—इत्यत्रोपचार-बुद्धिर्लौकिकानाम् । तस्मादुपचरितोऽयं प्रत्यय इति न शक्यते वक्तुम् ।**

पञ्चिका

**कथं पुनरनुसन्धानप्रत्ययं कल्पनां मन्यन्ते ?** अयमभिप्राय[1]—जात्यादिकं हि परमार्थतोऽस्त्येव; तद्विशिष्टतया स्वलक्षणं गृह्यमाणं पारमार्थिकमेव ; अतः सत्यार्थप्रतीतिः कल्पना न भवतीति । पूर्वपक्षी त्वाह—**जातिजातिमतोरभेदादनु-सन्धानप्रत्यये भेदाभ्युपगमाच्चेति** । अस्यार्थः[2]—जातिर्जातिमतः स्वलक्षणाद्भिन्ना नास्ति ; अथ च विकल्पप्रत्यये भिन्नैव प्रतिभाति तद्विशिष्टत्वेनावगतेः, कथं पुनरवगम्यते भिन्ना जातिर्न भवतीति ? तत्राह—**अयं गौः—इति हि लौकिकाः प्रतिपद्यन्ते, न—इदं गोत्ववत् द्रव्यम्—इति** । अस्यार्थः—जातिर्जाति-मतोऽभिन्ना प्रतीयते, न भिन्ना ; यदि भिन्ना प्रतीयेते[3], इदं द्रव्यं गोत्ववत्—इत्यवगतिः स्यात् ; न चासावस्ति ।

**ननु च भेदप्रत्ययेऽप्यभेदोपचारो दृष्टः—कुन्तान् प्रवेशय—इति ।** अस्यार्थः—यद्यपि प्रतीतौ भेद एव भाति, तथापि समानाधिकरणशब्दप्रयोगमात्रं भवत्येवोपचारात् यथा पुरुषसमानाधिकरणः कुन्तशब्दप्रयोगः ; न पुनः प्रतीतौ तादात्म्यावभासः । उत्तरम्—सत्यमयमभेदोपचारः—कुन्तान् प्रवेशय—इति न पुनः—अयं गौः—इत्यत्र लौकिकानामभेदोपचारबुद्धिः, प्रत्यये तादात्म्याव-भासात् ; उपचारो हि शब्दप्रयोगमात्रम्, न बुद्धौ तादात्म्यसंवित्तिः[4] । तस्मादुप-चरितोऽयं प्रत्यय इति न शक्यते वक्तुम्, प्रत्ययस्योपचरितत्वाभावात् ; शब्दप्रयोगमात्रं ह्युपचारतो भवति ।

ननु भवतु तर्हि जातिरभिन्ना, तथापि कथं कल्पनात्वम् ? तत्राह—

---

१. Omitted अयमभिप्रायः. ग.
२. Omitted अस्यार्थः. ग.
३. प्रतीयते. ग.
४. तादात्म्यसंवित्. ग.

बृहती

न च स्वलक्षणपर्यवसाय्येवायं प्रत्ययः, अर्थान्तरानुसन्धानात्। अतो मन्यामहे परिकल्पनैवेयमिति। यद्ययमन्यथाग्राही प्रत्ययः स्यात्, कथं न विपर्येति? न च गवादिषु प्रत्ययस्य विपर्ययो भवति। उच्यते— यत्र हि द्रव्यं द्रव्यान्तरात्मनावसीयते, तत्र विपर्ययो भवति; न चेदं गोत्वादि द्रव्यान्तरम्, नीलपीतादिवत् विशेषेभ्यः पृथक्त्वेनाग्रहणात्। यत एव हि विशेषाः सामान्येनावलम्ब्यन्ते, अत एव च प्रमाणविपर्ययाभ्यामयमन्यो विकल्पाख्यः प्रत्यय इति विकल्पविदः। गुणकल्प-

पञ्चिका

न च स्वलक्षणविषयमात्रपर्यवसाय्येवायं प्रत्ययः, अर्थान्तरानुसन्धानात्। अस्यार्थः—यद्यपि भिन्ना जातिर्नास्ति, तथाप्ययं प्रत्ययः स्वलक्षणरूपो यो विषयस्तन्मात्रपर्यवसायी न भवति, विशेष्यप्रत्ययत्वादर्थान्तरेण जात्यदिनानुसन्धाय योजयित्वा जायमानत्वात्। अतोऽर्थान्तरयोजनायामर्थान्तरसम्बन्धरहितेऽपि स्वलक्षणे जायमानत्वात् कल्पनैवेयमिति मन्यामहे। अत्र चोदयति—यद्ययमन्यथाग्राही प्रत्ययः, कथं न विपर्येति? यो ह्यन्यदन्यरूपेण भासयति यथा शुक्तिकारजतादिज्ञानम्, तस्य—नेदं रजतम्—इति विपर्ययो भवति, न च[2] गवादिषु प्रत्ययस्य[3] विपर्ययोऽस्ति। तस्मान्नायमन्यथाग्राहीति। अत्र समाधिः— यत्र द्रव्यं द्रव्यन्तरात्मनावसीयते, तत्र विपर्ययो भवति यथा शुक्तिकायां रजतात्मनावसीयमानायाम्; नैवेदं गोत्वादि द्रव्यान्तरं नीलपीतादिवद्विशेषेभ्यः; यथा नीलात् पीतं द्रव्यान्तरम्, न तथा विशेषेभ्यो गोत्वादि। कस्मात्[4]? पृथक्त्वेनाग्रहणात्। यत्खलु यतोऽर्थान्तरम्, तत्ततो भेदन गृह्यते यथाङ्गुलिभ्योऽङ्गुष्ठः; न च विशेषेभ्यो भेदेन गृह्यते जातिः। अतो न भिन्नेति।

ननु च—अयं गौः—इति प्रत्यये भेदेनैव जातिरवभाति, तत्राह—यत एव हीति। यस्माद्विशेषाः सामान्यप्रत्ययेनावलम्ब्यन्ते तस्मात्पृथक्त्वेन ग्रहणं नास्ति, अत एव च[5] प्रमाणविपर्ययाभ्यामयमन्यो विकल्पाख्यः प्रत्यय इति विक-

१. Omitted विषयमात्र- ग.
२. Omitted च. ग.
३. Omitted स्य. ग.
४. तस्मात्. ग.
५. हि. ग.

बृहती

**नाऽप्यनेनैव व्याख्याता, पृथगग्रहणात् । ननु नाम्नः पृथगेव ग्रहणम् । न, तत्रापि—अयं विष्णुमित्रः—इत्यभेदप्रत्ययात् । इयांस्तु विशेषो जातिगुणकल्पनाभ्याम्---यदेकत्राभिन्नयोर्भेदकल्पना, इतरत्र भिन्नयोरभेदकल्पना । तस्मादुपाधिविशेषोऽयम्, न कल्पनाविशेषः । ननु च कर्मकल्पनायां द्वयमप्येतन्न संभवति, भिन्नयोरेव क्रियाकारकयोः सम्बन्धोऽवगम्यते; व्यपदिश्यते च । मैवम्; अत्राप्यभेदोपचार एवावगम्यते**

पञ्चिका

ल्पविदः । यत एवमर्थान्तरात्मनार्थान्तरं न गृह्णातीति न विपर्येति, अत एव विकल्पविदो वदन्ति—प्रमाणादयमन्यो विकल्पाख्यः प्रत्ययः अन्यथाग्राहित्वात्, विपर्ययाच्चान्य एवेति । साक्षाद्बाधकाभावात् कारणदोषाभावाच्चेति । **गुणकल्पनाप्यनेनैव व्याख्याता, पृथगग्रहणादिति** । योऽयं[1] भिन्नजातिनिराकरणहेतुः तेनैव गुणकल्पनापि व्याख्याता । यथा हि व्यतिरिक्ता न प्रतीयते जातिरिति जातिः कल्पना, तथा गुणोऽपि गुणिनो भिन्नो नाव[2]भाति; शुक्लमिदम्—इति हि लौकिकाः प्र[3]तिपद्यन्ते, न—इदं शुक्लवत् द्रव्यम्—इति पृथगग्रहणादिति हेतुर्द्विधा [4]वर्णनीयः । यदा व्यक्तिः प्रतीयते, तदा तावत् पृथक् न गृह्यते जातिः । तथा यदि भिन्ना जातिः स्यात्, तदा व्यक्त्यग्रहेऽपि कदाचित् गृह्येत; न च गृह्यते; तस्मान्न भिद्यते जातिरिति ।

**ननु[5] नाम्नः पृथगेव ग्रहणमिति** नामकल्पनामाक्षिपति । नाम हि नामिनो भिन्नम्; भिन्ने च तस्मिन्नामयोजना न कल्पना युक्ता । सम[6]र्थनमाह—**न, तत्रापि—अयं विष्णुमित्रः—इत्यभेदप्रत्ययात्** । अस्यार्थः—यद्यपि भिन्नं नाम, तथापि न भेदेनैव प्रतीयते; किन्त्वभेदेनैव—अयं विष्णुमित्रः—इति प्रत्ययः । भिन्ने चाभिन्नप्रत्ययोऽप्यपरमार्थविषयः कल्पनैव स्यात् । **इयांस्तु विशेषो जातिगुणकल्पनाभ्याम्—यदेकत्र** जातिकल्पनायामभिन्नयोर्जातिजातिमतोः

१. Omitted योऽयं. ग.
२. नावभासते. ग.
३. प्रतियन्ति. ग.
४. विवरणीयः. ग.
५. ननु च नाम्नः. ग.
६. समर्थयन्नाह. ग.

बृहती

व्यपदिश्यते च—पचति देवदत्तः—इति सामानाधिकरण्यदर्शनात् । ननु च वैयधिकरण्यमपि दृश्यते—ओदनं पचति, काष्ठैः पचति, पच्यते देवदत्तेन—इति । किमिदं प्रलप्यते—वैयधिकरण्यदर्शनात्—इति ? जात्यादेरपि वैयधिकरण्यं दृश्यते—गोर्भावो गोत्वम्, पटस्य शुक्लत्वम्, अस्येयं संज्ञा—इति । भिन्नाभिन्नकल्पनां प्रत्यभिन्नस्यायमप्यपदेशः, न पुनर्भिन्नस्य चार्थान्तरस्योपनतिरस्ति; तस्मादियमपि च कल्पनैव—पचति देवदत्तः—

पञ्चिका

भेदकल्पना, अन्यत्र नामकल्पनायां भिन्नयोर्नामनामिनोरभेदकल्पना । तस्मादुपाधिविशेषोऽयं कल्पनाप्रकारभेद[1] इत्यर्थः । न पुनः कल्पनात्वे विशेषोऽस्ति, असत्यविषयत्वेन[2] तुल्यत्वात् ।

ननु चेति कर्मकल्पनामाक्षिपति । द्वयमप्येतद्भिन्नाभिन्नत्वकल्पनं कर्मकल्पनायां नैव संभवति, भिन्नं हि कारकात्कर्म; भिन्नं[3] च भेदेनैव प्रतीयते—काष्ठैः पचतीति, देवदत्तेन पच्यते—इति । नैवमित्यादिना समाधानम् । अत्रापि कर्मकल्पनायामपि[4] अभेदोपचारः अभेदप्रतीतिरेव दृश्यते, पचति देवदत्तः—इति सामानाधिकरण्यदर्शनात् । ननु च[5] वैयधिकरण्यमपि दृश्यते इति । अनेनैतदाह—वैयधिकरण्यदर्शनात् भेद एव[6] प्रतीयते; सामानाधिकरण्यं तु व्यपदेशमात्रमिति । किमिदं प्रलप्यत इति । अस्यायं भावः—यथा वैयधिकरण्यं दृश्यते, तथा सामानाधिकरण्यमपि; न चैकस्य वस्तुनो भिन्नत्वमभिन्नत्वं वा संभवति । तस्मान्नास्त्येव भिन्नमभिन्नं वा वस्तु, परस्परविरोधेनानयोः प्रतीत्योः पराहतत्वात् । अविद्यमानवस्त्ववभासी च प्रत्ययो विकल्पमात्रमेवेति । अक्षरार्थस्तु—यथा कर्मणि वैयधिकरण्यं दृश्यते, तथा जातिगुणनामस्वपि ; न च तानि भिन्नानि, अभेदावगमात् । अतोऽविद्यमानमेव कदाचिद्भिन्नतया कल्प्यते कदाचित्त्वभिन्नतयेति मन्तव्यम् ।

द्रव्येऽप्येवम्, दण्ड्ययम्—इत्यभेदोपचारात् । अस्यार्थः-दण्डययम्—इति

---

१. प्रकारविशेषः. ग.
२. विषयस्य. ग.
३. Omitted भिन्नं च. ग.
४. Omitted अपि. ग.
५. Omitted च. क, ग.
६. एवावसीयते. ग.

बृहती

इति । द्रव्येऽप्येवम्, दण्डचयम्—इत्यभेदोपचारात् । तस्मात् पञ्चविधेयं कल्पना ; नेयं प्रमाणम्, नाप्यप्रमाणम् । उच्यते—भवति कल्पनाज्ञानम्, यदि प्रत्यक्षसमधिगम्यता ज्ञानस्य स्यात् ; आनुमानिकत्वं तु ज्ञानस्य वक्ष्यति । ननु अप्रत्यक्षज्ञानपक्षेऽन्याकारमालम्बनमन्यथैव ज्ञानस्योत्पत्तिर्नोपपद्यते । कोऽयमन्यथाभावः ? अयमन्यथाभावः ; शुक्तिका हि रजतवत् प्रकाशते । शुक्तिकालम्बनं हि तज्ज्ञानम्, न रजतालम्बनम् । कथमवगम्यते ?

पञ्चिका

प्रतीतिः पुरुषमेव प्रतिपद्यते । नच पुरुषमात्रपर्यवसाय्येवायं प्रत्ययः, विशेष्यप्रत्ययत्वात् । पूर्वपक्षमुपसंहरति—तस्मात्पञ्चविधेयं कल्पना न प्रमाणम्, अविद्यमानजात्याद्यध्यासेनोपजायमानत्वात्; नाप्यप्रमाणम्[1], बाधकारणदोषज्ञानयोः साक्षादनुत्पत्तेः । उच्यत इत्यादिना सिद्धान्तमुपक्रमते । तत्र चेदमाकूतम्—जात्याद्यवभासीनि तावदेतानि ज्ञानान्युत्पद्यन्ते ; न चाविद्यमानमेवाकारं ज्ञानमवगमयति, स्वलक्षणस्वरूपवत्[2] सत्त्वेनावभासनात् । तत्र विद्यमानता कदाचिद्बहिरर्थरूपतया, कदाचित्[3] ज्ञानाकारतया । तत्र यदा विज्ञानमप्रत्यक्षमिति[4] स्थितम्, तदा पारिशेष्यादर्थाकारकतैवावशिष्यते, तदा च विद्यमानार्थाकारग्रहणान्न कल्पनारूपतेति । तदाह—भवति कल्पनाज्ञानं यदि प्रत्यक्षसमधिगम्यता ज्ञानस्य स्यात् ; आनुमानिकत्वं तु ज्ञानस्य वक्ष्यति । नन्वप्रत्यक्षज्ञानपक्षेऽन्याकारमालम्बनमन्यथैव ज्ञानस्योत्पत्तिर्नोपपद्यते । अनेन बलात्प्रत्यक्षता ज्ञानस्याङ्गीकरणीयेत्यापादयति । कोऽयमन्यथाभाव इति पृच्छति । उत्तरम्—अयमन्यथाभावः[5]; शुक्तिका हि रजतवत्प्रकाशत इति । अनेन च "ननु व्यभिचारात्परीक्षितव्यं निमित्तम्" इति भाष्यं व्याचष्टे । तस्य चार्थः—शुक्तिकायाम्—रजतमिदम्—इति ज्ञानमिन्द्रियतद्भावभावि प्रत्यक्षमेकमेव ज्ञानम्; तच्च बहीरजताकाराभावाज्ज्ञानगतमेव

---

१. नाप्यप्रामाण्यम्. क, ग.
२. णवत्स्वरूपवत्त्वेना- क.
३. चित् बहिः. ग.
४. पि ज्ञानं प्रत्यक्षं न भवतीति. ग.
५. Omitted अय--बही- ग.

बृहती

**शुक्तिकासंप्रयुक्ते चक्षुषि दर्शनात्, अन्धस्यानुत्पादात् ; न ह्यन्धः शुक्तिकां रजतम्—इति व्यपदिशति ; चक्षुष्मानेव हि शुक्तिकां रजतम्–इति मन्यते 'रजतसन्निकृष्टं मे चक्षुः' इति । अतः शुक्तिकालम्बनमेतज्ज्ञानम्, न रजतालम्बनम् । न चाप्रत्यक्षे ज्ञाने एतत्संभवति ।**

पञ्चिका

रजता[1]भासाकारमवभासयति । **शुक्तिकालम्बनं हि[2] तज्ज्ञानम्, न रजतालम्बनमिति** । अनेन ये मीमांसकाः—द्वे एव ते विज्ञाने, इदम्—इत्येकं ग्रहणात्मकम्, रजतम्—इति स्मरणात्मकम्—इति वदन्ति ; तान्निराकरोति; एकमेवेदं विज्ञानमन्यथाग्राहि जायते ; तच्च रजतरूपेण शुक्तिकामेवालम्बते, न रजतम् । **कथमवगम्यत इति प्रश्नः । शुक्तिकासंप्रयुक्ते चक्षुषि द[3]र्शनात् अन्धस्यानुत्पादात् ; न ह्यन्धः शुक्तिकाम्—रजतम्—इति व्यपदिशति ; चक्षुष्मानेव हि शुक्तिकां--रजतम्–इति मन्यते रजतसन्निकृष्टं मे चक्षुः इति** । अस्यार्थः—यदि–रजतम्–इति स्मरणज्ञानमेतत्, तदा चक्षुर्निरपेक्षत्वात् स्मरणस्य अन्धस्यापि स्यात् ; न चान्धस्येदमस्ति । यदा तु शुक्तिकालम्बनमेकमेव ग्रहणज्ञानम्, तदा चक्षुरपेक्षत्वात् स्यादन्धस्यानुत्पादः; चक्षुष्मत एवोत्पत्तिर्युक्ता । अनेन च "यत्प्रत्यक्षं न तद्व्यभिचरति", इदम्— इति ग्रहणज्ञानम्, रजतम्–इति स्मरणाद्भिन्नम् । यद्व्यभिचरतीति भवदभिमतमेकमेव—इदं रजतम्— इति ज्ञानम्, तत्प्रत्यक्षमेव न भवतीति । कीदृशं तर्हि प्रत्यक्षम्? तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम्। यद्विषयं ज्ञानमुत्पद्यते, तेनैवेन्द्रियसंप्रयोगे या पुरुषस्य बुद्धिर्जायते, तत् सत्प्रत्यक्षम् यथा—इदम्— इति विज्ञानम् ; यत्त्वन्यसंप्रयोगे शुक्तिकासंप्रयोगे अन्यविषयं रजतग्राहि विज्ञानमुत्पद्यते, न तत्प्रत्यक्षम्। किं तर्हि? स्मरणमेव । कथं पुनरिदमवगम्यते—इदमन्यसंप्रयोगे, इदं नान्यसंप्रयोगे—इति ? शुक्तिर्हि संप्रयुक्ता अतः शुक्तिविषयमेवेदं ज्ञानम्, यतो–रजतम्–इति शुक्तिकामेव व्यपदिशति ;

---

१. ताकारमवभासयतीति. ग.

२. नं च ज्ञानम्. क, ग.

३. तद्भवति. क, ग.

बृहती

अतोऽविद्यमानाकारालम्बनमपि ज्ञानमस्तीति प्रतिपत्तव्यम् । सेयं पञ्चविधा कल्पना । ननु चाविद्यमानाकारालम्बनज्ञानपक्षे निरालम्बनतैव ज्ञानस्य प्राप्नोति । मैवम्; निरालम्बनपक्षे न ह्यस्यान्येन व्यपदेश उपपद्यते; भवति च व्यपदेशः—रजतमिति शुक्तिकायाम् । निरालम्बनज्ञानपक्षे हि कस्य केन व्यपदेशो भिन्नत्वाच्छुक्तिकारजतज्ञानयोः ? नन्वालम्बनज्ञानपक्षेऽपि अन्याकारस्य विज्ञानस्यान्याकारमालम्बनमिति

पञ्चिका

यस्माच्छुक्तिकासंप्रयुक्ते चक्षुषि—रजतसन्निकृष्टं मे चक्षुः—इति मन्यत इति भाष्यार्थो दर्शितः। न चाप्रत्यक्षज्ञानपक्ष एतत्संभवति। अतः प्रत्यक्षं ज्ञानम्; प्रत्यक्षं चेज्जात्यादिकमपि ज्ञानरूपमेव । तस्मात्स्वाकारभूतजात्याद्याकारतया बाह्यं वस्तु गृह्णत् कल्पनाज्ञान[1]मेवैतदित्यापतितम् । ननु चाविद्यमानाकारालम्बनज्ञानपक्षे निरालम्बनतैव ज्ञानस्य प्राप्नोति । अस्यार्थः—यदाकारावभासि यज्ज्ञानम्, तत्तदालम्बनमुच्यते; शुक्तिका च न रजताकारा । तस्माद्रजताकारस्य ज्ञानस्य न शुक्तिकालम्बनम् । तस्मान्निरालम्बनज्ञानमेवेदमापद्यते इति चोद्यम् । मैवमिति । अस्यार्थः—निरालम्बनत्वे हि रजतज्ञानस्य, शुक्तिकायाम्—रजतमिदम्—इति व्यपदेशो न स्यात्, भिन्नत्वाच्छुक्तिकारजतज्ञानयोः; एकमत्र शुक्तिकालम्बनम्, अपरं तु निरालम्बनम् । अस्ति चायं व्यपदेशः । [2]तस्मादेकमेव ज्ञानं शुक्तिकामेव रजताकारेणावलम्बते ।

नन्वालम्बनज्ञानपक्षेऽपीति । आलम्बनस्य ज्ञानमालम्बनज्ञानम् । एतदुक्तं भवति—आलम्बनमेव ज्ञायते, न त्वनालम्बनम्—इत्यस्मिन्नपि पक्षेऽन्याकारमालम्बनमन्याकारग्राहि च ज्ञानमिति नोपपद्यते । इदमेवालम्बनस्यालम्बनत्वम्, यदुतात्माकारमेव ज्ञानं जनयति । यदि पुनः कारकतामात्रमेवार्थस्य स्यात्; तदा चक्षुरादीनां विज्ञानोत्पत्तौ व्यापृतानामपि यथालम्बनभावो नास्ति, तथार्थस्यापि स्यात् । तस्माद्यदालम्बनमभिमतम्, तदाकारेण ज्ञानेनापि भवितव्यम्, अन्यथा-

---

१. ज्ञानमेवेदमापादितम्. क. २. कस्मात् ? ग.

बृहती

नोपपद्यते । इदमेव ह्यालम्बनस्यालम्बनत्वम्, यदुतात्माकारमेव ज्ञानमुत्पादयति—इति; अन्यथा हि चक्षुरादिवत् व्यापृतस्यापि ज्ञानोत्पत्तावालम्बनव्यपदेशो न स्यात् । केनोक्तम्—आलम्बनाकारनिरपेक्षैवेयं कल्पनेति? कथं तर्हि कल्पना? अर्थान्तरानुसन्धानतया । किमिदम्—अर्थान्तरानुसन्धानतयेति? इदमिदम्—यत् स्वलक्षणान्तरेणैकतापत्तिः स्वात्मनि च भेदाध्यासः । कथं तर्ह्यविद्यमानजात्यादिविषया एव जात्यादिप्रत्ययाः? स्वलक्षणे ह्यविद्यमानभेदाभेदाध्यासादविद्यमानविषया इत्युच्यन्ते । कोऽयमध्यासो नाम? विवेका-

पञ्चिका

लम्बनत्वानुपपत्तेरिति । केनोक्तमिति । अत्रायमाशयः—शुक्तिकालम्बनमिदं ज्ञानमभिमतम्; शुक्तिकाकारमेव तावदिदमुत्पद्यते; न पुनस्तदाकारं न गृह्णाति, यदि परं तमेवार्थान्तरयोजनया गृह्णाति, तेन तदाकारग्राहित्वात्तदालम्बनत्वं तावदविरुद्धम्। अक्षरार्थस्तु—केनेदमुक्तम्—आलम्बनीभूतस्यार्थस्याकारमनपेक्ष्यैवेयं कल्पना जायत इति? किन्त्वालम्बनीभूतस्वलक्षणाकारग्राहिण्येवेयमिति[1] । कथं तर्हि कल्पनेति । स्वलक्षणग्राहित्वे सति निर्विकल्पकवत्कल्पनात्वं न युक्तमित्यर्थः। अर्थान्तरानुसन्धानतयेति। अर्थान्तरेणानुसन्धानं योजनं तद्भावादित्यर्थः । किमिदमर्थान्तरानुसन्धानतयेति । स्वरूपविवरणाय प्रश्नः । इदमिदं यत्स्वलक्षणान्तरेणैकतापत्तिः । गौरयम्—इति ज्ञाने व्यक्त्यन्तरेण सहैक्यं तावदवभाति । स्वात्मनि च भेदाध्यासः । यद्यप्यसाधारणैकात्मकं स्वलक्षणम्, तथापि द्व्यात्मकमिव प्रतिभाति । कथं तर्हीति । यद्यालम्बनाकारनिरपेक्षेयं कल्पना न भवति, स्वलक्षणं चालम्बनम्, तच्च विद्यमानमेवेति, कथमविद्यमानविषया जात्यादिप्रत्ययाः? अत्रोत्तरम्—स्वलक्षणे ह्यविद्यमानभेदाभेदाध्यासादविद्यमानविषया इत्युच्यन्ते जात्यादिप्रत्ययाः। कोऽयमध्यासो नामेति[2]। अयमभिप्रायः पृच्छतः—पूर्वपक्षिणा हि विज्ञानं साकारं प्रत्यक्षमित्यभ्युपगतम् । तत्र

---

१. वेयं कल्पना. क. २. Omitted इति. क.

बृहती

ग्रहणम् ; स्वरूपमात्रग्रहणात् भेदाननुसन्धानात् सामान्याध्यासः । अभिन्नस्य चार्थान्तरेण सादृश्यम् ; सदृशाननुसन्धानात् भेदाध्यासः ; सदृशानवधारणं तु भेदाननुसन्धानात् । सेयं पञ्चविधा कल्पना । न चालम्बनव्यतिरिक्तं रूपमस्याः । अर्थान्तरानुसन्धानरूषितं तु— न चार्थान्तरम् अर्थान्तरानुसन्धितयालम्बनमित्यतः, अर्थान्तरानुसन्धानात् स्वलक्षणालम्बनमपि कल्पनेत्युच्यते । तस्मात् स्वसंवेद्यज्ञानपक्ष एवैतदे- कालम्बनत्वेऽपि ज्ञानान्यत्वसंवेदनमुपपद्यते । अन्यथा ह्यालम्बनमात्रा-

पञ्चिका

यद्यपि ज्ञानस्यैवायमाकारः, तथापि स्वलक्षणासंस्पर्शान्न स्वलक्षणे भेदाभेदावभासो घटते । तेन वरं ज्ञाने चार्थे चाविद्यमानस्याकारस्याध्यारोपोऽध्यासो युक्त इति । **विवेकाग्रहणमित्युत्तरम्** । अत्रायमाशयः—साकारे हि विज्ञाने तदीयोऽयमाकारः स्वलक्षणस्य यद्यपि न भवति, तथापि विवेकमगृह्णतः स्वलक्षणसम्बन्धीवेत्यु- पपद्यते, सर्वथा त्वविद्यमानत्वेऽनुपपत्तेः[1] । **स्वरूपमात्रग्रहणात् भेदाननुसन्धाना- त्सामान्याध्यासः** । यदिदं ज्ञानं साधारणाकारं जातम्, तस्य स्वलक्षणाद्भेदो नानु- सन्धीयते ; केवलं स्वरूपमात्रमेव गृह्यते, तेन स्वलक्षणमेव सामान्याकारमिवानु- सन्धीयते । **अभिन्नस्य चार्थान्तरेण सादृश्यम् ; सदृशाननुसन्धानाद्भेदाध्यासः ; सदृशानवधारणं तु भेदाननुसन्धानात्** । यदेतत्साधारणाकारं विज्ञानं जायतेऽ- र्थान्तरभूतम्, तस्य स्वलक्षणेन सहातद्व्यावृत्ततया सादृश्यम् ; तच्च सादृश्यं नानुसन्धीयते, भेदस्याननुसन्धीयमानत्वात् ; ततश्च तदपि साधारणाकारज्ञानं स्वल- क्षणेन सहाननुसन्धीयमानभेदं स्वलक्षणतादात्म्येनैवावभाति । एवं चैकमपि[2] स्वलक्षणं साधारणासाधारणरूपं[3] द्व्यात्मकमिवावसीयते । साधितमर्थमुपसंहरति—**सेयं पञ्च- विधा कल्पना** । न चालम्बनव्यतिरिक्तं स्वलक्षणव्यतिरिक्तं रूपं ग्राह्यभूतम- त्रास्ति; अर्थान्तरानुसन्धानरूषितं तु अर्थान्तरानुसन्धानमिश्रितम्— न च अर्था-

---

१. अनुपपत्तिः. ग.

२. चैकमिदम्. ग.

३. रूपं द्व्यात्मकमाश्रीयते. ग.

बृहती

वगतिरेव स्यात्, न स्वलक्षणसामान्यावगतिः । स्वलक्षणव्यतिरिक्तं च न सामान्यमस्तीति प्रदर्शितम्—रूपान्तराग्रहणात् तदग्रहे तद्बुध्यभावात्—इति । अर्थान्तरस्यानुसन्धानाच्च । अनुसन्धानं च ज्ञानभेदे उपपद्यत इति उपपन्नः सामान्यविशेषव्यवहारो लौकिकः । एवं चानित्ये नित्यबुद्धिः,

पञ्चिका

न्तरं=स्वलक्षणम् आलम्बनम् अर्थान्तरानुसन्धितया कल्पनाज्ञानस्य अनुसन्धानमनुसन्धिः तद्भावेन—इति, स्वलक्षणालम्बनमपि कल्पनेत्युच्यते । तस्मात्स्वसंवेद्यज्ञानपक्ष[1] एवैतदुपपद्यते ज्ञानान्यत्वसंवेदनम्, स्वलक्षणैकालम्बनत्वेऽपि ज्ञानाकारस्यापि भासमानत्वात् । यदि त्वप्रत्यक्षं ज्ञानं स्यात्, तदालम्बनमात्रावगतिरेव स्यात् । न च बाह्यमेव सामान्यमस्ति, यद्ग्रहणादाकारद्वयावगमो घटते; रूपान्तराग्रहणात् सामान्यं नास्तीति प्रतिपादितमेव यतः । नन्वेवमपि सर्वदैव सामान्यप्रत्ययेन भवितव्यम्, ज्ञानाकारस्य सन्निहितत्वात्तत्राह— अर्थान्तरस्यानुसन्धानाच्चेति । एतदुक्तं भवति—सर्वदैव विकल्पज्ञानमर्थान्तराकारं[2] नोपपद्यते । तेनोत्पत्तिपक्षे सामान्यप्रतीतिः; अनुत्पत्तौ स्वलक्षणमात्रावगम इति । एवं च यदा ज्ञानमेव साकारंप्रत्यक्षम्, तदानित्ये नित्यबुद्धिरसुखे सुखबुद्धिरनात्मन्यात्मबुद्धिरित्युपपन्नाः संसारहेतवो विपरीतग्रहाः, नित्यात्मसुखानां ज्ञानाकारत्वात् । तदिदमुक्तम्—"प्राक् बाधकज्ञानोत्पत्तेः कथमवगम्यते" इति ।

एषा भाष्ययोजना—ननु प्रत्यक्षं व्यभिचरति, कल्पनाज्ञानं प्रत्यक्षम्[3] । तच्चाविद्यमानार्थान्तरानुसन्धानाद्व्यभिचरति । ननु कथमविद्यमानमर्थान्तरमनुसन्धातुं शक्यते ? स्यादेतदेवम्, यद्येकान्तेनेदमविद्यमानं स्यात्; स्वलक्षणे[4] ह्येतदविद्यमानम्, ज्ञाने तु विद्यमानत्वाच्छक्यतेऽनुसन्धातुम् । ननु ज्ञानमप्रत्यक्षम् । मैवम्; शुक्तिका हि रजतवत्प्रकाशते । न च रजताकारः शुक्तिकायामस्ति । अतो ज्ञानस्यैवायमाकारः प्रथते, तच्चाप्रत्यक्षे ज्ञानेऽनुप-

---

१. वेद्यसाकारज्ञान- ग.
२. कारेणोत्पद्यते. ग.
३. प्रति उक्तम्. क.
४. स्वलक्षणे त्वेत- क.

बृहती

असुखे सुखबुद्धिः, अनात्मन्यात्मबुद्धिरित्युपपन्नाः संसारहेतवो विपरीतग्रहाः । तदिदमुक्तम्—"प्राक् बाधकज्ञानोत्पत्तेः कथमिदमवगम्यते"—इति, एकालम्बनाभिप्रायेण सामान्यविशेषज्ञानयोः ।

न ह्यन्यसंप्रयुक्ते चक्षुषि अन्यालम्बनस्य ज्ञानस्योत्पत्तिः संभवति, अन्धस्यानुत्पादात्—इत्युक्तम् । अत एवेदमुच्यते—नान्याकारमालम्ब-

पञ्चिका

पन्नम् । न चेदं रजतज्ञानं स्मरणम्, पुरोऽवस्थितस्य तेनाकारेण व्यपदेशात् । अतः प्रत्यक्षमेवेदम्[1] ; तच्च ज्ञानगतरजताभासीति । तत्रोत्तरम्—नेदं रजतज्ञानं प्रत्यक्षम् ; यद्विषयं ज्ञानमुत्पद्यते, तेनैवेन्द्रियसंप्रयोगे यज्ज्ञानं जायते, तत्प्रत्यक्षम् ; नच रजतेनेन्द्रियं संप्रयुक्तम् ; तस्मान्नेदं प्रत्यक्षम्, स्मरणमेव ; तच्च बहीरजताकारसंभवात् बाह्यालम्बनमेवेति सिद्धं ज्ञानस्याप्रत्यक्षत्वम् । ननु कथमिदं ज्ञायते—अतत्संप्रयोगे रजतमिदम् इति? उच्यते—बाधकज्ञानोदये सति तत्र च रजताभावे ख्यापितेऽतत्संप्रयोगजत्वं ज्ञायते । यत्र तर्हि बाधकप्रत्यय एव न जायते, तत्र न शक्यतेऽतत्संप्रयोगजत्वं वक्तुं यथा जात्यादिप्रत्यये ; तस्माज्जात्यादिप्रत्ययः प्रत्यक्षः ; अविद्यमानजात्याद्याकारत्वाद्व्यभिचरति—इति । कथं पुनर्बाधकप्रत्ययो जात्यादिप्रत्यये नास्ति? तत्राह—एकालम्बनाभिप्रायेणेति । स्वलक्षणज्ञानेऽपि स्वलक्षणमेवालम्बनं सामान्यज्ञानेऽपि तदेवेति प्रागुक्तम् ।

कथं पुनरेकालम्बनता[2]? न ह्यन्यसंप्रयुक्ते चक्षुष्यन्याकारस्य ज्ञानस्योत्पत्तिः संभवति, अन्धस्यानुत्पादादित्युक्तम् ; अत एवेदमु[3]च्यत इति राद्धान्तमुपक्रमते । अस्यार्थः—स्वलक्षणमात्रमालम्बनम्[4] इन्द्रियसंप्रयुक्तम् अन्याकारं स्वलक्षणम् अन्याकारस्य ज्ञानस्योत्पत्तिहेतुर्न भवतीति । यदि तथा स्यात्, तदेन्द्रियसंप्रयोगाभावात्तादृशेनार्थेन संप्रयोगानपेक्षत्वेऽन्धस्यापि स्यात् ; न चास्ति । तस्मादुभयाकारत्वात् ज्ञानस्योभया-

---

१. एवेदं ज्ञानम् । तच्च रजताकारावभासीति. ग.
२. पुनरेकमालम्बनम् ग.
३. उक्तमिति. क.
४. मात्रमिन्द्रि—क.

बृहती

नमन्याकारस्य ज्ञानस्योत्पत्तिहेतुः—इति । कथं तर्हि विपरीतग्रहा अनात्मन्यात्मादयः ? उच्यते—विषयान्तरं सदृशमवलम्ब्यागृहीतविवेकं यत् ज्ञानमुत्पन्नं तत् सदृशविषयान्तरे स्मृतिज्ञानहेतुतां प्रतिपद्यते—स्मरामि—इति ज्ञानशून्यस्य । उपपन्नानि तावत् शुक्तिकादिषु रजतादिज्ञानानि । अनात्मादिषु स्वप्नादिषु च कथम् ? स्वप्नादिषु च तावत् पूर्वोक्तेभ्यो विशेषमभिधाय निरालम्बनवादेषु पुनरविशेषं

पञ्चिका

कारमेवालम्बनम् । कथं तर्हि विपरीतग्रहा अनात्मन्यात्मादयः । अयमभिप्रायः—तवापि तावद्विपरीतग्रहाः केचित्संमताः । तत्र यदि यथाज्ञानमेव वस्तु, न तर्हि विपरीतत्वम्; अथ विपरीतत्वम्, न तर्हि यथाज्ञानमेवालम्बनमिति । उत्तरम्[1]—उच्यत इत्यादि । विषयान्तरं रजताच्छुक्तिकां रजतसदृशीमालम्ब्य—इदम्—इत्यगृहीतविशेषं रजताद्भेदावगमहेतवो ये शुक्तिकायां विशेषाः, तानिन्द्रियादिदोषेण सतोऽप्यगृहीत्वा, साधारणानेव शुक्तिकायां धर्मान् गृह्णतो यज्ज्ञानं जातम्[2], तत्सदृशविषयान्तरे स्मृतिज्ञानहेतुतां प्रतिपद्यते दोषवशात् खण्डितशक्तिके मनस्यनुभूतावमर्शिताभावेन[3]—स्मरामि— इति ज्ञानशून्यस्य । तेन गृह्यमाणस्मर्यमाणयोः भेदो नावसीयते । विज्ञानद्वयं चैतत्—इदम्—इति प्रत्यक्षम्, रजतम्—इति स्मरणम्; अन्यथा रजतावगत्यसंभवात् । न हि तदिन्द्रियजम्, तेन सह[4] संप्रयोगाभावात्; असंप्रयुक्ते[5] चेन्द्रियं न विज्ञानं जनयति, अन्धस्यानुत्पादात्; तस्मात्[6]स्मरणमेवेदम् । उपपन्नानि तावच्छुक्तिकादिषु रजतादिज्ञानानि स्मृतिरूपतया । अनात्मादिषु स्वप्नादिषु पुनः कथम् ? आत्मादीनां कदाचिदप्यननुभूततया स्मरणानुपपत्तेः, स्वापमदमूर्च्छादिषु[7] स्मृतिसंकारोद्बोधहेतोरभावात् कथं स्मृतिरिति । स्वप्नादिषु तावत्पूर्वेभ्यो रजतादिप्रत्ययेभ्यः, संस्कारो[8]द्बोधहेत्वभावेन स्मृतित्वं न संभवति—इति विशेषं पूर्वपक्षेऽभिधाय पुनः सिद्धान्ते-

---

१. Omitted. इति । उत्तरम्. क.
२. Omitted. जातम्. ग.
३. मर्शाभावेन ग.
४. Omitted. सह. ग.
५. असंयुक्त. ग.
६. Omitted. तस्मात्. ग.
७. स्वप्न. ग.
८. अन्यसंस्कार- क.

बृहती

वक्ष्यति, आत्मवादे चानात्मादिषु । तस्मान्नार्थान्तरानुसन्धानाध्यासनिमित्तं जात्यादिज्ञानम् । यत्तु— रूपान्तराग्रहणात् तदग्रहे तद्बुध्यभावात्—इत्युक्तम्, तदसिद्धम्; अर्थान्तरानुसन्धानज्ञानस्य हि स्वलक्षणज्ञानान्यत्वमिष्टम् । तच्चाप्रत्यक्षज्ञानवादिनोऽर्थ एव प्राप्नोति । तस्मादसिद्धमिदम्—रूपान्तराग्रहणात् तदग्रहे तद्बुध्यभावात्—इति । तस्मात् सूक्तम्—अन्यसंप्रयुक्ते चक्षुष्यन्यविषयं ज्ञानं न प्रत्यक्षमिति । कथं तर्हि विपर्ययः? अग्रहणादेव—इति वदामः । अग्रहणनिमित्तता च दर्शिता भाष्यकारेण— "यदि

पञ्चिका

अदृष्टस्योद्बोधहेतुत्वादविशेषं स्मृतित्वमेव वक्ष्यामः । आत्मवादे[1] चानात्मादिषु । परमार्थेनात्मन[2] एव विद्यमानत्वाद्विपरीतग्रहत्वमेव नास्तीति वक्ष्यति । तस्मान्नार्थान्तरानुसन्धानाध्यासनिमित्तं जात्यादिज्ञानम् । परमार्थतो ज्ञानबलेनैव जात्यादिभावात् यथाज्ञानमेवालम्बनाभ्युपगमात् । यत्पुनरुक्तं[3] रूपान्तराग्रहणात्तदग्रहे तद्बुध्यभावादिति, तदसिद्धम्; यस्मादर्थान्तरानुसन्धानज्ञानस्य स्वलक्षणज्ञानादन्यविषयत्वमिष्टम्; अन्यथा कल्पनैव वक्तुं न शक्यते । ननु सत्यमिष्टमेवार्थान्तरविषयत्वम्[4], तत्तु ज्ञानाकारग्राहित्वेन; तत्राह—तच्चाप्रत्यक्षज्ञानवादिनोऽर्थ एव प्राप्नोति । तस्मादसिद्धमेव[5] हेतुद्वयम् । तस्मात्सूक्तमन्यसंप्रयुक्ते चक्षुष्यन्यविषयं ज्ञानं न प्रत्यक्षमिति । कथं तर्हि विपर्यय[6] इति । इदम्—इति ज्ञानं गृह्यमाणसत्यविषयं न विपरीतार्थम्, रजतम्—इति[7] स्मृतिरप्यविपरीतार्थैवेति । अग्रहणादेवेति वदामः । अस्यार्थः—विवेकाग्रहणात् गृह्यमाणस्मर्यमाणयोर्[8]ग्रहणस्मरणयोरपि भेदं न मन्यते; तेन ग्रहणव्यवहारं स्मरणे प्रवर्तयति; स्मरणं हि नाम गृहीतग्रहणम्; तत्र गृहीतविषयत्वाननुसन्धाने[9]

---

१. आत्मत्वे. ग.
२. परमार्थतयैव. ग.
३. यत्तुरूपा- ग.
४. विप्रयम्. ग.
५. Omitted. एव. ग.
६. Omitted. इति. क.
७. इत्यपि स्मृतिरविप- ग.
८. माणयोरिव ग.
९. Omitted. विषय. ग.

## बृहती

चक्षुरादिभिरुपहतं मनः" इति । कथमनेनाग्रहणनिमित्तता दर्शिता भवति? "यदन्यविषयं विज्ञानम्"— इति, अस्याः प्रतिज्ञाया हेतुत्वेनोपन्यासात् । युक्तं च दुष्टतायाः कार्याक्षमत्वम्, न पुनः कार्यान्तरसामर्थ्यम् । तस्मादग्रहणनिबन्धना एव विपर्यया इति । अतः सिद्धम्— "यस्य च दुष्टं करणम्, यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो नान्य इति ॥

## पञ्चिका

ग्रहणमात्रमेवावभाति । तद्ग्रहणव्यवहारहेतुतां प्रतिपद्यमानं व्यवहारे विसंवादकत्वाद्व्यवहारे विपर्ययमावहति । अग्रहणनिमित्तता च विपर्ययस्य दर्शितैव भाष्यकारेण—"यदि चक्षुरादिभिरुपहतं मनः" इति । कथं[1] पुनश्चक्षुरादिभिरुपहतं मनः—इत्यनेनाग्रहणनिमित्तता दर्शिता भवति? "यदन्यविषयं विज्ञानम्"— इत्यस्याः प्रतिज्ञाया हेतुत्वेनोपन्यासात् । अस्यार्थः—"यदन्यविषयं ज्ञानमन्यसंप्रयोगे भवति, न तत्प्रत्यक्षम्" । तत्र पुनः पृष्टम्—"कथं पुनरन्यसंप्रयोगेऽन्यविषयं ज्ञानं भवति?" इति । तत्र हेतुरयम् " यदि चक्षुरादिभिरूपहतं मनः "—इति । नन्वेवमपि कथमग्रहणनिमित्तता दर्शितेति[2], तत्राह—युक्तं च दुष्टतायाः कार्याक्षमत्वम्[3], न पुनः कार्यान्तरसामर्थ्यम् । न हि दुष्टा यवादयः शाल्यङ्कुरप्रसवसमर्थतां[4] भजन्ते । यच्चोक्तम्—भस्मकस्य दोषस्य कार्यान्तरोत्पादकत्वम्—इति, तन्न ; शारीरस्य वह्नेर्बलपुष्ट्यादिकं कार्यम्, तच्च[5] तत्र नास्त्येव ; यत्तु जरणम्[6], तदग्निमात्रस्य ; तदपेक्षया च न दोषत्वम् । अनन्तरमुपसंहरति—तस्मादग्रहणनिबन्धना[7] विपर्यया इति । अधिकरणार्थमुपसंहरति—अतः सिद्धमिति ॥

---

१. कथमनेन चक्षु- ग.
२. दर्शिता भवति. ग.
३. कार्याकरणत्वम्. क.
४. शाल्याद्यङ्कुर- ग.
५. Omitted. तच्च. ग.
६. करणम्. ग.
७. निबन्धनोऽर्थविपर्ययः. ग.

भाष्यम्

ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः; प्रत्ययस्य हि निरालम्बनता स्वभाव उपलक्षितः स्वप्ने; जाग्रतोऽपि स्तम्भः—इति वा, कुड्यः—इति वा प्रत्यय एव भवति; तस्मात्सोऽपि निरालम्बनः। उच्यते—स्तम्भः—इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यतीति? स्वप्नेऽप्येवमेव सुपरिनिश्चितासीत्; प्राक्प्रबोधान्न तत्र

बृहती

ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः; कुतस्तत्संप्रयुक्तत्वमतत्संप्रयुक्तत्वं वा, येन विशेषेण प्रत्यक्षाप्रत्यक्षयोर्विशेष उपलभ्यते? कथं पुनः सर्व एव निरालम्बनः प्रत्ययः? प्रत्ययस्य हि निरालम्बनता स्वभाव उपलक्षितः स्वप्ने। ननु शुक्तिकायां रजतज्ञानम्—स्मरामि—इति प्रमोषात् स्मृतिज्ञानमुक्तम्। युक्तं रजतादिषु; तत्र हि शुक्तिकायां यद्भास्वररूपं

पञ्चिका

ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः; कुतस्तत्संप्रत्युक्तत्वमतत्संप्रयुक्तत्वं वा, येन विशेषेण प्रत्यक्षाप्रत्यक्षयोर्विशेष उपलभ्यते इति। अनेन सङ्गतिमाह। यदि परमार्थतोऽर्थः स्यात्, तदा तत्संप्रयोगजं प्रत्यक्षमिति शक्यते वक्तुम्; सर्वप्रत्ययानां तु निरालम्बनत्वेन[1] पारमार्थिकाभावे नेदं सिध्यतीति प्रत्यक्षलक्षणाक्षेपेण सङ्गतमित्यर्थः[2]। कथं पुनः सर्व एव निरालम्बनः प्रत्ययः? उत्तरम्—प्रत्ययस्य हि निरालम्बनता स्वभाव उपलक्षितः स्वप्ने। एतदेवासिद्धमिति मत्वाह—ननु शुक्तिकायां रजतज्ञानं—स्मरामि—इति प्रमोषात् स्मृतिज्ञानमुक्तम्। एवं च स्वप्नज्ञानमपि स्मृतिरूपत्वात्सालम्बनमिति भावः। युक्तं रजादिष्विति। विशेषमाह। तत्र भास्वरं यद्रूपं शुक्तिकावर्ति चक्षुषा

---

१. -त्वे पारमार्थिकार्था- ग.    २. सङ्गतिरित्यर्थः. ग.

भाष्यम्

कश्चिद्विशेष इति । न, स्वप्ने विपर्ययदर्शनात् अविपर्ययाच्च इतरस्मिन् । तत्सामान्यादितरत्रापि भविष्यति इति चेत् ; यदि प्रत्ययत्वात् स्वप्नप्रत्ययस्य मिथ्याभावः, जाग्रत्प्रत्ययस्यापि

बृहती

चक्षुषा परिच्छिन्नं तद्रजतस्मृतेरुद्बोधकमित्युपपद्येतापि; स्वप्नादिषु पुनः कस्यचिदग्रहणादर्थान्तरे स्मृत्युद्बोधपरिहारः शक्य इव प्रतिभाति । तस्माद्वासनानिबन्धनमेवेदं ज्ञानजालमिति प्रतिपद्यामहे । सदृशदर्शनात् सदृशेऽर्थान्तरे स्मृतेरुद्बोधः; स्वप्ने पुनः कस्यचिदग्रहणादित्युक्तम् । तस्माद्वासनैव निमित्तमिति लघ्वी कल्पना; नार्थान्तराश्रयणम्, अव्याप्तेः । अतः कुड्यादिष्वपि ज्ञानं वासनानिमित्तमेव, न कुड्यार्थनिमित्तमिति स्थितिः । उच्यते— कार्यसिध्यर्थं हि कारणं कल्प्यते, न पुनः कार्यविनाशाय । स्वप्नादिषु च

पञ्चिका

परिच्छिन्नं तद्रजतस्मृतेरुद्बोधकमित्युपपद्येतापि स्मृतित्वम् । स्वप्नादिषु पुनः कस्यचिदग्रहणादर्थान्तरे स्मृत्युद्बोधपरिहारः शक्य इव प्रतिभाति । कस्मात्? बाह्यस्यार्थस्य स्मर्यमाणस्य गृह्यमाणस्य च कारणत्वानुपपत्तेः ! तस्माद्वासनानिबन्धनमेवेदं ज्ञानजालमिति प्रतिपद्यामहे । नन्वेवमपि क्वचिदर्थः क्वचिद्वासना कारणमिति कथमिदमेकान्तेन निश्चीयते--वासना निमित्तमिति; तत्राह—सदृशदर्शनात् सदृशेऽर्थान्तरे स्मृतेरुद्बोधः शुक्तिकारजतादिष्वेव संभवति ; स्वप्ने पुनः कस्यचिदग्रहणात् स्मृत्युद्बोधो न संभवतीत्युक्तम् ; वासना तु रजतादिज्ञानेष्वपि संभवति । तस्माद्वासनैव निमित्तमिति लघ्वी कल्पना । सर्वत्र संभवात् । नार्थान्तराश्रयणम्, अव्याप्तेः । स्वप्नादिषु । साधितमर्थमुपसंहरति—अतः कुड्यादिष्वपि ज्ञानं वासनानिमित्तमेव, न कुड्यादिनिमित्तमिति स्थितिः । उच्यते— कार्यसिध्यर्थं हि कारणं कल्प्यते, न कार्यविनाशायेति । सर्वजनसिद्धम् ।

१. इति. क.
२. वासनैव. ग.
३. Omitted. अर्थम्. ग.
४. कुड्याद्यर्थ- ग.
५. न पुनः. ग.

भाष्यम्

तथा भवितुमर्हति । अथ प्रतीतिस्तथाभावस्य हेतुः, न शक्यते 'प्रत्ययात् अयमन्यः'—इति वदितुम् । अन्यतस्तु स्वप्नप्रत्ययस्य मिथ्याभावो विपर्ययादवगतः । कुत इति चेत्,

बृहती

बहिरवभासा संवित्; सा च बाह्यमर्थमन्तरेण न संभवति; येन च विना यन्न संभवति, तत्तस्य कारणम् । तस्मादर्थ एव कारणमिति युक्तं कल्पयितुम् । निरालम्बनता तु नैव संवेद्यते प्रत्यक्षावबोधेन । तस्मादक्षजं ज्ञानम्, न वासनानिमित्तमित्युक्तम् । ननु च प्रतिबुद्धस्य—स्वप्नोपलब्धं मिथ्या—इति ज्ञानमुत्पद्यते; न च मिथ्याभावस्य कारणकल्पना युक्ता । ननु चाकारणस्य मिथ्याप्रत्ययस्याप्युत्पादो न घटते । सत्यम्, न त्ववगत्यनुगुणं तत्;

पञ्चिका

स्वप्नादिषु बहिरवभासा ज्ञानातिरिक्तग्राहिणी संवित्; सा च तादृशी बाह्यमर्थमन्तरेण न संभवति, प्रतिभासविरोधात्; येन[1] विना यन्न संभवति, तत्तस्य कारणम् । तस्मादर्थेन विनानुपपत्तेरर्थ एव कारणमिति युक्तं कल्पयितुम् । ननु च स्वप्नादिषु बाधकेन प्रत्ययेन निरालम्बनत्वमेव ख्याप्यते, तत्राह—निरालम्बनता तु नैव संवेद्यते प्रत्यक्षावबोधेन । किन्तु विवेको गृह्यते; यस्मात्स्वप्नेऽर्थ एव कारणम्, तस्मादक्षजं[2] ज्ञानम्; न वासनानिमित्तमित्युक्तं भाष्यकारेण । ननु च प्रतिबुद्धस्य[3]—स्वप्नोपलब्धं मिथ्या—इति ज्ञानमुत्पद्यते; न च मिथ्याभावस्य कारणकल्पना युक्ता । अस्यार्थः—स्वप्नादिज्ञानं तावन्मिथ्याज्ञानमिति[4] सिद्धम् । तत्र[5] यदि बाह्यालम्बनमेव, ततो मिथ्याभावो[6] न घटते जाग्रत्सम्यक्प्रत्ययवत् । न चार्थवत्त्वे सत्यपि मिथ्यात्वे कारणमन्यत्कल्पयि-

१. येन च यन्न भवति. क.
२. दर्थजम्. क, ग.
३. प्रबुद्धस्य. ग.
४. Omitted. ज्ञान. ग.
५. तच. ग.
६. भाव एव न. ग.

भाष्यम्

सनिद्रस्य मनसो दौर्बल्यान्निद्रा मिथ्याभावस्य हेतुः स्वप्नादौ स्वप्नान्ते च। सुषुप्तस्याभाव एव; अचेतयन्नेव हि 'सुषुप्तः'— इत्युच्यते। तस्माज्जाग्रतः प्रत्ययो न मिथ्येति। ननु

बृहती

तदानुगुण्ये हि मिथ्याज्ञानतैव न स्यात्। तस्माद्व्यामोहहेतवो मिथ्याप्रत्ययाः, व्यामोहनिबन्धनाश्च सांसारिक्यो वासनाः। अतो वासनानिबन्धनमेवेदं ज्ञानजालमुदितं तत्त्वविद्भिः। ननु परिहृतमेतत्—स्मरामि—इति

पञ्चिका

तुं युक्तम्। तस्मादर्थशून्यतैव मिथ्यात्वमिति। नं[1]नु चाकारणस्य मिथ्याप्रत्ययस्याप्युत्पादो न घटते। अस्यार्थः—यथा मिथ्यात्वं सत्यर्थे न घटते, तथार्थाभावे ज्ञानोत्पत्तिरपि न घटते; तेन ज्ञानोत्पत्त्यर्थमर्थोऽप्यङ्गीकार्य इति। सत्यम्। न घटते। न त्ववगत्यनुगुणं तत्; तदानुगुण्ये हि मिथ्याज्ञानतैव न स्यादिति। एतदुक्तं भवति—यद्यपि ज्ञानोत्पाद[3]कं कारणं कल्पनीयम्; तथाप्यर्थ एव न कल्प्यः, मिथ्यात्वानुपपत्तेः; किन्तु वासनामात्रम्। तस्माद्व्यामोहहेतवो मिथ्याप्रत्ययाः। व्यामोहः अर्थशून्यत्वं मिथ्याप्रत्ययस्य हेतुः। ननु वा[4]सनाः कथं संभवन्ति? तत्राप्याह—व्यामोहनिबन्धनाश्च सांसारिक्यो वसनाः। एतदुक्तं भवति - वासनातो व्यामोहः, व्यामोहाद्वासनेति अनादित्वात् बीजाङ्कुरवददोष इति। अतो वासनानिबन्धनमेवेदं ज्ञानजालमुदितं तत्त्वविद्भिः। ननु परिहृतमेतत्—स्मरामि—इति ज्ञानशून्यानि स्मृतिज्ञानान्येतानीत्यनेन सिद्धान्तमुपक्रमते। स्मरामि—इत्यंशस्य प्रमोषात् प्रत्यक्षव्यवहारप्रवर्तकत्वा

---

१. नन्वकारणस्य. क, ग.
२. Omitted. अपि. क.
३. दनाय. ग.
४. वासना कथं संभवति? तत्राह. ग.

बृहती

ज्ञानशून्यानि स्मृतिज्ञानान्येतानि । ननु स्मृतेरुद्बोधकारणासंभवान्नैतत् संभवति—इत्युक्तम् । तदसिद्धम्, स्वप्नादावपि हि चिन्तादृष्टादिसंभवात्; स्वप्नेऽपि हि सुखदुःखमनुभूयते; सुखदुःखहेतुश्चादृष्टम्। अतोऽदृष्टहेतुकमेव स्वप्नादिज्ञानं किञ्चिच्चिन्तादिहेतुकमित्युपपन्नं शुक्तिकादिज्ञानतुल्यत्वं स्वप्नादिज्ञानस्य। तदिदमुक्तम्–"स्तम्भः—इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यति" इति। कथमनेनेदमुक्तम्? निश्चितमवच्छिन्नमित्यर्थः ।

पञ्चिका

न्मिथ्यात्वमुपपन्नमर्थालम्बनत्वेऽपि स्वप्नादिज्ञानस्येत्यर्थः। ननु च स्मृतेरुद्बोधकारणाभावान्नैतत्संभवतीत्युक्तम्। तदसिद्धम्, स्वप्नादावपि हि चिन्तादृष्टादिसंभवात्। चिन्ता च न तदानींतन्येव सर्वत्र[1] कारणम्, किन्तु कियत्यपि पुरस्तने[2] काले निर्वृत्ताऽपि संस्कारमुखेन; तेन जाग्रद्दशाभाविनी चिन्तापि स्वप्नस्य हेतुरदृष्टं[3] च। कथमदृष्टस्य हेतुत्वम्? तत्राह— स्वप्नेऽपि हि सुखदुःखमनुभूयते; सुखदुःखहेतुश्चादृष्टमिति। स्वप्नादिज्ञानोत्पादनद्वारेण सुखदुःखे जनयत् स्वप्नज्ञानहेतुरित्यर्थः । अतोऽदृष्टहेतुकमेव[4] स्वप्नादिज्ञानम्। अदृष्टस्य हेतोर्गमकं स्वप्नादिज्ञानम्, अन्यथासंभवात्। किञ्चिच्चिन्तादिहेतुकमित्युपपन्नं स्वप्नादिज्ञानस्य[5] शुक्तिकादिज्ञानतुल्यत्वम्। अत्रायमाशयः—यत्र चिन्ता न दृश्यते,तत्र स्वप्नज्ञानकार्यबलेनैव कारणकल्पना; यत्र चिन्तादिकमस्ति, तत्र तदेव कारणमिति। एतेन[6] चेदमपि निराकृतम्—यदाहुः किमिति जाग्रतोऽपि स्वप्नादितुल्या[7] विभ्रमा न भवन्ति?—इति; कार्यैकगम्यमदृष्टमदृश्यमाने[8] कार्ये नास्त्येवेति। तदिदमुक्तम्। यदिदमस्माभिरुच्यते—अग्रहणात्मकः प्रमोषो मिथ्यात्वहेतुरिति, तदेव भाष्यकारेणोक्तम्—"जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यति" इति भाष्येण। कथमनेनेदमुक्तम्? इत्थ-[9]

---

१. स्वप्नकारणम्. ग.
२. पुरस्तात्, ग.
३. हेतुरित्यर्थः अदृ- ग.
४. हेतुरेव ग.
५. Omitted स्वप्नादिज्ञानस्य ग.
६. एतेनेद—ग.
७. स्वप्नतुल्यविभ्र- ग.
८. गम्यमेतददृश्य. ग.
९. Omitted इत्थमुक्तम्. ग.

भाष्यम्

जाग्रतोऽपि करणदोषः स्यात् । यदि स्यात्, अवगम्येत । स्वप्नदर्शनकालेऽपि नावगम्यते—इति चेत्, तत्र प्रबुद्धो ह्यवगच्छति 'निद्राक्रान्तं मे मन आसीत्'—इति ॥

बृहती

कथमवच्छिन्नोऽर्थोऽनवच्छिन्नो भवति ? कथं तर्हि प्रतिबुद्धः—मिथ्या—इति जानाति ? उक्तम्—स्मरामि—इति स्मृतिप्रमोषात् प्रत्यक्षसंमितं तत् । प्रतिबुद्धस्याचपैति प्रत्यक्षाभिमानः । अमुमेवार्थं स्पष्टीकरोति—"अथ प्रतीतिस्तथाभावस्य हेतुः, न शक्यते प्रत्ययादयमन्यः—इति वदितुम्" । "यदि प्रत्ययत्वात्" इति च । नावगतिं मिथ्येति मन्यते ; "अन्यतो हि स्वप्नप्रत्य-

पञ्चिका

मुक्तम्—निश्चितमवच्छिन्नमित्यर्थः । कथमवच्छिन्नोऽर्थोऽनवच्छिन्नो भवति ? भाष्यकारो हि सुपरिनिश्चयेन मिथ्यात्वाभावं ब्रुवन्ननिश्चयात् मिथ्यात्वमाह । यदि च प्रमोषादन्यथैव मिथ्यात्वम्, कथमनिश्चयेन मिथ्यात्वम् ? तस्मात्सुपरिनिश्चयेन विपर्ययाभावाभिधानादग्रहणमेव मिथ्यात्वे कारणम् । नन्वग्रहणान्मिथ्यात्वे सर्वज्ञानानि मिथ्या स्युः, सर्वात्मनार्थस्य केनचिज्ज्ञानेनाग्रहणात्; अनेन चाभिप्रायेण पृच्छति—कथं तर्हि प्रबुद्धो मिथ्येति जानातीति । उत्तरम्—उक्तं स्मरामीति प्रमोषात् स्मृतित्वापरामर्शात्प्रत्यक्षसंमितं तदिति प्रत्यक्षसाधारणेन रूपेण प्रतिभासमानं प्रत्यक्षव्यवहारं प्रवर्तयतीति व्यवहारविसंवादादप्रामाण्यम् । कथं तर्हि निश्चयः—स्मरणमेतदिति ? अत्राह—प्रबुद्धस्य चापैति प्रत्यक्षाभिमानः । इन्द्रियदौर्बल्ये निश्चिते प्रत्यक्षतानुपपत्तेः स्मृतित्वनिश्चयः । अमुमेवार्थमग्रहणात्मको भ्रम इति स्पष्टीकरोति "अथ प्रतीतिस्तथाभावस्य हेतुः, न शक्यते—प्रत्ययादयमन्यः—इति वदितुम्, यदि प्रत्ययत्वात्" इति च ।

---

१. विपर्यासा—ग.
२. ज्ञानेन चाग्र—क.
३. Omitted. च. ग.
४. समानम्. ग.
५. प्रतिभासमाना ग.
६. हि निश्चिते प्रत्यक्षानु—क.

भाष्यम्

शून्यस्तु । कथम् ? अर्थज्ञानयोराकारभेदं नोपल-

बृहती

यस्य मिथ्याभावः" इति प्रमोषनिमित्ततां दर्शयति । कुतः? इन्द्रियदौर्बल्यदर्शनात् —"निद्राक्रान्तं मे मनः"—इत्यादिना । दौर्बल्यं च कार्याक्षमत्वम्, न कार्यान्तरोत्पत्तिसमर्थत्वम् —इत्युक्तम् ॥

ननु "शून्यस्तु" इति सैव निरालम्बनतोपन्यस्ता प्रत्ययस्यार्थशून्यतां वदता; निरस्ता च सा शुक्तिकारजतज्ञानतुल्यताभिधानेन। स एवायं निरासः पुनराक्षिप्यते । कया युक्त्या ? संवेद्यविषयत्वात् संविदः ।

पञ्चिका

कथमनेन भाष्येणेदं स्पष्टीकृतमित्यत्राह—नावगतिं मिथ्येति मन्यते; अन्यतो हि स्वप्नप्रत्ययस्य मिथ्याभाव इति प्रमोषनिमित्ततां दर्शयति । कुतः प्रमोषनिमित्ततोक्तेत्यत्राह—[1]इन्द्रियदौर्बल्यदर्शनात् । इन्द्रियदौर्बल्यं यस्माद्दर्शितम्—"निद्राक्रान्तं मे मनः" [2]इत्यादिना भाष्येण । दौर्बल्यं च कार्याक्षमत्वम्, न कार्यान्तरो[3]त्पत्तिनिमित्तत्वमित्युक्तं वृत्तिकारग्रन्थे । तस्मादग्रहणात्मको भ्रमः, नार्थशून्यात्मक इति सिद्धम् ॥

ननु शून्यस्त्विति सैव निरालम्बनतोपन्यस्तेति । अनेनाधिकरणारम्भमाक्षिपति । आक्षेपे चेयं[4] युक्तिः—निरालम्बनता पूर्वं निरस्तैव; शून्यस्त्विति भाष्येणापि सैवोपन्यस्ता । [5]न त्वेवं शङ्कनीयम्—पूर्वं बाह्यालम्बनाभाव आशङ्क्य निरस्तः, संप्रति ज्ञानस्याप्यभाव इति माध्यमिकदर्शनमुपन्यस्य निराक्रियते—इति; यस्मात्प्रत्ययस्यै[6]वार्थशून्यतोपन्यस्यते, न पुनः—प्रत्ययोऽपि नास्ति—इति। तस्मात् बाह्यालम्बनशून्यतैवेयमुच्यते; सा च निरस्ता । तस्मात्पुनर्निरासायाधिकरणारम्भोऽनर्थक इति । अत्रोत्तरम्—स एवायं निरासः पुनराक्षिप्यत इति ।

१. Omitted. इन्द्रिय—नात्. ग.
२. इत्येवमादिना ग.
३. उत्पत्तिसामर्थ्यम्. ग.
४. Omitted. इयम्. ग.
५. न चैवम्. ग.
६. स्यैवेयमर्थ—ग.

## बृहती

सा चात्मनो बुद्धेर्वा ज्ञान एव वा; स एवास्या विषयो युक्तः, यत्स्था सा संवित् । एवं च स एव संवेद्य इति प्राप्नोति । तस्मात् न विषयान्तरं संवेदयितुं क्षमा । शब्दस्पर्शरूपरसगन्धात्मकता विज्ञानस्यात्मनो बुद्धेर्वा प्रतिपत्तव्या । किं "अर्थज्ञानयोराकारभेदं नोपलभामहे" इति ज्ञानशब्दः प्रदर्शनार्थ एवाभिप्रेतः ? न ; संविदाधारे हि संवेद्ये ज्ञानमेवावशिष्यते, बुध्यात्मनोः शब्दादितुल्यत्वात् । ज्ञानाविनाभूता च संवित् । सुषुप्त्यवस्थायां तस्या आत्मनि बुद्धौ चादर्शनात् । ज्ञानोपसंहृतिर्हि स्वापः । इदमालोच्योक्तम्—" अर्थ-

## पञ्चिका

कया युक्त्येत्याक्षेपयुक्तिं पृच्छति । उत्तरम्—संवेद्यविषयत्वात् संविद इति । अस्यार्थः—यत्संवेद्यते प्रतिभास्यते तदेव संविदो विषयः । सा चात्मनो बुद्धेर्वा ज्ञान एव वा । सा च संवित् आत्मनो धर्मः बुद्धेर्वा मनसो वेत्यर्थः ; बुद्धिशब्देन मन एवोच्यते ; ज्ञान एवावस्थिता[1] ; ज्ञानधर्मो वेत्यर्थः । ततः किमित्याह[2]—स एवास्या विषयो युक्तः । यत्स्था सा संवित् संबन्धयति । एवं च सति स एव आश्रय एव संवेद्यते । तस्मात् न विषयान्तरमाश्रयात् संवेदयितुं क्षमा संवित् । तथा च सति सर्वो विषयः स्यात् । न चाश्रयाश्रयिभावादन्यः सम्बन्धोऽस्ति । तस्मादाश्रय एव विषय इति युक्तम् । शब्दस्पर्शरूपरसगन्धात्मकता आश्रयभूतस्य ज्ञानस्यात्मनो बुद्धेर्वा प्रतिपत्तव्या । शब्दादीनां प्रतिभासमानत्वेन विषयत्वात् विषयस्य चाश्रयत्वात् ज्ञानदीनां चाश्रयत्वेन संभाव्यमानत्वात् । "किमर्थज्ञानयोराकारभेदं नोपलभामहे" इत्यत्र भाष्ये ज्ञानशब्दः प्रदर्शनार्थ एवाभिप्रेतः बुद्ध्यात्मानावुपलक्षयति ? नेत्युत्तरम । नोपलक्षणमेतत्, ज्ञानमेव । यतः संविदाधारे हि संवेद्ये ज्ञानमेवावशिष्यते । कस्मात् ? बुद्ध्यात्मनोः शब्दादितुल्यत्वात् । अस्यार्थः—संवित्तावत्प्रत्यक्षा, तदप्रत्यक्षत्वे सर्वार्थानां दर्शनानुपपत्तेः । तदुक्तम्—"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति" इति । न च निराकारायाः[3] प्रत्यक्षना युक्ता । एकश्चायमाकारो गन्धाद्यात्मकः ; प्रतीतस्य विषयत्वे एकस्याः

---

१. एवावस्थितः ग.
२. किमित्यत्राह. ग.
३. निराकाराप्रत्यक्षा ग.

भाष्यम्

**भामहे । प्रत्यक्षा च नो बुद्धिः; अतस्ताद्भिन्नमर्थरूपं नाम न**

बृहती

**ज्ञानयोराकारभेदं नोपलभामहे''—इति । क्व पुनरिदं दृष्टम्—विषय एव संविदा संवेद्यते—इति ? संवेद्यतयैव हि संवेद्यतामवगच्छामः, न विषयतया। केन वोक्तम् न संवेद्यतया संवेद्यतावगम्यते—इति ? किन्तु संविदः प्रत्यक्षत्वात् तस्याश्च ज्ञानात्मकत्वात् शब्दादिरूपता तस्यैवेति मन्यामहे । को हि नाम द्वयोः प्रत्यक्षतां कल्पयति संविदः शब्दादेश्च ? तस्मात् संविद्रूपमेवेदं शब्दादिजातमिति स्थितिः, न बाह्यं किञ्चनास्तीति ।**

पञ्चिका

संविदो विविक्तो विषयः स्यात्[१] । अतोऽसावाकारः संविद एव । सा च संविन्न बुद्धिरूपा, नाप्यात्मरूपा, तयोः शब्दादितुल्यत्वात्, संविद्व्यतिरेकेणापि भावात्तादात्म्यानुपपत्तेः । ज्ञानात्मकता तु संविदो युक्ता, ज्ञानाव्यभिचारित्वात् । तदाह—**ज्ञानाविनाभूता च संविदिति** । ननु सुषुप्तावस्थायां ज्ञाने सत्यपि संविन्नास्तीति यो मन्यते तं प्रत्याह —**ज्ञानोपसंहृतिर्हि स्वाप इति** । [२]इदमालोच्योक्तम्—**अर्थज्ञानयोराकारभेदं नोपलभामह इति** । अभिप्रायमजानन् पृच्छति—**क्व पुनरिदं दृष्टम्, विषय एव संविदा संवेद्यत इति ?** यावता संवेद्यतयैव हि संवेद्यतामवगच्छामः, न विषयतया । विषयशब्देनात्राश्रय एवाभिप्रेतः । कथं पुनरत्रानाश्रयस्यासंबन्धस्य संवेद्यत्वम् ? किमत्र संबन्धान्तरेण ? संवेद्यतैव हि सम्बन्धः । तथा च सत्यप्याश्रयत्वे गुणं प्रति द्रव्यस्य न संवेद्यता । यदि च सम्बन्धान्तरापेक्षा, अनवस्था स्यात् । पूर्वोक्तमभिप्रायं विवृणोति—**केन वोक्तमित्यादिना । को हि नाम द्वयोः प्रत्यक्षतामवकल्पयति संविदः शब्दादेश्च? तस्मात्संविद्रूपमेवेदं शब्दादिजातमिति स्थितिः, न बाह्यं किञ्चनास्तीति ।**

---

१. एतदनन्तरं ''न चाश्रयाश्रयिभावादन्यः सम्बन्धोऽस्ति । तस्मादाश्रय एव विषय इति युक्तम् । एवं च सति स एव आश्रय एव संवेद्यते । '' इति प्रागुक्तवैपरीत्येन दृश्यते ग.

२. तदिदम्. ग.

बृहती

ननु चायथार्था संवित् प्राप्नोति; शब्दाद्याकारत्वे हि संविदो ग्राह्यग्राहकसंवेदनं नोपपद्यते । तस्मात् कल्पना सेति कल्पनीयम् । न च सर्वलोकावगम्योऽर्थः कल्पनेति युक्तम् । न चार्थान्तरानुसन्धानानुविद्धं क्वचित् कल्पनाशब्दाभिलपनीयं लोके दृष्टम् । तस्माद्वरमुभयोः प्रत्यक्षता, न पुनरवगतेरपलापः । संविदेव हि तदा हीयेत, कस्येयं शब्दादिरूपता ? युक्तं यदि ग्राह्यग्राहकसंवेदनमाकारान्तरेण स्यात्; न चाकारान्तरमुपलभामहे; नीलाद्यकारमेव ह्युभयं प्रतिभाति । एकाकारं चोभयप्रतिभानं किमन्यदतः प्रतिभानात् ? तदिदमुक्तम्—"अर्थज्ञानयोराकारभेदं नोपलभामहे" इति । "प्रत्यक्षा च नो बुद्धिः" इत्येतदुक्तं भवति—प्रत्यक्षा च नः संवित्—

पञ्चिका

ननु चायथार्था संवित्प्राप्नोति; शब्दाद्याकारत्वे हि संविदो ग्राह्यग्राहक[1]-संवेदनं नोपपद्यते । एकत्वात् संविदो ग्राह्यग्राहकत्वं नोपपद्यत इत्यर्थः । तस्मात् कल्पना सेति कल्पनीयम् । नान्यथोभयप्रतिभासोपपत्तिः । न च सर्वलोकावगम्योऽर्थः कल्पनेति युक्तं वक्तुम् । बाधकाभावात् कारणदोषाभावाच्च। न चार्थान्तरानुसन्धानानुविद्धं क्वचित् कल्पनाशब्दाभिलपनीयं लोके दृष्टम् । यथा निर्विकल्पकमेव । न चात्रार्थान्तरेण योजनास्ति यथा शुक्तिकारजतादिज्ञाने । तस्माद्वरमुभयोः संविदः शब्दादेश्च प्रत्यक्षता ; न पुनरवगतेरपलापः, दृष्टविरोधप्रसङ्गादिति भावः । संविदेव हि तदा हीयेत, कस्येयं शब्दादिरूपता ? अत्र समर्थनम्[2]—युक्तम्, यदि ग्राह्यग्राहकसंवेदनमाकारान्तरेण स्यात् । अस्यार्थः—यदि ग्राह्यस्य ग्राहकस्य[3] संविदश्चाकारत्रितयमवभासेत, तदा त्रितयमपि प्रत्यक्षं स्यात्; न चाकारान्तरमुपलभामहे; नीलाद्याकारमेव ह्युभयं प्रतिभातीति । एकाकारं च यदुभयप्रतिभानम्, तत्किमन्यदतः प्रतिभानात् ? प्रतिभानमात्रमेव भवेदित्यर्थः । तदिदमुक्तम्—"अर्थज्ञानयोराकारभेदं नोपलभामहे" इति । "प्रत्यक्षा च नो बुद्धिः" इति । मीमांसकस्य बुद्धेरनुमेयत्वादसिद्धमेतदिति मत्वान्यथा व्याचष्टे—

१. ग्राहकत्वम्. ग.
२. समाधिः ग.
३. ज्ञानस्य. ग.

बृहती

इति । प्रत्यक्षश्चायं नीलाद्याकारः । अतस्तदाकारेयं संवित् उभयथा प्रतिभाति । तस्मादर्थशून्येयं संविदिति सिद्धम् । अतः—तत्संप्रयोगात् तत्संप्रत्ययः—इति प्रलापोऽयम् । किंनिमित्तं पुनरुभयथा प्रतिभानम्? "आकारभेदं नोपलभामहे"—इति प्रत्युक्तम् । प्रतिभानकारणं तु प्रतिभानादेवास्तीत्यवगन्तव्यम् । सा चेयं वासनानादिकालीना—इत्युक्तं शून्यवादिभिः ।

पञ्चिका

प्रत्यक्षा च नो बुद्धिरित्येतदुक्तं भवति—प्रत्यक्षा च नः संविदिति । यदा च प्रत्यक्षा संवित् तदा निराकारायाः प्रत्यक्षत्वानुपपत्तेर्नीलाद्याकारोऽपि तस्या एवेति । तदाह-प्रत्यक्षश्चायमित्यादि । शेषं सुगमम् । तस्मादर्थशून्यः प्रत्ययः ।

अत्रायं पूर्वपक्षसंक्षेपः-संवित्तावत्प्रत्यक्षा । तत्र यदि ज्ञानमपरम् अर्थश्चापरोऽभ्युपगम्यते, तदात्र त्रयाणामाकारास्त्रयो भवेयुः, एकश्चायमाकारो नीलादिः प्रथते । स चेदर्थस्य ज्ञानस्य वा स्यात्, तदा निराकारा संविदप्रत्यक्षा स्यात् । तदप्रत्यक्षत्वे चार्थो ज्ञानं चेति द्वयमसंवेद्यमापद्येत । संविदि चेदयमाकारो निवेशितः, अपह्नुते तर्हि भवेतामर्थज्ञाने, तयोराकारविरहे संवेद्यत्वानुपपत्तेः; असंवेद्यस्य च दुरभ्युपगमासत्तेति ।

यत्पुनः कीर्तिनोदितम्—यदि नीलाद्याकारा संविन्नाभ्युपेयेते, तदा प्रतिकर्मविभागो न स्यात्; न हि निराकारं संवित्तिमात्रं नीलसंविदिति शक्यावगमम् । तदुक्तम्—"न हि संवित्तिसत्तैव तद्वेदना युक्ता, तस्याः सर्वत्राविशेषादविशेषप्रसङ्गात् । तां तु सारूप्यमाविशत्सरूपयितुं घटयेत्" इति । साकारा चेत् संवित् ऊरीकृतोऽर्थः, इदानीं तदतिरेकी विद्यते—इति गलितसारेयं कथा । तदङ्गीकारे प्रामाणाभावात् । आकारवैचित्र्यं चेत्संविदामन्यथानुपपद्यमानं प्रमाणमिति कल्प्येत, तन्न; समनन्तरप्रत्ययप्रभावादपि तदुपपत्तेः । तदुक्तम्—"नियमं यदि च ब्रूयात् प्रत्ययात्समनन्तरादिति ।" दृष्टश्चायं समनन्तरप्रत्ययस्य महिमा स्वप्नादिषु, बाह्यार्थविरहे विविधाकारसंवेदनोदयाविवादात् ।

---

१. वास्थीयेत. ग.
२. नाभ्युपेयेत. ग.
३. सत्तैव. क.
४. प्रसङ्गात्तुसारूप्यम्. ग.
५. वैचित्र्यं यत्तत्संवि—ग.
६. विरहेऽपि विविध—ग.

पञ्चिका

तथा यदपरं कीर्तिनाभिहितम्—यदि संविदो नीलादिकं भिद्यते, तदा संविदं विनाऽपि किमिति नावभासेत? न हि भिन्नयोर्घटपटयोः सहोपलम्भो नियतः, कदाचिद[1]सहाप्युपलम्भो भवेत्। न हि संविदं विना कस्यांचिद्दशायामर्थः प्रकाशते। तस्मादर्थतद्धियोरभेद इति। तदुक्तम्—

"सहोपलंभनियमादभेदो नीलतद्धियोः।
भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये"॥ इति॥

तथा संविदतिरेकी प्रकाश इति नोपपद्यते, जडस्य प्रकाशायोगात्।

त[2]दिदं किमिति नोपन्यस्यते? किमत्र पृच्छ्यते? अनुपन्यसनीयमेवेदम्, पूर्वपक्षानर्हत्वात्। तथा हि प्रतिकर्मविभागो विनाप्यर्थाकारतां घटत एव, विशिष्टार्थसंबन्धित्वेनैव फलभूतायाः संविदो निराकाराया अपि स्फुरणाद्व्यतिरिक्त एवार्थः संविदो विशेषमावहतीति सर्वस्वसंवेद्यम्। किं च यदाकारं यतश्च संवेदनमुत्पद्यते यदि तदालम्बनं तर्हि धारावाहिकविज्ञानानां पूर्वपूर्वमालम्बनमुत्तरोत्तरस्य स्यात्, उत्पादकत्वात्सरूपत्वाच्च। तदुक्तं कीर्तिनैव—

"तत्सारूप्यतदुत्पत्ती यदि संवेद्यलक्षणम्।
वेद्यं हि [3]स्यात्समानार्थं विज्ञानं समनन्तरम्॥" इति।

तथा सहोपलम्भनियमोऽपि विचारणीय एव। किं संवित् संवेद्यं च सहैवोपलभ्यते यतः, तस्मादभेद इति? तदिद[4]मसिद्धम्—न हि संविदोऽर्थस्य वापर उपलम्भोऽस्ति। [5]अतोऽर्थस्य स एवोपलम्भो या संवित्, संवि[6]दोऽपि नापर उपलम्भोऽस्ति, स्वयमुपलम्भरूपत्वात्। अतोऽर्थस्य संविदश्च स एवोपलम्भो भेदे[7]ऽनुपपद्यमानोऽभेदं साधयतीति। तदपि नोपपद्यते, भेदेऽप्युपपत्तेः; भिन्नस्यापि हि नीलादेः सम्बन्धिनी संवित् स्वयं प्रकाशरूपत्वान्न प्रकाशान्तरमपेक्षत इति काऽनुपपत्तिः? अतोऽयम[8]प्यहेतुः। यच्चेदमुच्यते—यदि भिन्नोऽर्थस्तदा संविदं विना[9] किमिति न भासत इति, तदिदं बालजल्पितमिव प्रतिभाति। किमिदं संविद्व्यतिरिक्तं भा[10]सनं नाम, यदसत्यां संविदि किमिति न भवतीति

---

१. चित् सहापि. क.
२. तत् किमिति. ग.
३. संवेद्यं स्यात्. ग.
४. मसंबद्धम्. ग.
५. अथार्थस्य. ग.
६. संविदा विनापर. ग.
७. भेदोऽनुपपद्य. क.
८. Omitted. अपि. ग.
९. विनापि किमिति. ग.
१०. भासमानम्. ग.

भाष्यम्

किञ्चिदस्तीति पश्यामः । स्यादेतदेवम्, यद्यर्थाकारा बुद्धिः स्यात्, निराकारा तु नो बुद्धिः; आकारवान् बाह्योऽर्थः; स हि बहिर्देशसंबद्धः प्रत्यक्षमुपलभ्यते । अर्थविषया हि प्रत्यक्षा

बृहती

उच्यते—उभयप्रतिभानं नीलपीतादावसिद्धम्; ग्राह्यतयैव तत् प्रतिभाति; न ग्राहकतया । किन्तु ग्राहकं—ग्राहकमित्येव मनुते, न—नीलम्, पीतम्—इति वा। तदिदमुक्तम्—"स हि बाहिर्देशसम्बद्धः प्रत्यक्षमुपलभ्यते"

पञ्चिका

परं प्रत्यासंज्यते[1] ? संविदेव भासनम्, तां च विना भासनं[2] नास्त्येव; न हि संविदोऽपरा संविदस्तीति । तथा जडस्यापि सम्बन्धिनी संविदविरुद्धा, न चाजडस्य संविदपेक्षत्वमस्तीति । तस्मादतिपेलवमिदं सकलमेव कीर्तिनाभिहितमिति नोपन्यस्तं टीकाकारेणेत्यनवद्यम् ।

उच्यते--उभयप्रतिभानमित्यादिना सिद्धान्तमुपक्रमते । तत्र चायमाशयः—संविदर्थश्च द्वयं तावत्प्रत्यक्षम्, न तु ज्ञानम् । तत्र यद्यप्येक आकारः प्रतिभाति; तथापि न संविदद्वैतम्, अर्थस्य संवित्तेश्च[3] भेदेनावभासनात् । न च भेदो मिथ्येति युक्तम्, बाधकारणदोषाभावेऽपि[4] मिथ्यात्वेऽभ्युपगम्यमानेऽतिप्रसङ्गदोषसमापत्तेः । न च वाच्यं नीलाद्याकारातिरेकिणी निराकारा संवित् कथमध्यक्षेति, तस्याः फलमात्ररूपत्वात् । न च फलस्य रूपान्तरापेक्षा,[5] अपेक्षायां फलत्वानुपपत्तेः । कथमिदानीं ज्ञानसिद्धिः ? उच्यते—फलभूतायाः संविदः कार्यरूपत्वात्, कार्यस्य च कारणमन्तरेणानुपपत्तेः, नित्यकार्योदयापत्त्या चात्मनः स्थिरस्य[6] कारणत्वे निरस्ते, कादचित्कं ज्ञानमनुमीयते[7] । ननु[8] किंरूपं तदनुमीयताम् ? तत्र नीलादिकमेव तदीयं रूपं भवितुमर्हति,

१. आशङ्कते. ग.
२. भासमानम्. ग.
३. Omitted. च. ग.
४. Omitted. अपि. ग.
५. Omitted. रूपा—क्षा. क.
६. शरीरस्य. ग.
७. ज्ञानं कल्प्यते. ग.
८. ननु किं प्रत्यक्षमनु—ग.

भाष्यम्

बुद्धिः, न बुद्धिविषया; क्षणिका हि सा, न बुध्यन्तर-

बृहती

इति । "अर्थविषया हि प्रत्यक्षा बुद्धिः, न बुद्धिविषया" इति—ग्राह्यतयैव रूपप्रतिभानं दर्शयति, ग्राहकप्रतिभानं तु न रूपविषयम् । किं तर्हि? ज्ञानविषयम् । ननु च रूपान्तरमेव नोपलभ्यत इत्युक्तम् ; कथमत्र विषयान्तरोपन्यासः ? न हि ; प्रत्यक्षवादिनो ह्ययं दोषः; आनुमानिकज्ञानवादिनस्तु नायं पर्यनुयोगः । नाप्यनु-

पञ्चिका

तदतिरेकिणोऽपरस्याभावात् ? अविशेषज्ञस्य चोद्यमेतत् । न ह्यनुमेयानां रूपान्तरोपलब्धिरस्ति ; सन्मात्रग्राह्यनुमानम् । तस्मादर्थालम्बनता सिद्धा प्रत्ययानामिति । उभयप्रतिभानं[1] ग्राह्यग्राहकाकारप्रतिभानं नीलपीतादावसिद्धम् । यदि[2] हि नीलादिकं ग्राहकात्मकं ज्ञानरूपं प्रतीयेत[3], तदा ज्ञानविषयो[4] संवित् प्रत्यक्षा संवित्स्यात् ; तदा ज्ञानमेव नीलाद्यात्मकं स्यात् । न त्वेतदस्ति; ग्राह्यतयैव नीलादिकं प्रतिभाति, न ग्राहकतया ज्ञानरूपतया[5] । ननु यदि ग्राहकं नीलादिरूपं न भवति, किंरूपं तदित्यत्राह—किं तु ग्राहकम्[6] ग्राहकमित्येव मनुते । युक्त्या कल्पयति ; युक्त्या कल्पनं मननम् ; ग्राहकैकरूपं ज्ञानमनुमीयत इत्यर्थः । तदिदमुक्तमर्थज्ञानयोरन्यत्वम्—"स हि बहिर्देशसम्बद्धः प्रत्यक्षमुपलभ्यते" इति । कथं पुनरन्यत्वमत्राह—अर्थविषया हि प्रत्यक्षा बुद्धिः; न बुद्धिविषयेति ग्राह्यतयैव रूपप्रतिभानं दर्शयति । न च ज्ञानमप्यनुमीयमानं नीलादिरूपमनुमीयते । तदाह—ग्राहकप्रतिभानं तु न रूपविषयम् । किं तर्हि ? ज्ञानविषयम् । ननु[7] च रूपान्तरमेव नोपलभ्यत इत्युक्तम् । तेन नीलादिरूपमेव ज्ञानं बलादापद्यत इति । कथमत्र विषयान्तरोपन्यासः ? नीलादिप्रतिभानं ग्राह्यविषयम् , ग्राहकप्रतिभानं तु ज्ञानविषयमिति विषयान्तरोपन्यासो न घटते । उत्तरम्[8]—प्रत्यक्षवादिनो ह्ययं दोष इति । पूर्वमेव व्याख्यातम् । ननु च

---

१. उभयत्र. ग.
२. यदि पुनः ग.
३. प्रतीयते. ग.
४. विज्ञानविषयापि. ग.
५. Omitted ज्ञानरूपतया. ग.
६. Omitted ग्राहकम्. ग.
७. रूपान्तरेणैव नोपपद्यते. ग.
८. उभय. ग.

बृहती

मानाद्रूपग्रहणम् ; सन्मात्रग्राह्यनुमानं भवति । ननु च संवित् प्रत्यक्षेत्युक्तम् । अन्या च संवित्, अन्यत्संवेद्यम् ; द्वयोरपि प्रत्यक्षत्वे रूपद्वयो पलब्ध्या भवितव्यम् । न चासावस्ति । तस्मात् स एव संविद्विषयापलापो न्याय्यतां प्रतिपद्यते । अविवेकोऽयमायुष्मतः ; न हि फले रूपान्तरतेष्यते ; रूपान्तरसंवित्तौ हि फलद्वयापत्तिः ; एकसंवेद्यविषयैव ह्येका संवित् ; न सा वेद्यद्वयविषया । किमसंवेद्यैव संवित् ? न ब्रूमः—न संवेद्या संवित्— इति ; संवित्तयैव हि संवित् संवेद्या, न संवेद्यतया । केयं वाचोयुक्तिः —संवेद्या, न संवेद्या—इति ? इयमियं वाचोयुक्तिः—नास्याः कर्मभावो विद्यते—इति । कर्म च संवेद्याभिधेयम्, न संवित् । तस्मान्न पृथक् संवेद्य-

पञ्चिका

संवित्प्रत्यक्षेत्युक्तम् । ततः किमित्यत्राह[1]–अन्या च संविदन्यत्संवेद्यमिति । भवान् मन्यते । पुनरपि ततः किमित्याह—द्वयोश्च संवित्संवेद्ययोः प्रत्यक्षत्वे रूपद्वयो-पलब्ध्या भवितव्यम् ; न चासौ रूपद्वयोपलब्धिरस्ति । तस्मात्स एवायं विषया-पलापो न्याय्यतामापद्यते । अस्यार्थः—पुनरपि सिद्धमद्वैतम्, ज्ञानस्यापि तदानीं संविदतिरिक्तस्यानुपपत्तेः ; सर्वसंविदां स्वात्ममात्रपर्यवसायिनीनां विषया-न्तरसिद्धावव्यापारात्, संविदायत्तत्वाच्च सर्वसिद्धीनामिति । अविवेकोऽयमायुष्मत ; न हि फले रूपान्तरतेष्यते ! तेन नीरूपा संवित्प्रत्यक्षेत्यर्थः । कस्मात्पुना रूपान्तरं नेष्यते, तत्राह—रूपान्तरसंवित्तौ हि फलद्वयापत्तिः स्यात् । नीलादेः[2] संवेद्यस्यैकं तावत् फलम्, तथा संविदोऽपि यद्यपरं फलातिरेकि रूपान्तरं स्यात्, तदा फलान्तरं भवेत् ; न चैतदस्ति । एकसंवेद्यविषयैव ह्येका संवित् ; न सा वेद्यद्वयविषया । किमसंवेद्यैव संवित् ? यद्येकमेव नीलादिकं संवेद्यम् , एवं तर्हि किमसंवेद्यैव संवित् ? तथा च सति कथं शशविषाणवदसं-वेद्यायाः संविदः सत्ताभ्युपगम[3] इति हृदि स्थितम् । न ब्रूमो न संवेद्येति ; सं-वित्तयैव हि संवित्संवेद्या, न संवेद्यतया । केयं वाचोयुक्तिः—संवेद्या, न सं-

---

१. तथापि किमित्यत्राह. ग. यद्येकमेव. क.
२. Omitted नीलादेः— ३. गम ऊह्यत इति. ग.

बृहती

तया ग्रहीतुं शक्यते । न चासंवेद्यैव संवित्, तन्मूलत्वात् सर्वभावानां संवेद्यभावस्य । किं तर्ह्यत्रानुमानिकम् ? फलमेव हि प्रमाणमिति प्रमाणविदो मन्यन्ते । किमिति मन्यन्ते ? न पुनः—फलमेव—इति स्थिताः । कोऽभिप्रायः ? एवं हि लौकिको व्यवहारः । किमिदम्—लौकिको व्यवहारः—इति ? इदमिदम्—आकारद्वयं लौकिकाः प्रतिपद्यन्त इत्यर्थः । सिद्धं तर्ह्यर्थद्वयम्, विज्ञानस्यासंवेद्यत्वात् अर्थस्य च संवेद्यत्वात् । किमसंवेद्यमेव विज्ञानम् ?

पञ्चिका

वेद्येति ? इयमियं वाचोयुक्तिः—नास्याः कर्मभावो विद्यते—इत्यर्थः[1] । कर्म च संवेद्याभिधेयम्, न संवित् । स्वयंप्रकाशरूपत्वात्संविदः । न च पराधीनप्रकाश इति न कर्मता ; न च प्रकाशाभावः । प्रकाशमानं चास्तीत्युच्यते ; न पुनः कर्मतैव विवक्षिता ; प्रत्यक्षशब्दोऽपि संविदामपरोक्षतया, न पुनरिन्द्रियविज्ञानवेद्यतयैवेति मन्तव्यम् । न चासंवेद्यैव संविदिति । न चाप्रकाशरूपेत्यर्थः । तन्मूलत्वात्संवेद्यभावस्य सर्वभावानाम् । न हि संवित्तावप्रकाशमानायाम्—संवेद्यमिदम्—इति भवति मतिः । किं तर्ह्यत्रानुमानिकमिति । यदि संवित्प्रत्यक्षा, किमपरमनुमेयम् ? न च वाच्यम्—फलभूता संवित्, तत्र कारणं प्रमाणरूपं फलजनकम्[2]नुमेयमिति ; फलमेव हि यस्मात्प्रमाणमिति प्रमाणविदो मन्यन्ते । किमिति मन्यन्ते ? न पुनः फलमेव इति स्थिताः[3] । कोऽभिप्रायः ? एकस्मिन् वस्तुनि किमिति विभाग[4]आश्रीयत इत्यर्थः । उत्तरम्—एवं हि लौकिको व्यवहारः । तेन लौकिकव्यवहारानुसारित्वादुभयमङ्गीक्रियत इति । प्रत्युत्तरम्—किमिदम्—एवं हि लौकिको व्यवहार इति ? प्रतिवचनम्—इदमिदम्, आकारद्वयं लौकिकाः प्रतिपद्यन्त इत्यर्थः । एतदुक्तं भवति—लौकिकाः कार्यकारणरूपेणाकारद्वयं प्रतिपद्यन्ते, न पुनरेकतां कार्यकारणयोर्मन्यन्त इति । अस्योपपत्तिं[5] ब्रूते —सिद्धं तर्ह्यर्थद्वयम् । संविद्व्यतिरिक्त एकस्तावदर्थो ज्ञानरूपः, अपरश्च नीलादिरूपः । कथं[6] पुनरर्थस्य ज्ञानस्य च भेदः ? तत्राह—विज्ञानस्यासंवेद्यत्वादर्थस्य च संवेद्य-

---

१. Omitted अर्थः. क.
२. जनकत्वम्. ग.
३. स्थिते कोऽभिप्रायः. ग.
४. आश्रित. ग.
५. अस्योपरि ब्रूते. क.
६. कथं न पुन- क.

बृहती

**बाढमसंवेद्यम्, न त्वप्रमेयम्। कः पुनः प्रमेयसंवेद्ययोर्विशेषः? यत्र हि विषयस्य स्वरूपं परिच्छिद्यते, तत् संवेद्यमित्युच्यते। अतः स्वसंवेदनं प्रत्यक्षमिति प्रमाणविदः। असंवेदनं च प्रमितिज्ञाने, आकारान्तराग्रहणात्। तस्मात् ज्ञानं प्रत्यक्षमित्ययुक्तम्। क्षणिकत्वाच्चास्य प्रत्यक्षता न संभवति, प्रमाणफलयोरसाम्प्रतत्वात्। तदिदमाह—"क्षणिका हि सा, न बुध्यन्तरकालमवस्थास्यते" इति। अथायमभिप्रायः--स्वयं प्रमाणरूपत्वान्न प्रमाणान्तरमपेक्षते ज्ञानम्—**

पञ्चिका

त्वादिति। एतदुक्तं भवति—प्रत्यक्षोऽर्थोऽनुमेयं ज्ञानम्, तेन तयोर्भेद इति। संवेद्यशब्दस्यार्थं विवेकेनाजानन् पृच्छति---**किमसंवेद्यमेव विज्ञानमिति**। प्रमेयं संवेद्यं चैकं मन्वानो ब्रवीति—**बाढमसंवेद्यम्, न त्वप्रमेयम्। कः पुनः प्रमेयसंवेद्ययोर्विशेषः? यत्र हि विषयस्य स्वरूपं परिच्छिद्यते, तत्संवेद्यमित्युच्यते। अतः स्वसंवेदनं प्रत्यक्षमिति प्रमाणविदः**। यतो यत्र स्वरूपं परिच्छिद्यते, तत्संवेद्यमित्युच्यते; ततश्च स्वरूपपरिच्छेदः संवेदनमुच्यते। अतः स्वस्य प्रतिपत्तुः संवेदनं प्रत्यक्षमुच्यते; स्वरूपग्रहणं हि प्रत्यक्षं विहायान्यदतो नास्तीति स्वरूपग्रहणं प्रत्यक्षम्; स्वरूपग्रहणं च संवेदनम्। अतः सिद्धं [1]स्वरूपसंवेदनं प्रत्यक्षमिति। ज्ञानस्येदानीं मेयतामसंवेद्यतां चाह—**असंवेदनं च प्रमितिज्ञाने, आकारान्तराग्रहणात्**। स्वरूपाग्रहणाज् ज्ञानमप्रत्यक्षमनुमेयत्वाच्च प्रमेयमिति। त-स्मात्स्वरूपाग्रहणात् [2]ज्ञानं प्रत्यक्षमित्ययुक्तम्। **क्षणिकत्वाच्चास्य प्रत्यक्षता न संभवति, प्रमाणफलयोरसाम्प्रतत्वात्**। अस्यार्थः—ज्ञानं तावत्स्वरसभङ्गुरम्; तेन ज्ञानान्तरोदयकाले[3] विनष्टं न प्रत्यक्षम्, अविद्यमानत्वात्; विद्यमानविषयं च प्रत्यक्षम्। न च---अविद्यमानविषयमपि प्रत्यक्षमस्ति जात्यादिष्विति शङ्कनीयम्, प्रमाणफलयोर[4]साम्प्रतत्वादित्युक्तं वृत्तिकारग्रन्थे। तदिदमाह भाष्यकारः--- "क्षणिका हि सा, न बुद्ध्यन्तरकालमवस्थास्यते" इति। **अथायमभिप्रायः---स्वयं प्रमाणरूपत्वात्प्रमाणान्तरं नापेक्षते ज्ञानमिति**। न कारकं कारकान्तरमपेक्षते;

१. Omitted स्वरूप. ग.
२. ज्ञानं न प्रत्यक्षमित्युक्तम् ग.
३. कालेऽपि नष्टमप्रत्यक्ष– ग.
४. असंप्रवृत्तत्वात्. ग.

भाष्यम्

कालमवस्थास्यते इति । उत्पद्यमानैवासौ ज्ञायते, ज्ञापयति च अर्थान्तरं प्रदीपवत्—इति यद्युच्येत, तन्न ; न ह्यज्ञातेऽर्थे कश्चिद्बुद्धिमुपलभते । ज्ञाते तु अनुमानादवगच्छति तत्र यौगपद्यमनुपपन्नम् । ननु उत्पन्नायामेव बुद्धौ—ज्ञा-

बृहती

इति । तदुक्तम् "उत्पद्यमानैवासौ ज्ञायते, ज्ञापयति चार्थान्तरं प्रदीपवदिति यद्युच्येत" इति । सत्यं प्रमाणं प्रमाणान्तरं नापेक्षते प्रमितौ । न च वयं प्रमाणतयैव विजानीमः, तद्धेतुत्वाद्विज्ञानस्य । न च तदवस्थं ज्ञानं ज्ञेयतया ज्ञानान्तरस्यापि वदामः ; किन्तु तदवस्था तावदस्तीत्यनुमानस्य विषयः ; न ह्यसत्यामवस्थायामवस्थावतोऽस्तित्वं शक्यते ज्ञातुम् । तदिदमुक्तम्—"न ह्यज्ञातेऽर्थे कश्चिद्बुद्धिमुपलभते ; ज्ञाते त्वनुमानादवगच्छति ; तत्र यौग-

पञ्चिका

न ह्युदकाहरणे[1] घटो घटान्तरमपेक्षते । तदुक्तम्—"उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवत् इति यद्युच्येत" इति । सत्यं प्रमाणं प्रमाणान्तरं नापेक्षते प्रमितौ[2] । अर्थपरिच्छेदे ; किन्तु स्वरूपपरिच्छेदे प्रमाणमपि प्रमाणान्तरमपेक्षत एव । न च वयमिति । परिहारान्तरम् । यदि हि प्रमितिकारणतयैव प्रमाणं विजानीमः, तदा[3] यावद्विज्ञानं विज्ञानान्तरं नापेक्षेत ; न चैवम्, तद्धेतुत्वात् प्रतिपत्तिहेतुत्वाद्विज्ञानस्य ; हेतोश्च बीजादेर्ज्ञायमानस्य[4] ज्ञानापेक्षा दृष्टैव । न च तदवस्थं ज्ञानं ज्ञेयतया ज्ञानान्तरस्यापि वदामः । न च कार्यजननावस्थं ज्ञानं ज्ञानेन ज्ञायते, किन्त्वतिवृत्तजनकभावम् । किन्तु तदवस्था तावदस्तीत्यनुमानस्य विषयः । कस्मात्पुनस्तदवस्था न ज्ञायत इत्यत्राह—न ह्यसत्यामवस्थायामवस्थावतोऽस्तित्वं शक्यते ज्ञातुम् । अतिक्रान्तत्वादवस्थायाः ।

---

१. उदकधारणे ग.
२. प्रतिपत्तौ क.
३. Omitted यावत् ग.
४. जायमानस्य. क, ग.

भाष्यम्

तोऽर्थः----इत्युच्यते, नानुत्पन्नायाम् । अतः पूर्वं बुद्धिरुत्पद्यते, पश्चात् ज्ञातोऽर्थः । सत्यं पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते ; भवति हि कदाचिदेतत्, यज्ज्ञातोऽर्थः सन् 'अज्ञातः'----इत्युच्यते । न चार्थव्यपदेशमन्त-

बृहती

पद्यमनुपपन्नम्" इति । ननु च —ज्ञातम्—इति प्रमेयमनुस्मरन्ति प्रमाणविदः । सत्यं ज्ञातं स्मरन्ति, न तु —ज्ञातम् —इति । तदुक्तम्— "सत्यं पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते"—इति । ननु चेदं लोकविरुद्धम् ;—ज्ञातो घटः—इति स्मरणं व्यपदिशन्ति, न पुनः —घटो घटः—इति । सत्यं विरुद्धम्, यदि सर्वदैवायं व्यपदेशः स्यात् ; "भवति हि कदाचिदेतत् यज्ज्ञातोऽर्थः सन्—अज्ञातः–इत्युच्यते" । यत्र हि

पञ्चिका

तदिदमुक्तम्—न ह्यज्ञात इत्यादिना । ननु च ज्ञातम्--इति प्रमेयमनुस्मरन्ति प्रमाणविदः । अस्यार्थः—ज्ञातम्—इति स्मरणमज्ञाते ज्ञाने नोपपद्यते ; तेन ज्ञानं प्रत्यक्षम् । सत्यं ज्ञातं स्मरन्ति, न तु—ज्ञातम्---इति । ज्ञातं प्रमेयं स्वरूपेण स्मरन्ति, न पुनः ज्ञानविशिष्टम् । तदुक्तम्—"सत्यं पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते" इति भाष्येण । अत्राह--ननु चेदं लोकविरुद्धम्--ज्ञातो घटः--इति स्मरणं व्यपदिशन्ति ; न पुनः--घटो घटः—इति । ज्ञातः–इति व्यपदेशो ज्ञानविशिष्टेऽवकल्पते । सत्यं विरुद्धम्, यदि सर्वदैवायं व्यपदेशः स्यात् ; भवति हि कदाचिदेतत् यत् ज्ञातोऽर्थः सन्—अज्ञातः—इति । अत्र चेदमभिप्रेतम्—यदि प्रत्यक्षं ज्ञानं स्यात्, तदा सर्वदैव ज्ञातत्वाज्ज्ञानस्य—ज्ञातम्—इत्येवं[2] व्यपदेशः स्यात् ; आनुमानिकत्वे तु ज्ञानस्य कदाचिल्लिङ्गा-

---

१. Omitted अनु. क. २. इत्येवं. ग.

भाष्यम्

रेण बुद्धेः रूपोपलम्भनम् । तस्मान्नाव्यपदेश्या बुद्धिः, अव्यपदेश्यं च नः प्रत्यक्षम् । तस्मादप्रत्यक्षा बुद्धिः । अपि च, काममेकरूपत्वे बुद्धेरेवाभावः, न त्वर्थस्य प्रत्यक्षस्य सतः । न च

बृहती

—ज्ञातः—इति स्मृतिः, सा प्रमाणद्वयव्यापारजा । तस्मात् विवेकशून्यमिदं वचः—"स्मृतेरुत्तरकालं च"–इति । किञ्च उभयोः प्रत्यक्षत्वेऽर्थेन ज्ञानस्य व्यपदेशो नोपपद्यते रूपस्पर्शयोरिव । न चार्थव्यपदेशमन्तरेण बुद्धेरूपोपलम्भनम् । तस्मान्न बुद्धिविषयं प्रत्यक्षम् ; अर्थविषयं हि तत् । अतः सिद्धमानुमानिकत्वं बुद्धेः फलतः । यश्चासावविवेकः फलप्रमेययोः प्रमाणान्तराभावात्, स तद्विषयो युक्तः । अतः प्रमाणापलाप एव न्याय्यः, न प्रमेयापलापः । अतः "काममेकरूपत्वे बुद्धेरेवाभावः, न त्वर्थस्य

पञ्चिका

ननुसन्धानात्[1] तदज्ञात्वा भवेदव्यपदेशः ; कदाचिल्लिङ्गानुसन्धानाज्ज्ञानं ज्ञात्वा भवेद्व्यपदेश[2] इत्युपपन्नम् । तदाह—यत्र हि ज्ञात इति स्मृतिः, सा प्रत्यक्षानुमानप्रमाणद्वयव्यापारजा । तस्माद्विवेकशून्यं वचो दिङ्नागस्य—"स्मृतेरुत्तरकालं[3] च न ह्यसात्रपि भाव्यते ।" इति । किञ्च, उभयोरर्थज्ञानयोः प्रत्यक्षत्वेऽर्थेन ज्ञानस्य व्यपदेशः—घटज्ञानम्—इत्यादिको नोपपद्यते रूपस्पर्शयोरिव ; न हि रूपव्यपदेशेन स्पर्शः प्रतीयते । न चार्थव्यपदेशमन्तरेण बुद्धेरूपोपलम्भनम् । तस्मान्न बुद्धिविषयं प्रत्यक्षम् ; अर्थविषयं हि तत् । अतः सिद्धमानुमानिकत्वं बुद्धेः फलतः । संविद्रूपात् कादाचित्कात् कादाचित्कस्य कारणं विनानुपपद्यमानत्वात् । "काममेकरूपत्वे" इत्यादि भाष्यम् । तत्रेदमुपपादयति—एकरूपत्व इति किमर्थमिदमुक्तम् ? एवमर्थम्—यश्चा[4]सावविवेकः फलप्रमेययोः

---

१. सन्धानात् ज्ञानं ज्ञात्वा ग.
२. व्यपदेशाद्वयमिति. ग.
३. काले हि न ह्यसावपि. ग.
४. यश्चायमविवेकः- क, ग.

भाष्यम्

ऐकरूप्यम्; निराकारामेव हि बुद्धिमनुमिमीमहे, साकारं चार्थं प्रत्यक्षमवगच्छामः। तस्मादर्थालम्बनः प्रत्ययः। अपि च,

बृहती

प्रत्यक्षस्य सतः। न चैकरूप्यम्; निराकारामेव हि बुद्धिमनुमिमीमहे, साकारं चार्थं प्रत्यक्षमवगच्छामः। तस्मादर्थालम्बनः प्रत्ययः।" किं पुनः कारणं तुल्ये फलापलापे प्रमाणस्यैवापलापः, न त्वर्थस्य प्रमेयस्य, उभयोः फलायत्तत्वात्? मैवम्; उत्पत्तौ ह्युभयोः फलायत्तता, न पुनः प्रमितौ। कस्योत्पत्तौ? ज्ञापके हि फले प्रमेयमेव हि ज्ञेयम्, नोत्पाद्यम्; प्रमाणायत्ता च प्रमितिरिति उत्पत्तावित्यसम्बद्धम्। प्रमितौ क्रियाकारकत्वमङ्गीकृत्योत्पत्तिरुक्ता, न चावगम्यमानताम्; ज्ञाने त्ववगम्यमानतापि

पञ्चिका

प्रमाणान्तराभावात्, स तद्विषयो युक्तः। एकसंवित्संवेद्यत्वात् घटादेर्घटादिसंविदश्च परस्परं विवेको न गृह्यते; तेन संविदो घटादिव्यतिरिक्ताया अपह्नवो[1] युक्तः। अतः प्रमाणापलाप एव न्याय्यः, न[2] प्रमेयापलापः। अनुमानगम्यत्वात्तस्य फलाभावेऽनुमानानुपपत्तेः। अतः काममेकरूपत्वे बुद्धेरेवाभावः, न त्वर्थस्य प्रत्यक्षस्येति। किं पुनः कारणं तुल्ये फलापलापे प्रमाणस्यैवापलापः, न पुनः प्रमेयस्य। उभयोः प्रमाणप्रमेययोः फलायत्तत्वात् प्रमितिनिबन्धनत्वात्। मैवम्; उत्पत्तौ ह्युभयोः फलायत्तता[3], न पुनः प्रमितौ। प्रमाणप्रमेययोः करणकर्मकारकयोः फलोत्पत्तिनिबन्धना कारकत्वोत्पत्तिः; प्रमितिस्तु प्रमेयस्य प्रत्यक्षतः फलनिरपेक्षा; प्रमाणस्यानुमानिकत्वात्फलायत्तैव प्रमितिरिति। इममर्थमजानन् पृच्छति—कस्योत्पत्तौ? ज्ञापके हि फले प्रमेयमेव ज्ञेयम्, नोत्पाद्यम्। फलेन ज्ञापकेन ज्ञेयं प्रतीयत एव परम्, नोत्पद्यते; ज्ञाने तद्वि-

१. अपलापः. ग.

२. Omitted. न प्रमेयापलापः. ग.

३. फलायत्तत्वम्. क, ग.

४. तु विपर्ययोऽपि यावत्प्रमाणायत्ता. ग.

भाष्यम्

नियतनिमित्तस्तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः । इतरथा अतन्तूपादानेऽपि कदाचित् पटबुद्धिरविकलेन्द्रियस्य स्यात् ;

बृहती

फलायत्तैवेति युक्तम् । किञ्च ज्ञानमात्रवादे हि ज्ञानवासनयोरेव जन्यजनकभावः, न ज्ञानस्य ज्ञानान्तरेण ; अतस्तन्तुज्ञानोत्पादेऽपि पटज्ञानोत्पादो नोपपद्यते । "दृष्टश्च नियतनिमित्तस्तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः । इतरथा अतन्तूपादानेऽपि कदाचित् पटबुद्धिरविकलेन्द्रियस्य

पञ्चिका

पर्थयोऽपीति यावत् । प्रमाणायत्ता च प्रमितिः, प्रमाणोत्पाद्यमेव हि फलमित्युत्पत्ताविव्यसम्बद्धम् ; उत्पत्तावुभयोः तदायत्तत्वमित्यसम्बन्धमित्यर्थः । प्रमितौ हि क्रियाका[1]रत्वमङ्गीकृत्योत्पत्तिरुक्ता । प्रमित्यायत्ता प्रमाणप्रमेययोः कारकत्वोत्पत्तिरित्यर्थः । नावगम्यमानताम[2]ङ्गीकृत्योत्पत्तिरुक्ता ; अ[3]वगतिरुत्पत्तिशब्देन नोक्ता । यदि हि त[4]थोच्येत, तदा प्रमेयस्य तदायत्तता न स्यात्, फलाननुमेयत्वात्प्रमेयस्य । ज्ञाने त्ववगम्यमानतापि फलायत्तैवेति युक्तमुक्तम् । अनुमेयत्वाज्ज्ञानस्य फलायत्ता प्रमितिः; तेन फलापलापे प्रमाणापला[5]प एवापद्यते, नार्थापलापः । "अपि च, नियतनिमि[6]त्तः" इत्यादि भाष्यम्, तदयुक्तम् ; ज्ञानमात्रवादेऽप्यर्थयोरिव ज्ञानयोरेव प्रतिनियतः कार्यकारणभावो भविष्यतीति । अत्रोत्तरं लिखति—**किञ्च, ज्ञानमात्रवादे हि ज्ञानवासनयोरेव जन्यजनकभावः, न ज्ञानस्य ज्ञानान्तरेण । अतस्तन्तुज्ञानोत्पादेऽपि पटज्ञानोत्पादो नोपपद्यते; दृष्ट[7]श्च नियतनिमित्तस्तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः । इ[8]तरथा अतन्तूपादानेऽपि कदाचित् पटबुद्धिरविकलेन्द्रियस्य स्यात् ।** वासनोद्बोधस्यानियतनिमित्तत्वात् । **तस्मान्न वासनानि-**

---

१. मूले क्रियाकारत्वमिति भाष्यम् .
२. -तामाश्रित्यो. ग.
३. नावगतिरुत्पत्तिशब्देनोक्ता. ग.
४. Omitted. अपि. ग.
५. Omitted. प्रमाणापलाप. क.
६. नियतनिमित्तकः. ग.
७. दृष्टं च नियतनिमित्तत्वम्. क.
८. इतरथा तन्तू···घटबुद्धिः. क.

भाष्यम्

न चैवमस्ति । अतो न निरालम्बनः प्रत्ययः । अतो न व्यभिचरति प्रत्यक्षम् ॥

अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः । तत्तु द्विविधम्—प्रत्यक्षतोदृष्ट-

बृहती

स्यात्" । तस्मान्न वासनानिबन्धनमेवेदं ज्ञानजालम् । किं तर्हि ? अर्थनिबन्धनमिति स्थितम् । अत उपपन्नं प्रमाणलक्षणाभिधानम् ॥

"अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः" इति । ज्ञातसम्बन्धस्य—इत्युच्यते, कस्य ज्ञातसम्बन्धस्य ? नन्वेकदेशस्य । नैतदुपपद्यते, दर्शनोपसर्जनत्वादेकदेशस्य ; न ह्युपसर्जनं पदं पदान्तरेण सम्बद्ध्यते राजपुरुषवत् । पुरुषसमुदाययोरनुपादानादेवासम्बन्धः । तस्मान्न

पञ्चिका

बन्धनमेवेदं ज्ञानजालम् । किं तर्हि ? अर्थनिबन्धनमिति स्थितम् । अत उपपन्नं बहिरर्थसद्भावादिन्द्रियार्थसन्निकर्षस्य संभवात् प्रत्यक्षप्रमाणस्य लक्षणमिति ॥

इति प्रत्यक्षप्रकरणम् ।

"अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः" इत्यनेनानुमानलक्षणमनुवदति व्याख्यातुम् । ज्ञातसम्बन्धस्येत्युच्यते, कस्य ज्ञातसम्बन्धस्य ? अस्यार्थः—ज्ञातसम्बन्धशब्देन कस्य निर्देश इति पृच्छति । नन्वेकदेशस्य—इत्युत्तरम् । एकदेशस्य ज्ञातसम्बन्धस्य दर्शनादित्यर्थः । नैतदुपपद्यते, दर्शनोपसर्जनत्वादेकदेशस्य । ज्ञातसम्बन्धशब्देन दर्शनं प्रत्युपसर्जनीभूत एकदेशो विशेष्टुं न शक्यते । कुतः ? न ह्युपसर्जनं पदं पदान्तरेण सम्बध्यते राजपुरुषवत् । यथा राजपुरुषे राज्ञः पुरुषोपसर्जनीभूतस्य पदान्तरेण विशेषणं

---

१. बहिरर्थस्य. ग.		२. प्रत्यक्षस्य. ग.

बृहती

**विघ्नः–कस्य ज्ञातसम्बन्धस्य —इति । उच्यते–सम्बन्धापरिज्ञाननिबन्धनोऽयं व्यामोहः । कः पुनरसौ सम्बन्धः ? अयमसौ सम्बन्धः—अनुमानमेकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः । कस्यैकदेशस्य दर्शनात् ? ज्ञातसम्बन्धस्य । नन्वस्मिन्नपि सम्बन्धे एकदेशस्योपसर्जनता तदवस्थैव ।**

पञ्चिका

न भवति ; न हि भवति —[1]ऋद्धस्य राजपुरुषः—इति । [2]**पुरुषसमुदाययोश्चानुपादानादेवासम्बन्धः** । अथोच्येत—मा भूदेकदेशस्य ज्ञातसम्बन्धशब्देन निर्देशः ; ज्ञातः सम्बन्धो येन[3] पुरुषेणेति पुरुषो विशेष्यताम् । ज्ञातः सम्बन्धो यस्येति वा[4] समुदाय एकदेशयोर्लिङ्गलिङ्गिनोर्विशेष्यताम् । अत्रैवं सम्बन्धो भवति—ज्ञातसम्बन्धस्य पुरुषस्य बुद्धिरिति । न चा[5]नुपात्तान्यपदार्थता दोषः, बुद्धिसम्बन्धेनैव बोद्धुरुपस्थानात् । तथा ज्ञातसम्बन्धस्य समुदायस्यैकदेशदर्शनात्तस्यैवैकदेशान्तरे—इत्यत्रापि चैकदेशाभ्यां समुदायोपस्थानादनुपात्तान्यपदार्थता नास्ति । पुरुषसमुदायौ चोपलक्षणम् ; एवं देशस्यापि द्रष्टव्यम् । तद[6]पि न संभवति, गम्यमानस्यार्थस्य विशेषणादर्शनात् । तदाहुर्वार्तिककारमिश्राः—

> "गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम् ।
> शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीतिवत् " ॥ इति ।

साधितमर्थमुपसंहरति—**तस्मान्न विघ्नः कस्य ज्ञातसम्बन्धस्येति** । प[7]रिहरति—**उच्यते—सम्बन्धापरिज्ञाननिबन्धनोऽयं व्यामोहः । कः पुनरसौ सम्बन्धः ? अयमसौ स[8]म्बन्धः—अनुमानमेकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः ; कस्यैकदेशस्य दर्शनात् ? ज्ञातसम्बन्धस्येति । नन्वस्मिन्नपि सम्बन्धे एकदेशस्योपसर्जनता तदवस्थैव** । ततश्च कथं

---

१. अस्य राजपुरुषः. ग.
२. न हि पुरुषसमुदाययोरनुपादानात्. ग.
३. येन स ज्ञातसंबन्धः पुरुषः. ग.
४. वा समुदायैकदेशयोः. ग.
५. Omitted न च. ग.
६. एकदेशस्यपि द्रष्टव्यः ग. एकदेशस्यापि. द्रष्टव्यम्. तदेतदपि. क.
७. अत्र परिहरति. ग.
८. Omitted सम्बन्धः. ग.

वृहती

उपसर्जनमिति नायं सम्बन्धहेतुः; तथा अनुपसर्जनमित्यपि।आकाङ्क्षितं पूरण-समर्थं च सम्बन्धितामापद्यते। अत्र च—एकदेशदर्शनात्-इत्युक्ते ; कस्यैक-देशस्य—इत्याकाङ्क्षा, दर्शनस्य दृश्यप्रधानत्वात् तज्जन्यत्वाच्चार्थान्तरबुद्धेः। अत एव च—अत्रोत्तरपदप्रधानता, अत्र पूर्वपदप्रधानता—इति क्वचित् क्वचित् स्थापितम्। तस्मात् प्रयोगसिध्यर्थैवेयमुपसर्जनसंज्ञा ; अर्थ-सम्बन्धे हि यस्मादर्थाकाङ्क्षैव हेतुः, नोपसर्जनता अनुपसर्जनता वा; कस्य

पञ्चिका

ज्ञातसम्बन्धशब्देनैकदेशो विशेष्यते, यदि परं वाक्यभेदमात्रमधिकम् ? अत्रोच्यते—पौरुषेये वाक्ये वाक्यभेदापत्तिरदोष इत्यसकृदुक्तम्। यत्तूपसर्जन त्वेनासम्बन्ध इति तत्राह—उपसर्जनमिति। नेदं सम्बन्धे कारणम्। यथोपसर्जन-मिति न सम्बन्धे कारणम्, तथा अनुपसर्जनमित्यपि। येनानुपसर्जनत्वाभावे सम्बन्धो न स्यात्। किं तर्हि कारणमित्यत्राह—आकाङ्क्षितं पूरणसमर्थं च सम्बन्धितामापद्यते। तत्र चैकदेशदर्शनादित्युक्ते—कस्यैकदेशस्य ?—इत्याकाङ्क्षा भवति[2]। तेन सत्यामाकाङ्क्षायामाकाङ्क्षापूरणसमर्थं ज्ञातसम्ब-न्धपदमेकदेशविशेषणं भवति। कारणान्तरं चाह—दर्शनस्य दृश्यप्रधान-त्वात्। उपसर्जनत्वमपि[3] चात्र नास्ति, दर्शनं प्रत्येकदेशस्य प्रधानत्वात्। न च प्रधानतापि न निर्वहति। तज्जन्यत्वाच्चार्थान्तरबुद्धेः। एकदेशादेव दर्शन-संस्कृतादर्थान्तरबुद्धिरुपजायते। तस्मात्प्रधानभूत एकदेशः पदान्तरेण संबध्यते; यतश्च पूर्वपदार्थभूतोऽप्येकदेशः प्रधानम्। अत एव च—अत्रोत्तरपदार्थप्रधान-ता, अत्र पूर्वपदार्थप्रधानता—इति क्वचित् क्वचित्[4] स्थापितम्। अन्यथा[5] सर्वत्र उत्तरपदार्थप्रधानतैव स्यात्। यस्मादेवमाकाङ्क्षायां सम्बन्धः, तस्मात्प्रयोगसिध्यर्थैवेयमुपसर्जनसंज्ञा। "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति येयमेकदेशस्योपसर्जनसंज्ञा, सा पूर्वनिपातमात्रसिध्यर्था "उपसर्जनं पूर्वम्"

१. Omitted. मात्र. ग.
२. Omitted. भवति. ग.
३. उपसर्जनतापि. ग.
४. किञ्चित्. क, ग.
५. अन्यथा......उत्तर. क.
अन्यथा सर्वत्र तत्प्रति उत्तर. ग.

बृहती

गुरुकुलम् ?—इत्येवमादिषु दर्शनात् । उच्यते—व्याप्यं हि दृष्टं व्यापकं गमयति ; ज्ञातसम्बन्धस्य—इति च न व्याप्य एषा षष्ठी ; सम्बन्धिमात्रवचनाद्धि प्रातिपदिकात् षष्ठीं स्मरन्ति । उच्यते—सत्यं सम्बन्धिनि षष्ठी ;

पञ्चिका

इति, न पुनरुपसर्जनत्वेन पदान्तरासम्बन्धार्था[1] । कस्मादित्याह—अर्थसम्बन्धे हि यस्मादर्थाकाङ्क्षैव हेतुर्नोपसर्जनतानुपसर्जनता वा, कस्य गुरुकुलम् ?—इत्येवमादिषु[2] उपसर्जनात्मकस्यापि दर्शनात् । गुरुकुलम्—इत्युक्ते कस्य गुरुकुलम्—इत्याकाङ्क्षायां गुरुविशेषणैर्देवदत्तादिभिः सम्बन्धदर्शनात्—देवदत्तस्य—इति । तथाचोक्तम्[3]—" अथ शब्दानुशासनम् । केषां शब्दानाम् ? लौकिकानां वैदिकानां च " इति । उच्यते—व्याप्यं हि दृष्टं व्यापकं गमयति । ज्ञातसम्बन्धस्येति च[4] न व्याप्ये एषा षष्ठी ; सम्बन्धिमात्रवचनाद्धि प्रातिपदिकात् षष्ठीं स्मरन्ति । अनेन ज्ञातसम्बन्धपदमाकाङ्क्षायामपि न विशेष्टुमेकदेशं शक्नोति—इति चोदयति । यस्मात् ज्ञातः सम्बन्धो यस्येति षष्ठ्यर्थेऽयं बहुव्रीहिः । न च षष्ठी व्याप्य एव—प्रतिसम्बन्धिव्याप्य एव तत्सम्बन्धाव्यभिचारिण्येव[5] भवति, येन षष्ठ्यर्थबहुव्रीहिबलेन प्रतिसंबन्धिभूताग्न्यादिसम्बन्धाव्यभिचारी धूमादिरेव ज्ञातसम्बन्ध उच्यते । यावता सम्बन्धिमात्रवचनादेव षष्ठी, प्रतिसम्बन्धिनोऽव्याप्यादपि, यथा राज्ञः पुरुषः—इति । न हि राजा पुरुषाव्यभिचारी; तेन ज्ञातसम्बन्धशब्देन व्याप्य एवैकदेशो नोच्यते; व्याप्यस्तु गमकः, न व्यापकोऽपि ; तेन लोकसिद्धज्ञापकाभिमतव्याप्यभूतैकदेशासमर्पकत्वाज्ज्ञातसंबन्धशब्दो[6] नैकदेशविशेषणम् । ज्ञातसम्बन्धस्येति विग्रहवाक्ये ज्ञातः सम्बन्धो यस्येति षष्ठी न व्याप्य एवेत्यर्थः । उच्यते[7]—सत्यं संबन्धिनि षष्ठी, व्याप्य एव तु सम्बन्धी भवतीति । अनेन परिहरति । कथं पुनर्व्याप्य एव तु सम्बन्धी भवतीति ? उच्यते—सम्बन्धो यस्यास्ति, स

१—र्थकत्वादित्याह. ग.
२.—दिषु दर्शनात्. ग.
३. अथवोक्तम्. ग.
४. Omitted. च. क.
५. सम्बन्धोऽव्यभि- ग.
६. अयमंशस्त्रुटितः. क.
एकदेशसमर्पक. ग.
७. Omitted. उच्यते. क, ग.

बृहती

व्याप्य एव तु सम्बन्धी भवति । अव्याप्येऽपि हि वस्तुनि व्याप्यविवक्षायामेव यथा षष्ठी, तथा तत्र तत्र षष्ठ्यर्थं व्याख्यास्यामः । तथा च लौकिकाः—ममायम्, अयं पुनरन्यस्यापि—इति व्यपदिशन्ति ।

पञ्चिका

सम्बन्धी; यस्य च सम्बन्धोऽस्ति नास्ति च, नासौ सम्बन्धीति व्यपदिश्यते; असाधारणेन हि व्यपदेशो भवेदिति । नन्वव्याप्येऽपि षष्ठी दृश्यते, अत्राह—**अव्याप्येऽपि हि वस्तुनि व्याप्यविवक्षायामेव यथा षष्ठी भवति, तथा तत्र तत्र षष्ठ्यर्थं[1] व्याख्यास्यामः** । तथा च लौकिकैः—ममाय—इति व्यप[2]दिश्यते; असाधारणेन हि व्यपदेशो भवेदिति षष्ठ्या संबन्धिव्याप्यतोच्यते । अयं पुनरन्यस्यापि—इति प्रतिसम्बन्धिव्या[3]प्यतैवोच्यते । तेन षष्ठ्यर्थे बहुव्रीहिसमासाश्रयणेन ज्ञातसम्बन्धपदेन व्याप्य एवोच्यते, न व्यापक इति सिद्धम् ।

एतावत्त्वत्र वाच्यम्—कः[4] पुनरिह सम्बन्धोऽभिमतः ?—इति । तत्र तावत्केचित्तादात्म्यतदुत्पत्ती एव सम्बन्धावनुमानकारणत्वेनाहुः । तत्र तादात्म्यात्—वृक्षोऽयम्, शिंशपात्वात्—इति । तदुत्पत्तेरपि—अग्निरत्र, धूमात्[5]—इति । तदिदमनुपपन्नम्, एकार्थसमवाय[6]लक्षणादपि सम्बन्धाद्रसाद्रूपानुमानदर्शनात् । स्यान्मतम्—रसाद्रसहेतुरनुमीयते; प्रवृत्तसामर्थ्यरूपहेतुसहकारी च रसहेतू रसजनक इति तथाविधकारणानुमानात् प्रवृत्तसामर्थ्यरूपहेतू[7]पस्थानात्तस्य च कार्याव्यभिचाराद्रसाद्रूपानुमानमिति । तदिदमङ्गीकृतपक्षरक्षणाक्षिप्तचेतसः काशकुशावलम्बनमित्यनादरणीयम् । न ह्येवं लोकः[8] प्रतिपद्यते; लौकिकं च प्रमाणं परीक्षकै[9]रनुसरणीयम् । यच्चेदं कारणात् कार्यानुमानम्, न तत् स्वभावहेतुकम्, भिन्नत्वात्कार्यकारणयोः । नापि का[10]र्यहेतोः, कारणस्य कार्यत्वासंभवात् । अपि च कार्यमपि कारणं कथमवगमयति ? तदव्यभिचारादिति चेत्; तर्ह्यन्य-

---

१. षष्ठ्यर्थे. क, ग.
२. Omitted. व्यप—भवेदिति. ग.
३. व्यापकतैवोच्यते. क
४. कथं पुनरिह. ग.
५. धूमवत्त्वात्. ग.
६. समवायादि. ग.
७. Omitted. हेतूप. ग.
८. लौकिकाः प्रतिपद्यन्ते. ग.
९. परीक्षकैरप्यनु-ग.
१०. Omitted कार्य. ग.

पञ्चिका

स्यापि यद्यव्यभिचारः स्यात्, को गमकत्वमपहरेत्? न चान्यस्याप्यव्यभिचारो न शक्यतेऽवगन्तुमित्युपरिष्टाद्वक्ष्यामः । न च तादात्म्ये गम्यगमकता घटते, एकस्य सकृज्ज्ञातत्वाज्ञातत्वायोगात् । उदाहरणमपि कल्पनानिरासाद्वृक्षत्वशिंशपात्वयोर्भेदादनुपपन्नम् । एतेन येऽपि समवायसंयोगैकार्थसमवायकार्यकारणभावविरोधाख्यान् पञ्चसम्बन्धाननुमानाङ्गमाहुः, तेऽपि पराकृताः, कृत्तिकोदयाद्रोहिण्याः सत्यनुमाने पञ्चानामसंभवात् । यत्पुनर्नियमापरपर्यायां व्याप्तिमेव सम्बन्धान्तरभूतामनुमानकारणं मन्यन्ते, तदपि न सुन्दरम्; न हि स्वस्वामिभावादिव्यतिरिक्तो व्याप्तिर्नामापरः सम्बन्धोऽस्ति; किन्तु सम्बन्ध एव कार्यकारणभावादिः कस्यचित् व्यापकः कस्यचित्तु नेति विशेषः । तत्र यस्य सम्बन्धेन व्याप्यता,— यथा धूमस्य—तस्य गमकता; धूमो हि वह्निकार्यतया वह्निसंयोगितया व्याप्तः, अग्निस्तु न सर्वदा धूमसम्बन्धीति सम्बन्धाव्याप्तो न गमकः । तेन कार्यकारणभावादय एव सम्बन्धा इहानुमानाङ्गत्वेनाभिमताः । ननु कथं व्याप्यता धूमादेरवसीयते? न तावत्प्रत्यक्षस्य तत्र सामर्थ्यम्, तस्य वर्तमानकालाकलितसन्निहितदेशावस्थितार्थमात्रविषयत्वात्; अव्यभिचारो हि व्याप्तिः; अव्यभिचारश्च सकलदेशकालव्यापित्वे सति इति । न चानुमानमत्र प्रमाणम्, स्वयमसिद्धत्वात् । न शाब्दम्, कार्यैकविषयत्वात् । नोपमानम्, सादृश्यमात्रविषयत्वात् । अर्थापत्तिस्तु सिद्धाव्यभिचारोपजीविनी इति नात्र क्रमते । यदपि कोऽपि परिपक्वपदपङ्क्तिमया भाषया भाषते—मानसमिदमेवंविधं प्रत्यक्षमुदीयते—इति, तदपि न निरासादरमर्हति; यतः सर्वत्र मनसो बहिरर्थेषु सहकारिनिरपेक्षस्य न प्रवृत्तिः । सहकारिविशेषापेक्षायां च तस्यैवासाधारणत्वात्तेनैव व्यपदेशात् न प्रमाणान्तरापत्तिः । असाधारणकारणानुप्रवेशनिबन्धनं हि प्रमाणान्तरत्वम्; अन्यथा सर्वत्र मनसो व्यापारान्मानसमेकं प्रत्यक्षं स्यात् । अत्र प्रमाणमालापरिमलविमलमतयः प्रतीकारमारभन्ते—यद्वस्तु येन प्रमाणेन सम्बन्धविशिष्टं गृह्यते—यथा प्रत्यक्षेण धूमोऽग्निसम्बन्धविशिष्टः—तस्य तेनैव प्रमाणेन सम्बन्धे व्याप्यतापि गम्यते ।

---

१. Omitted. अपि. ग.
२. Omitted. समवाय ग.
३. निराकृताः. ग.
४. व्याप्यः. ग.
५. Omitted काल. ग.
६. नापि. ग.

पञ्चिका

तथा हि स्वसंवेदनं तावदिदं भवान् भावयतु—धूमोऽयमग्निसम्बद्धः इति । किमत्र देशकालाभ्यां धूम एव केवलमाकलितः प्रथते, अथ सम्बन्धितापि तस्य देशकालव्यवच्छिन्ना प्रथत इति । तत्र वयं तावदिदंतया सन्निहितवर्तमानात्मिकया लिङ्गिनो धर्मिभूतो धूमोऽवभाति इति पश्यामः, न च धर्मभूतोऽग्निसम्बन्धोऽपि परविशेषणभावोपक्षीणस्वभावः । तत्र धूमसत्तैव केवलं कालान्तरदेशान्तरप्रवृत्तये प्रमाणान्तरमपेक्षते ; अग्निसम्बन्धस्तु धूममात्रानुसम्बन्धी सिद्ध एव । अत एव प्रतीतेऽपि विषये प्रमाणान्तरत्वे यत्नः करिष्यते । नन्वेवं तर्हि वह्निरपि धूमसंबन्धी लिङ्गं स्यात् । न स्यात्, एतदसंबन्धोऽपि तस्यास्तीति । धूमस्य न भविष्यतीति किमत्र प्रमाणम्? अतः संदिग्धव्याप्तिको धूमोऽपि स्यात् । तत्र त एव प्रमाणविचारपारदृश्वानो विशेषमभिदधति—यद्विधे हि यस्य दर्शनम्, तथाभूत एव तदाशङ्कावतरति ; यस्य च कुतश्चिदुपाधेः सम्बन्धः यथार्द्रेन्धनसम्बन्धादग्न्यादेः धूमेन, तस्य तदुपाधिविगमादसम्बन्धोऽपि । न च धूमस्याग्निसम्बन्ध औपाधिकः । कथमयं विभागो विवेचनीय इति चेत्, अन्वयव्यतिरेकाभ्याम् । यस्य हि यत्रोपाधित्वं संभाव्यते, तद्विगमेऽपि चेदुपलभ्यते, ज्ञायते—नायं तदुपाधिक इति । एतच्चासकृद्दर्शनप्रभावादित्युक्तम्—"अव्यभिचारस्त्वसकृद्दर्शनगम्यः" इति । तदियं दिगुपदर्शिता । अत्र च ज्ञातसम्बन्धशब्देनासाधारणसाधारणविरुद्धहेतवो व्युदस्ताः । अत्रासाधारणः—गन्धवत्त्वान्नित्या पृथिवी—इति । अस्य हि भूमात्रवर्तित्वात्तस्याश्च सिषाधयिषितनित्यताख्यधर्मवत्त्वासिद्धौ च संबन्धिना सह सम्बन्धावधारणानुपपत्तेर्न ज्ञातसम्बन्धत्वम् । साधारणस्तु—नित्यः शब्दः प्रमेयत्वादिति । अस्य प्रमेयत्वलक्षणस्य धर्मस्य नित्यतया सह सम्बन्धोऽस्ति, व्याप्तिस्तु नास्ति ; तेन ज्ञातः सम्बन्धो यस्येति षष्ठ्यर्थाभावान्न ज्ञातसम्बन्धत्वम् । विरुद्धः पुनः—

---

१. व्यवच्छिन्नः प्रतीयते. ग.
२. प्रतीयते. ग.
३.—त्मिकतया. क.
४. तत एव. ग.
५. धूमस्य च भविष्य-ग.
६. सम्बन्धव्याप्तिको धूमोऽपि न स्यात् ग.
७. तदन्वयव्यतिरेकाभ्यां तु. ग.
८. -दसिद्धेन च. ग.

बृहती

"तत्तु द्विविधम्" इति। किमिदं द्वैविध्यम्? लक्षणद्वैविध्यं तावन्नास्ति,—एकदेशदर्शनात्—इत्येकत्वाल्लक्षणस्य। अथ प्रमेयद्वैविध्यमङ्गीकृत्यैतदुच्यते—एकत्र विशेषाद्विशेषोऽवगम्यते, अन्यत्र सामान्यात्सामान्यावगतिः—इति; एवं च हेतुमद्भेदाद्धेतोरपि भेद उक्तो भवति। किं पुनरनयोर्भेदकथनेन प्रयोजनम्? लक्षणाभिधानेन चाव्यभिचारितोक्ता भवति; तदर्थश्चायं प्रयासः; हेतुहेतुमतोर्द्वैविध्यं भवतु वा मा वा।

अत्र केचिन्नीतिज्ञंमन्याः अनवधृतस्वलक्षणमेव किञ्चिदनुमानेन

पञ्चिका

घटो नित्यः कृतकत्वात् इति। अस्य संबन्ध एव नास्ति इत्यज्ञातसम्बन्धता। एकदेशदर्शनादिति अपक्षधर्मस्य हेतुत्वं निरस्तम्, यथा प्रत्यक्षं कर्म रूपवत्त्वादिति; न हि कर्मणो रूपं धर्मः। कस्य तर्हि? द्रव्यस्य। तथा असिद्धस्य हेतुत्वं दर्शनग्रहणेन निरस्तम्। तदेवं संम्बन्ध[1]व्याप्तिपक्षधर्मत्वे हेतु[2]रूपे निश्चिते अनुमानाङ्गमिति स्थितिः।

तत्तु द्विविधमित्यनेन भाष्यं पठितमाक्षिपति—किमिदं द्वैविध्यम्? लक्षणद्वैविध्यं तावन्नास्ति, "एकदेशदर्शनात्"—इत्येकत्वाल्लक्षणस्य। एकदेशदर्शनादित्येकं लक्षणं ज्ञातसम्बन्धस्येति विशेषणम्; त[3]च्चोभयोरप्येकम्। अथ प्रमेयद्वैविध्यमङ्गीकृत्यैतद्द्वैविध्यमुच्यते। प्रमेयद्वैविध्यं च दर्शयति—एकत्र विशेषाद्विशेषोऽवगम्यते; धूमाकृतिकाद्धूमात् अग्न्याकृत्युपलक्षणेन ज्ञाताग्निसम्बन्धव्याप्तेरग्न्याकृतिको विशेषोऽवगम्यते, अन्यत्र सामान्याद्देशान्तरप्रा[4]प्तिमात्रादादित्ये तद्धेतुमात्रमनुमीयत इति हेतुमद्द्वयभेदात् हेतोरपि द्वैविध्यम्, विशेषसामान्यात्मकत्वात्। अत्राह—किं पुनरनयोर्भेदकथनेन प्रयोजनम्? न किञ्चिदित्यर्थः। लक्षणाभिधानेन चाव्यभिचारितोक्ता भवति। तदर्थश्चायम् अव्यभिचारित्वार्थः, प्रयासः लक्षणात्मकः। हेतुहेतुमतोर्द्वैविध्यं भवतु वा मा वा।

अत्र केचिन्नीतिज्ञंमन्या अनवधृतस्वलक्षणम् अज्ञातप्रत्यात्मकविशेषं

---

१. सम्बन्धे. ग.
२. हेतो रूपे. ग.
३. तच्चानयोः ग.
४. प्राप्तिर्गतिमात्रात्. ग.

बृहती

सामान्यतो न गृह्यत इति मन्यन्ते; तद्भ्रमापनोदनायैतदुक्तम्—"तत्तु द्विविधम्" इति। अदृष्टस्वलक्षणविषयमनुमानमस्ति क्रियादिषु। कथं पुनरदृष्टस्वलक्षणे सम्बन्धिदर्शनम्? उत्पत्तिमतः फलस्य दर्शनात्—इत्युक्तमुप-

पञ्चिका

संबन्धित्वेनादृष्टं नैव किञ्चिदनुमानेन, सामान्यतः सामान्यरूपेण, गृह्यत इति मन्यन्ते; तद्भ्रमापनुत्तये इदमुक्तम्—तत्तु द्विविधमिति। विप्रतिपत्तिनिरासार्थमुक्तमित्यर्थः। ननु स विषयो नास्त्येवैवंविध इत्यत्राह—अदृष्टस्वलक्षणविषयमनुमानमस्ति क्रियादिषु। क्रियायां शक्तौ च। चोद्याभिप्रायमिदानीमाह—कथं पुनः पुनरदृष्टस्वलक्षणयोः संबन्धिग्रहणम्? विना संबन्धिबोधात्सम्बन्धानुपपत्तेः। उत्पत्तिमतः फलस्य दर्शनात् इत्युपपादितमस्माभिः शून्यवादे। अस्यार्थः—तन्तुसंयोगे सति पटावयवी दृश्यते; अत्रोत्पत्तिमतस्तन्तुसंयोगात् प्रत्यक्षस्य फलस्यावयविलक्षणस्य दर्शनाददृष्टस्वलक्षणयोरपि सम्बन्धदर्शनं भवति। एतच्च शून्यवादे प्रमाणफलयोर्भेदं लौकिकाः प्रतिपद्यन्त इत्यत्र प्रदर्शितमस्माभिः। एतदनेनाभिहितम्—यद्यत्फलभूतं तत्तदुत्पत्तिमतोऽनन्तरमिति सामान्यतस्तन्त्वादिसंयोगादिव अवयवीति संबन्धदर्शने सति देशान्तरप्राप्तिं कादाचित्कीं फलभूतामवधार्योत्पत्तिमत्प्राग्भावि किञ्चिदनुमीयते। तत्रच लोकस्य कर्मशब्दप्रयोगः। न च द्रव्यमेवोत्पत्तिमदिति शक्यावगमम्, तस्य प्रत्यभिज्ञया स्थायित्वेनावधृतत्वात्। न च दृष्टविरुद्धमनुमानमविरोधिनि संभवति युक्तम्। तस्माद्व्यातिरेकि कर्मानुमीयते।

अत्रापरः परोत्कर्षव्यलीककलुषितान्तःकरणः कर्मणः प्रत्यक्षतामाकाङ्क्षन्नेवमाह—ननु नानुमेयं कर्म; किन्तु रूपिद्रव्यसमवेतचाक्षुषमेव, गच्छत्ययम्—

---

१. सोऽत्र स्वलक्षण. ग.
अत्र त्रुटितः. क.
२. स्वलक्षणयोः सम्बन्धग्रहणम्. क.
३. विनापि. ग.
४. स्यादर्शनात्. ग.
५. सामान्यम्, अतः. ग.
६. संभवतीति. ग.
७. व्यालोक. क., ग.
इदं भावनाविवेकस्थमनूद्यमानम्.
८. आकाङ्क्षते, तामाह. ग.

पञ्चिका

इति प्रतीतेरिन्द्रियव्यापारायत्तत्वात् । तथा च तन्त्रान्तरेऽपि[1] सूत्रम्—"संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि[2]" इति । अथ संयोगविभागानुमितक्रिया[3]विषयोऽयं प्रत्यय इति ; तदनुपपन्नम्; आकाशस्यातीन्द्रियत्वात्तेन सह संयोगस्य वायुवनस्पतिसंयोगवदप्रत्यक्षत्वाल्लिङ्गाभावात् पतत्[4]सु पतत्रिषु—पतति—इति बुद्धिर्न स्यात् । अथोच्येत—विहायसि विततैस्तरणिकिरणैः सह संयोगविभागौ प्रत्यक्षौ लिङ्गमिति ; तन्न ; सान्द्रतरान्धकारेऽतिनिशीथे झटिति तडिति स्फुरन्त्याम्—चलति—इति प्रतीतेः । अपि च संयोगविभागौ गम्ये गन्तरि च स्तः ; ताभ्यां चेत्कर्मानुमेयम् , गन्तरीव तद्बुद्धिर्गम्येऽपि स्यात् । किञ्च कार्यविरोधि कर्म । ततश्च संयोगादुपरते कर्मणि वर्तमानावभासो न स्यात् । किञ्च न संयोगविभागौ कर्मानुमापयितुमीशाते, तस्यापि कादाचित्कत्वेन हेत्वन्तरापेक्षत्वात्तद्धेत्वभिमतादेव तयोरुपपत्तेः ।

तदेतद्विधुर[5]दोषविलासमात्रम् । अनुमितक्रियानिमित्तः—चलति—इति प्रत्ययः । विद्युति तु मेघावयवसंयोगविभागलिङ्गानुमिता चलनक्रियेति नानुपपत्तिः । न च गम्ये क्रियानुमानम् , गन्तृसमवेतयैव क्रियया संयोगविभागयोरुपपत्तेः । न चेदं विपरीतमापादयितुं शक्यते—गम्यक्रिययैव[6] गन्तरि फलं प्रस्तुतमिति, उत्तरदेशसंयोगस्य क्रियान्तरानुमापत्तेः । देवदत्तगता तु क्रिया पूर्वदेशेन विभागमुत्तरदेशेन संयोगं चारभत इत्युभयमुपपन्नम् । न च—चलति—इति वर्तमानावबोध एकक्रियाक्षणाभिप्रायेण, क्षणस्य पौर्वापर्याभावात् । तस्मात्क्रियाक्षणानां सन्ताननिमित्त एवायं—चलति—इति वर्तमा[7]नावसायः । तेन क्षणान्तरे नष्टेऽपि क्षणान्तरेऽनागतेऽपि प्रारब्धापरिसमाप्तत्वादेकफलावच्छिन्नस्य क्रियासन्तानस्य वर्तमानता नानुपपन्ना । संभवति च फलोद्देशेनोत्तरक्षणपरामर्शादेषा प्रतीतिः । तदुक्तम्—

---

१. तन्त्रान्तरे च. ग.
२. द्रव्ये च समवायात् . ग.
३. अनुमितिक्रिया. ग.
४. वात्......त्रिषु क.
५. बधिर. क, ग. विधुरम् मत्यवसादः । "विधुरं किमतः परम्" इति. किरातार्जुनीयम् २—७.
६. क्रियैव. ग.
७. मानतावसायः. ग.

भाष्यम्

सम्बन्धम्, सामान्यतोदृष्टसम्बन्धं च। प्रत्यक्षतोदृष्टसम्बन्ध-यथा धूमाकृतिविज्ञानादग्न्याकृतिविज्ञानम्। सामान्यतोदृष्ट-

बृहती

पादितमधस्तादस्माभिः शून्यवादे। अतः सामान्यमात्रपर्यवसाय्यनुमान-मस्ति। दर्शितं च—"देवदत्तस्य गतिपूर्विकाम्"—इति। कः पुनरनु-

पञ्चिका

"यदा त्वाद्यपरिस्पन्दे[1]प्रभृत्या फललाभतः।
क्रिया पूर्वापरीभूता लक्ष्यते वर्तते तदा"॥ इति।

न च कर्महोतेरेव संयोगविभागोदयः। तथा हि—आत्मशरीरसंयोगादात्माश्रितप्रयत्नानुगृहीतात्पादहस्तादिषु कर्मेष्यते। तदुक्तम्—"आत्मशरीरसंयोगप्रयत्नाभ्यां हस्ते कर्म"—इति। संयोगश्च संयोगिन्येव कार्यमारभते यथावयविनमवयवसंयोगः। संयोगविभागौ च न केवलमाश्रयसमवेतौ, अनाश्रयेऽपि देशे समवायात्। तेनात्मसंयोगातिरिक्तमपरं कर्मानुमीयते। न च तत्रायं नियमो दृष्टः—स्वाश्रय एव फलमारभते—इति, तस्यापूर्वत्वात्; तेनानुमेयत्वेऽपि न कश्चिद्दोषः। प्रत्यक्षत्वं तु प्रतीतिविरुद्धम्; न हि संयोगविभागातिरिक्तं निपुणमपि निरूपयद्भिरपरं वस्तूपलभ्यते। तदुक्तम्—"न हि ते प्रत्यक्षे" इति। किमर्थं तर्हि—"देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्येऽपि गतिस्मरणम्" इत्युक्तम्? देवदत्तेऽप्यनुमेयत्वात्। उच्यते—देवदत्ते तावदात्मसंयोगातिरेकिण्यनुमि[2]ते तत्सामान्यादादित्येऽपि गतिरेवानुमीयते, देवदत्ते देशान्तरप्राप्तेस्तत्कारणत्वेन निश्चितत्वात्। एतदुक्तं भवति—सर्वत्र चेतने वाचेतने वा गतिरेव देशान्तरप्राप्तौ निमित्तमिति। अतः सामान्यमात्रपर्यवसाय्य[3]प्यनुमानमस्ति। दर्शितं च देवदत्तस्य गतिपूर्विकामिति।

इदानीं लक्षणाभिधानप्रयोजनं पृच्छति—कः पु[4]नरनुमाने व्यभिचारः यथा प्रत्यक्षे शुक्तिकारजतादिषु? व्यभिचारनिराकरणार्थं हि

---

१. परिस्पन्दात्. क.
२. अनुमीयते. ग.
३. Omitted. अपि. ग.
४. कः प्रयोजनः पुनः. क.

भाष्यम्

संबन्धं यथा देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपल-भ्यादित्येऽपि गतिस्मरणम् ॥

बृहती

माने व्यभिचारः यथा प्रत्यक्षे शुक्तिकादिषु ? नन्विदानीमेव द्विविधशब्देन प्रदर्शितम्। नन्वनानुमानिके ह्यानुमानिकत्वं निरसनीयम्, न पुनरनुमानस्योद्धारो वक्तव्यः । कश्चात्र विशेषः ? येऽपि ह्यानुमानिकमनानुमानिकमिच्छन्ति, तेऽप्यनुमानं व्यभिचारयन्त्येव । तस्मादत्रापि व्यभिचारनिवृत्तिरेव लक्षणाभिधानस्य प्रयोजनम् । किञ्च प्रमेयेऽपि सङ्करः— न महानसादिषु दृष्टो धूमः पर्वतस्थमग्निं प्रतिपादयितुं क्षम इति केचित् ;

पञ्चिका

लक्षणमुच्यते । अप्रमाणे हि प्रमाणाभिमानो व्यभिचारः; न चासावनुमानेऽस्ति । नन्विदानीमेव द्विविधशब्देनोक्तम्—सामान्यतो दृष्टमनुमानं नास्ति—इति विप्रतिपत्तिनिराकरणाय द्वैविध्यमुक्तमिति । अत्र पुनराक्षेपाभिप्रायमाह—**नन्वनानुमानिके ह्यानुमानिकत्वं निरसनीयम्, न पुनरनुमानस्योद्धारो वक्तव्यः[1]** । कार्त्स्न्येनोद्घाटनमुद्धारशब्देनोच्यते । **कश्चात्र विशेष इति** । प्रमाणविषयं ह्यज्ञानं निरसनीयम्; इदमपि चाज्ञानं यदानुमानिकमनानुमानिकमुच्यते तदाह—येऽपि ह्यानुमानिकं क्रियादिज्ञानमनानुमानिकमिच्छन्ति तेऽपि ह्यनुमानं व्यभिचारयन्त्येव लोकप्रसिद्धादनुमानरूपादनुमानं व्यभिचारयन्त्येव । तस्मात्तदपि निराकार्यम् । **तस्मादत्रापि व्यभिचारनिवृत्तिरेव लक्षणाभिधानस्य प्रयोजनम्** । किञ्च, प्रमेयेऽपि सङ्करोऽस्ति अविवेकोऽस्ति; सोऽपि लक्षणेन निवर्त्यते । **न महानसादिषु दृष्टो धूमः पर्वतस्थमग्निं प्रतिपादयितुं क्षम इति केचित्** । अन्यस्य सम्बन्धे गृहीते अन्यस्याग-

१. वाच्यः. ग. वक्तव्यः । अत्र पुनराक्षेपाभिप्रायमाह. क.

बृहती

विशेषा एवावगम्यन्त इत्यपरे ; स्मृतिमात्रमेवेत्यन्ये । तस्मात्--ज्ञातसम्बन्धस्यैकदेशदर्शनात् , यत् एकदेशान्तरे ज्ञानमसन्निकृष्टे--इति विशिनष्टि । किमनेन निराकृतम् ? स्मरणं तावन्निरस्तम् , असन्निकृष्टे—इति वचनात् । अप्रतिपत्तिरपि निरस्तैव, बुद्ध्युत्पादवचनात् । सम्बन्धावगमात्— इति विशेषावगतिरपि निरस्तैव । ननु न बुद्ध्युत्पादमात्रात्प्रमाणता शक्यते वक्तुम् , शुक्तिकादिषु व्यभिचारात् । असम्बन्धस्य तु दर्शनं सम्बन्धाभिधानादेव प्रत्युक्तम् । सम्बन्धावगमे च पूर्वानुभवो दुर्निवारः । अहो ! अनुभवाविवेकिनो महान् प्रमादः । किं पूर्वदृष्टस्यानुभवो न संभवति ?

पञ्चिका

मकत्वात् । **विशेषा एवावगम्यन्त इत्यपरे ।** सामान्यतो दृष्टस्य सम्बन्धग्रहणाभावेनानुपपत्तेः । **स्मृतिमात्रमित्यन्ये ।** सम्बन्धि[1]व्याप्तिग्रणेन गृहीतत्वात् । यस्मादेवं सङ्करोऽस्ति, तस्मात् ज्ञातसम्बन्धस्यैकदेशस्येत्येकदेशं विशिनष्टि ; एकदेशान्तरेऽसन्निकृष्ट इति एकदेशान्तरं[2] विशिनष्टि । किमनेन विशेषणेन निराकृतम् ? स्मरणं तावदसन्निकृष्ट इति निरस्तम्, असन्निकृष्टतया ह्येकदेशान्तरं प्रतीयते । **अप्रतिपत्तिरपि निरस्तैव, बुद्ध्युत्पादवचनात् ।** बुद्धिशब्देन लक्षणगतेन । न चाज्ञातसम्बन्धस्य गमकत्वम्, सामान्येनोपलक्षितानां सम्बन्धज्ञानात् । **सम्बन्धावगमादिति विशेषावगतिरपि निरस्तैव ।** सम्बन्धग्रहणस्य सामान्यतो विशेषतश्च सम्भवात् विशेषावगतिरेवानुमानेनेति निरस्तम् । अत्राह—न[3]नु **न बुद्ध्युत्पादमात्रात् प्रमाणता शक्यते वक्तुम् ।** शुक्तिकारजतादिषु स्मृतिरूपासु व्यभिचारात् । अथ मा भूत्स्मृतिरिति सम्बन्धज्ञानापह्नवः क्रियते, तत्राह— **असम्बन्धस्य तु दर्शनं सम्बन्धावग[4]माभिधानादेव निरस्तम् ।** सम्बन्धावगमे च प्रतिसम्बन्धितया पूर्वानुभवोऽग्न्यादीनां दुर्निवारः । **अहो अनुभवा[5]विवेकिनो महान् प्रमादः ।** यस्मादेवमुच्यते । किं पूर्वानुभूतस्यानुभवो न संभवति ? यदा हि

१. सम्बन्धे व्याप्ति. ग.
२. Omitted. विशिनष्टि. ग.
३. Omitted. ननु. ग.
४. Omitted. अवगम. ग.
५. मूले क. ग. योश्च "नयाविवेकिनः".

बृहती

**अनुभूतिश्च नः प्रमाणम् । अन्या च स्मृतिरन्योऽनुभवः । सत्यं सम्बन्धस्य दर्शनात्स्मृतिः ; सम्बन्ध्यन्तरे त्वनुभव एव । ततश्चासन्नं पुनःपुनर्दृश्यमानम्—दृश्यत एव—इति तार्किकाः व्यपदिशन्ति, न—स्मर्यते—इति । सिद्धं चानुमानादिषु प्रमाणत्वमनुभूतेः । किं तर्हि—“असन्निकृष्टे”—इति ? स्मरणाभिमानशून्ये इत्यर्थः । सन्नि-**

पञ्चिका

यत्पूर्वानुभूतम्, तत्र च यदि पुनरनुभवो न संभवेत्, तदा स्मारणमेवेदं भवेत्; अस्ति तु धारावाहिकादिष्वनुभूतिः । **अनुभूतिश्च नः प्रमाणम्** । धारावाहिक-विज्ञानान्तरवत् । नन्वत्र सम्बन्धस्मरणे सम्बान्धितयाग्निः स्मर्यत एव । तत्राह —**अन्या च स्मृतिः अन्योऽनुभवः** । तदेवाह—**सत्यम्, सम्बन्धस्य दर्शनादिति स्मृतिः** । धूमेऽग्निसम्बन्धितया । सम्बन्ध्यन्तरे त्वग्न्याख्येऽनुभव एव सः-इत्यप्रतीतेः । यतश्च पूर्वानुभूतेऽप्यनुभवो भवति । **अतश्चासन्नं पुनः पुनर्दृश्य-मानम्—दृश्यत एव—इति लौकिका व्यपदिशन्ति, न—स्मर्यते—इति । अतः सिद्धमनुमानादिषु प्रमाणत्वमनुभूतेः** । एतेन ये कालातिरेकेण प्रामाण्यं धारावाहिकेष्वाहुस्ते निराकृताः, क्षणभेदस्यावेद्यत्वात् । ये हि तत्र तदाद्यदर्शनमेव प्रमाणमिति बौद्धा आहुः, तेऽपि सर्वेषां तुल्यत्वेन निराकृताः । किमिदं तर्ह्यसन्निकृष्टत्वादिति ? स्मरणाभिमानशून्यत्वादित्यर्थः । असान्निकृष्टत्वेन गृह्यते, तेन स्मरणाभिमानो नास्ति । **सन्निकृष्टावमर्शने**[२] **हि स्मरणमेवेति मन्यन्ते** । न चात्र सन्निकृष्टावमर्शोऽस्ति[३] । तस्मान्नेदं स्मरणम् ।

---

१. असंशयम् . क, ग.　　　३. अस्तीति. ग.
२. अनुसन्धानात् . ग.

बृहती

कृष्टावमर्शे हि स्मरणमेव मन्यन्ते। ननु स्मृतिप्रमोषतुल्यतैव प्राप्नोति? न, कारणान्तरस्य विद्यमानत्वाल्लिङ्गादेः ; न ह्यत्र पूर्वानुभूतिरेव कारणम्। तत्र हि प्रमोषः स्मृतिविपर्यये हेतुः ; इह तु लिङ्गादि प्रत्युत्पन्नं कारणमस्तीति सिद्धं प्रामाण्यम्। तस्मादत्रापि यत्प्रमाणम्, न तद्व्यभि-चरति--इति वक्तव्यम्, उक्तं च। इदमुपमानादिष्वपि योज्यम्॥

पञ्चिका

ननु च स्मृतिप्रमोषतुल्यतैवं प्राप्नोति। गृहीतविषयत्वात्, गृहीतत्वाननु-सन्धानाच्च। न, करणान्तरस्य विद्यमानत्वाल्लिङ्गादेः। अयमाशयः—पूर्वानुभवो-पजीवित्वि विज्ञानं स्मरणम्; तच्च तदुपजीवित्वं प्रतिभासतो वा, स घटः—इत्यादौ अनुभूतत्वस्य विद्यमानत्वात्; कार्यतो वा, रजतादिप्रतीतेरन्यथाभावात्। अनु-मानस्य लिङ्गाद्येव कारणमस्तीति पूर्वानुभवोपजीवित्वं नास्ति। अतः प्रमाणान्तरमेवे-दम्, न स्मरणम्; तदाह—न ह्यत्र पूर्वानुभूतिरेव कारणम्। यथा रजतादिप्रतीतेः। ननु[1] रजतादिप्रतीतेः कथं स्मृतित्वम्, ग्रहणबुद्धेः इत्यत्राह—तत्र हि प्रमोषः। स्मरामि—इत्यंशस्य खण्डनम्, स्मृतिविपर्यये ग्रहणाभिमाने हेतुः। नन्वत्रापि प्रमोष-निबन्धनः प्रमाणाभिमानः किं न भवति इत्यत्राह—इह तु लिङ्गादि प्रत्युत्पन्नं कारण-मस्तीति। कार्यान्यथानुपपत्त्या हि स्मृतिरूपता प्रतीत्यनारूढापि कल्प्यते ; इह तु कारणान्तरमस्तीति। सिद्धं प्रामाण्यमिति। अनेनोपसंहारः। यस्मादेवं व्यभि-चारसम्भवोऽनुमाने, तस्मादत्रापि यत्प्रमाणम्, न तद्व्यभिचरतीति वक्तव्यम्; उक्तं च, भाष्यकारेण। इदमुपमानादिष्वपि योज्यम्। तत्रापि स्वरूपविप्रति-पत्तिरेव व्यभिचारः। लक्षणाभिधानेन चाव्यभिचार उक्तः॥

इत्यनुमानप्रकरणम्।

---

१. ननु प्रतीतेः. ग.

भाष्यम्

## शास्त्रं शब्दविज्ञानात् असन्निकृष्टेऽर्थे विज्ञानम् ॥

बृहती

"शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानाम्।" किमिदं शब्दविज्ञानादिति? किं शब्दाद्विज्ञानम् शब्दविज्ञानम्, शब्दे एव वा विज्ञानम् शब्दविज्ञानम्? यदि तावच्छब्दे विज्ञानम् शब्दालम्बनमित्यर्थः, तदयुक्तम्; न तस्माच्छासनमवगम्यते; शासनाद्धि शास्त्रम्। अथ शब्दाद्यदर्थे विज्ञानमुत्पद्यते, तच्छब्दविज्ञानम्; तत्र विशेषावगतौ कारणं

पञ्चिका

"शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्"। किमिदं शब्दविज्ञानादिति? किं शब्दाद्विज्ञानमर्थविषयं शब्दविज्ञानमभिमतम्, उत [1]शब्दे विज्ञानं शब्दविज्ञानम्? यदि तावच्छब्दे विज्ञानं शब्दविज्ञानं शब्दालम्बनमित्यर्थः। तत्रानन्तरपक्षे दोषमाह—तदयुक्तम्, न तस्माच्छासनमवगम्यते। प्रेरणं च शासनम्; यतश्च शासनमवगम्यते, तच्छास्त्रम्; शासनाच्छास्त्रमिति लौकिकव्युत्पत्तेः। न च शब्दालम्बनाद्विज्ञानाच्छासनावगतिः; किन्तु कार्यावगतिः; कार्यावगमाद्धि प्रेरणावगमः। तस्माच्छब्दालम्बनाद्विज्ञानादर्थे विज्ञानं शास्त्रमिति लक्षणमयुक्तम्। अथ शब्दाद्यदर्थे विज्ञानमुत्पद्यते, तच्छब्दविज्ञानम् कार्यविज्ञानम्[2]; तस्मादसन्निकृष्टेऽर्थे प्रे[3]रणे यद्विज्ञानं तच्छास्त्रमिति। सत्यमेवमुपपद्यते लक्षणम्; किन्तु विशेषावगतौ कारणं वक्तव्यम्, व्युत्पत्तिविशेषावगमे पञ्चमीसमासपरिग्रहे कारणं वाच्यम्; सप्तमीसमासस्यापि सम्भवात्। अत्र परिहरति—उ[4]क्तं च शास्त्रमिति। उक्तं च विशेषावगतौ कारणं शास्त्रमिति; लक्ष्यानुरूपं हि लक्षणवर्णनम्। इह च[5] शास्त्रं लक्ष्यते, ते[6]न तदनुरूपं लक्षणं वक्तव्यम्। भवत्वेवम्, तथापि किमित्याह

१. Omitted. शब्दे विज्ञानम्. ग.
२. अर्थविज्ञानमिति. ग.
३. प्रेरणायाम्. ग.
४. तदुक्तं च. ग.
५. तु. ग.
६. तदेतदनुरूपं लक्ष्यम्. ग.

बृहती

वक्तव्यम् । उक्तं च—"शास्त्रम्" इति । शास्त्रं हि शासनात् ; तच्चार्थविषये एव विज्ञाने उपपद्यते, न शब्दविषये । द्वितीयेऽपि पक्षे तन्निमित्ततयोपपत्तेः सिद्धं शास्त्रग्रहणात् । ननु च शब्दाभासमपि दृष्टम्—"एष वन्ध्यासुतो याति"—इत्येवमादि ; तदपि शब्दादेवावगम्यते ; न हि बाष्पादितुल्यं किञ्चित्कारणान्तरमत्रोपलभामहे । परिहृतमेतत् "तच्चेत् प्रत्ययितात्" इति । लक्षणाभिधानेन चायमेव व्यभिचारो निरस्तः ॥

पञ्चिका

—शास्त्रं हि शासनात् । तच्चार्थविषय एव विज्ञाने [1]शब्दविज्ञानशब्दे पञ्चमीसमासाश्रयणेन गृह्यमाणे उपपद्यते, न शब्दस्वरूपविषये । तस्मात् पञ्चमीसमासोऽयमिति निश्चीयते । द्वितीयेऽपि पक्षे सप्तमीसमासेऽपि कार्यज्ञानेन[2] व्यवधानेनापि शब्दालम्बनज्ञानस्य प्रेरणाज्ञाननिमित्ततया लक्षणस्योपपत्तेः सिद्धं शास्त्रलक्षणम् ; शास्त्रग्रहणाल्लक्ष्यानुरूपेण पारम्पर्येण निमित्तत्वमाश्रयणीयमिति यावत् ।

ननु च शब्दाभासमपि दृष्टम्—"एष वन्ध्यासुतो याति" इत्येवमादि; तदपि शब्दादेवावगम्यते । अनेनाति[3]व्याप्ततया लक्षणदोषमाह, शब्दाभासेऽपि लक्षणस्य विद्यमानत्वात् ; तदपि हि शब्दविज्ञानादेवार्थविज्ञानम् । कुत इत्याह—न हि बाष्पादितुल्यं यथा अनुमानाभासे लि[4]ङ्गाभासं किञ्चित् कारणमत्रोपलभामहे । तत्रापि शब्दत[5]द्भावभावित्वाच्छब्द एव कारणम् । अत्र समाधिः—परिहृतमेतत् "तच्चेत् प्रत्ययितात्" इति । [6]अयमर्थः—पौरुषेयं वाक्यं लिङ्गभूतं प्रमाणान्तरोपस्थापनमुखेनार्थं प्रतिपा[7]दयति ; ततश्च लिङ्गाभासोत्थमेतदिति "तच्चेत्प्रत्ययितात्" इति भाष्ये व्याख्यातम् । लक्षणाभिधानेन चायमेव व्यभिचारो निरस्तः । पौरुषेयवाक्यस[8]मुत्थमपि ज्ञानं शाब्दमिति ये मन्यन्ते, तेऽपि निरस्ताः; तद्ध्यनुमानमित्युक्तम् ॥

इति शास्त्रप्रकरणम् ।

---

१. Omitted. शब्द. क.

२. ज्ञानेनाव्यवधानेनापि. ग.

३. अतिव्याप्तिलक्षण—ग.

४. भासः किञ्चित्कारणान्तर-ग.

५. शब्दतत्त्वभावाभावित्वात्. ग.

६. अस्यार्थः. ग.

७. पादनाय तत्तल्लिङ्गा--ग.

८. समुत्थानमपि. ग.

भाष्यम्

उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्य ॥

बृहती

"उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति; यथा गवयदर्शनं गोस्मरणस्य" इति। सादृश्यम्--इति हि सादृश्यम्। गोस्मरणस्येति, अनुभूतगोः पुरुषस्येत्यर्थः। ननु च ज्ञातसम्बन्धिता तुल्या, सा चात्र लक्षणम्;

पञ्चिका

उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति; यथा गवयदर्शनं गोस्मरणस्येति। अत्र वदन्ति--सादृश्यं नाम न किञ्चिदस्ति द्रव्यगुणकर्मसामान्यसमवायविशेषातिरिक्तं तदन्तर्भूतं वा, तेषां संग्रहेऽपठितत्वात् --इति पदार्थविदः। अत्रोच्यते--सादृश्यमिति हि सादृश्यम्[1]। अस्यार्थः-- 'सादृश्यम्' इति यत्र ज्ञानम्, तत् सादृश्यम्। अस्ति चेदं ज्ञानम्; तन्निबन्धना च[2] विषयव्यवस्था। तेन ज्ञानबलेन गुणादिव्यतिरिक्तं तदन्तर्निवेशि वा[3] सादृश्यमभ्युपगमनीयम्। गोस्मरणस्येति भाष्यमयुक्तम्, न हि स्मरणस्य बुद्धिरुत्पद्यते; तत्राह--गोस्मरणस्येति, अनुभूतगोः पुरुषस्येत्यर्थः। गोस्मरणस्येति गवि स्मरणं यस्येति बहुव्रीहिर्वा; गां[4] स्मरतीति वा; कर्तरि नन्द्यादिभ्यो ल्युस्मरणात्; गोः स्मरणो गोस्मरण इति षष्ठीसमासः। किं पुनरत्रानुमानाद्विशिष्यते? अत्रापि हि सादृश्यं ज्ञातसम्बन्धमेव गवये दृष्टं गवि ज्ञानमुत्पादयति; गोसादृश्यं हि गवयवर्ति गोवर्तिना गवयसादृश्येन ज्ञातसाहचर्यसम्बन्धः। अयमेव विशेषो धूमादिभिः यैद्भिन्नधर्मिधर्मभूतौ गम्यगमकौ[5]; अनुमाने हि धूमादिर्हि यत्र दृष्टः, तत्र ज्ञानमुत्पादयति; एतच्च "एकदेशान्तरे" इत्यत्रान्तरशब्देनोक्तम्, सादृश्यं त्वन्यत्र।

---

१. सादृश्यमिति किं सादृश्यम्. ग.
२. Omitted. च. ग.
३. Omitted. वा. ग.
४. गाः स्मरतीति. ग.
५. भिन्नधर्मे धर्मिभूतो गम्यगमकः। अनुमानं हि. ग.

बृहती

तत्र वान्यत्र वेति क्वेदमुपयुज्यते ? बाढमुपयुज्यते; "एकदेशदर्शनात्" इति हि तत्र लक्षणम्। "ज्ञातसम्बन्धस्य" इति विशेषणम्। अतो न गवयस्थं सादृश्यं सदृशावगतेरेकदेशः । किञ्च असकृद्दृष्टसम्बन्धो ह्यनुमानस्य हेतुः, असजातीय व्यावृत्तिसव्यपेक्षश्च; द्वयमत्र नास्तीति प्रमाणान्तरम् । किं पुनरत्र व्यभिचारदर्शनम्, यन्निवृत्यर्थमिदं लक्षणम्? किमन्यदतः सदृशाभासात्?

पञ्चिका

ननु च ज्ञातसम्बन्धिता तुल्या। सादृश्यस्य धूमादेश्च। सा चात्रानुमानेऽपि[1] लक्षणम्। तत्र वान्यत्र वेति क्वेदमुपयुज्यते? बाढमुपयुज्यते[2]; एकदेशदर्शनादिति हि तत्र लक्षणम्। एकदेशस्य प्रधानत्वात्। ज्ञातसम्बन्धस्येत्येकदेशविशेषणम्। उपसंहरति—अतो गवयस्थं सादृश्यं गोरेकदेशभूतं न भवति। किंभूतस्य गोः? सदृशावगतेः 'सदृशः' इत्यवगतिः यत्रेत्यर्थः; पक्षीभूतस्य जिज्ञासितधर्मिण[3] इति यावत्। किञ्च, असकृद्दृष्टसम्बन्धो ह्यनुमानस्य हेतुः। निरुपाधिकत्वेन सम्बन्धिनि गृहीते हेतुता; निरुपाधिकत्वं चानेकदर्शनगम्यमित्युक्तम्। सादृश्यं[4] तु न ज्ञातसम्बन्धम्, प्रथमदर्शनेऽपि विज्ञानोत्पत्तेः। तथा असकृद्दर्शनाकाङ्क्षापि नास्ति, सकृद्दर्शनेऽपि गमकत्वात्। असजातीयव्यावृत्तिसव्यपेक्षश्च। असजातीयेभ्योऽनग्निभ्यो या धूमस्य व्यावृत्तिः तदपेक्षश्च। तदाह वार्तिककारः—

"यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते ।
विपक्षस्य कुतस्तावद्धेतोर्गमकताबलम्[6] ॥" इति ।

अत्र त्वसजातीयव्यावृत्तिर्नापेक्ष्यत इतीदं प्रमाणान्तरमुपमानम्।

किं पुनरत्र व्यभिचारदर्शनम्, यन्निवृत्त्यर्थमिदं लक्षणम्? किमन्यदतः सादृशाभासात्। व्यभिचारदर्शनम्[5]। सदृशाभासे हि 'सदृशः' इति यत् ज्ञानम्, तदुपमानं न भवतीति दर्शितम्; तस्य सादृश्यानुपपत्तेः। न हि यो

---

१. Omitted. अपि. क.
२. Added. भृशमुपयुज्यते. ग.
३. धर्मिणा इति. ग.
४. सादृश्यं तु तज्ज्ञात. ग.
५. सात्। व्यभिचारिदर्शनम्. ग.
६. गमनिकाबलम्, वाचस्पतिमिश्रः.

बृहती

**अत्र सामान्यमेव कैश्चित् सादृश्यमुक्तम् ; न तत्सादृश्यम् । किं तर्हि ? तदेव तत् , गोत्वादेरेकत्वात् । ननु चात्र प्रमेयमेव नास्तीति केचिन्मन्यन्ते । तदयुक्तम् ; अनुभूतमपि कारणान्तरावगम्यं प्रमेयमेवेत्युक्तम् ॥**

पञ्चिका

येन सदृशो न भवति, स तेन सदृश इति यथा पलांलकूटं दृष्ट्वा—एतत्सदृशो हस्ती—इति ज्ञानं सदृशाभासविषयमिति ।

उक्तं तावत् सादृश्यज्ञानग्राह्यं सादृश्यमस्तीति; [1]तदिदानीं किं सामान्यमेव, उतान्यदिति विवेक्तुं परमतमुपन्यस्यति—**अत्र सामान्यमेव कैश्चित्सादृश्यमुक्तम्**। सामान्यमेव गुणावयवकर्म[2]त्वादिकं धर्म्यन्तरगतं ज्ञायमानं सादृश्यमुक्तम्—

"सामान्यानि च भूयांसि गुणावयवकर्मणाम् ।
भिन्नप्रधानसामान्यव्यक्तं सादृश्यमुच्यते ॥ " इति ।

तत्राह—**न तत्सादृश्यम्** । सादृश्यं भिन्नम् ; अन्यदेव हि गवि गवयसादृश्यम् ; अन्यच्च गवये गोसादृश्यम् ; [3]गुणत्वादिकं तु तदेव तत् धर्म्यन्तरे, गोत्वादेरेकत्वात् ; कर्णत्वादेरपि तदविशेषादेकत्वमेव ।

**ननु चात्र प्रमेयमेव नास्ति** । पूर्वं हि येन गौर्दृष्टः, तस्य गोसादृश्यं गवये प्रतिभाति ; तस्य च दृष्टगोः पुरुषस्य किमपरं प्रमेयमस्तीति केचिन्मन्यन्ते ; तत्राह—**तदयुक्तम् , अनुभूतमपि कारणान्तरावगम्यं प्रमेयमेवेत्युक्तम्** । अनुमाने । इह पुनरननुभूतमेव गवि गवयसादृश्यं कारणान्तरेण गवयगतगोसादृश्येन संप्रति दृश्यमानेनानुभूयत इति सुतरां प्रा[4]माण्यं युक्तम् । उपमानस्वरूपं तु—

सादृश्याद्दृश्यमानाद्यत् प्रतियोगिनि जायते ।
सादृश्यविषयं ज्ञानमुपमानं तदुच्यते ॥

इत्युपमानप्रकरणम् ।

---

१. Omitted. तत् . ग.　　३. कर्णत्वादिकम् . ग.
२. कर्मादिकम् . क.　　४. प्रामाण्यमुक्तम् . ग.

भाष्यम्

अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना । यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना ॥

बृहती

"अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थः अन्यथा नोपपद्यते इत्यर्थकल्पना—यथा जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना"—इति । केयमन्यथानुपपत्तिर्नाम ? यदि तावत्—अस्यानेन विना सद्भावो नोपपद्यते—इति । तदेवं कार्यतः कारणानुमानमुपन्यस्तम्, न प्रमाणान्तरम् । अथेदमुच्यते— ज्ञातसम्बन्धस्येत्यनुमानलक्षणम्, अज्ञातश्चात्र सम्बन्धः; तस्मात् प्रमाणान्तरम्— इति, तदयुक्तम् ; कथमज्ञातसम्बन्धः शक्यतेऽवगन्तुम्—अयमनेन विना नोपपद्यते—इति ;

पञ्चिका

अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना, यथा जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पनेति । व्याख्येयम् । केयमन्यथानुपपत्तिर्नामेत्यादिना अनुमानान्तर्गतत्वेनार्थापत्तेः पृथग्लक्षणं[1] न कार्यमित्याह—यदि तावदस्य सद्भावोऽनेन विना नोपपद्यत इति—तदा तदेवेदं कार्यादर्थतः[2] कारणानुमानमुपन्यस्तम्, न प्रमाणान्तरम् । अन्यथाशब्देन हि प्रकृतप्रकारव्यतिरिक्तप्रकारान्तरवाचिना कल्प्याभाव उक्तः, "नोपपद्यते" इत्यनेनापि नास्तित्वम् । तेनायमर्थः संपद्यते---कल्प्याभावेऽयमर्थो नास्तीत्यवगम्यार्थान्तरकल्पनेति । तथा च कार्यतः कारणानुमानमिदं प्राप्तम् ; कार्यमपि हि कारणेन विना नोपपद्यत इत्यवगतं सत्कारणमनुमापयति[3] । अथेदमुच्यते—ज्ञातसम्बन्धस्येत्यनुमानलक्षणम् ; अज्ञातश्चात्र सम्बन्धः ; तस्मात्प्रमाणा-

---

१. पृथग्ग्रहणम् . ग.
२. कार्यार्थतः ग.
३. सर्वत्र कारणम् . ग.

बृहती

न ह्यन्यथानुपपत्तिः प्रत्यक्षसमधिगम्या । कार्याव्यभिचारसमधिगम्या हि सा ; अव्यभिचारश्चासकृद्दर्शनपूर्वकः । तस्मात् दृष्टमदृष्टं वा ज्ञातसम्बन्धमेवावगम्यतेऽन्यथानुपपत्त्या ; अतः प्रमाणान्तरं मृगतृष्णिकैवेति । सत्यम् ; यदि यद्येन विना नोपपद्यते तदेवावगमकं स्यात् ;

पञ्चिका

न्तरमिति । अयमाशयः—यद्यप्यन्यथानुपपत्तिस्तुल्या, तथापि सम्बन्धज्ञानाभावादननुमानमिति । तद्युक्तम्, कथमज्ञातसम्बन्धः शक्यतेऽवगन्तुम्—अयमनेन विना नोपपद्यते—इति ? कस्मान्न शक्यत इत्याह—न ह्यन्यथानुपपत्तिः प्रत्यक्षसमधिगम्येति । यदि ह्यन्यथानुपपत्तिः प्रत्यक्षेणावगम्यते, तदा सम्बन्धज्ञानं विनाप्यसौ निश्चीयते; न चासौ प्रत्यक्षसमधिगम्या । न[1] चान्यथानुपपत्तिरनिश्चितैवावगमिकेति ; यतो भाष्यकारेणोक्तम्—"अन्यथा नोपपद्यते इति" इति । इतिशब्दश्च[2] ज्ञाननिर्देशप्रधानो लोके दृष्टः; न चानिश्चितायामनुपपत्तौ विशिष्टावगमे कारणमस्ति ; तस्मा[3]दवगतैवानुपपत्तिः कारणम् । किन्तु कार्याव्यभिचारसमधिगम्या हि सा । कार्यस्य हि कारणाव्यभिचारेणेदं समधिगम्यते—कार्यं कारणेन विना नोपपद्यते—इति । अव्यभिचारश्चासकृद्दर्शनपूर्वकः । असकृद्दर्शनेन हि कार्यस्य स्वाभाविकः कारणसम्बन्धो निश्चीयते ; स्वाभाविककारणसम्बन्धनिश्चयश्चाव्यभिचारनिश्चयः । तस्माद्दृष्टमदृष्टं वा ज्ञातसम्बन्धमेवावगम्यतेऽन्यथानुपपत्त्या । अतः दृष्टं स्वलक्षणतो दृष्टम् यत्[4] स्वलक्षणतोऽदृष्टं सामान्यतोदृष्टम्, तत् ज्ञातसम्बन्धमेव स[5]दन्यथानुपपत्त्या अन्यथानुपपद्यमानत्वेन विज्ञायते, न पुनरज्ञातसम्बन्धमपीति । अतो ज्ञातसम्बन्धादर्थादियमवगतिरनुमानमेवेति प्रमाणान्तरं मृगतृष्णिकैव । सत्यं यदि यद्येन विना नोपपद्यते, तदेवावगमकं स्यात् । अस्यार्थः—यस्य येन वि[6]नानुपपत्तिः, यदि तत्तस्यावगमकं स्यात्तदानुमानमिदं भवेत् । इह तु ये[7]न्नोपपद्यते, तदे-

१. न चेदं वाच्यमन्यथा. ग.
२. शब्दश्च निर्देश-क.
३. तस्माज्ज्ञावगतैव. ग.
४. Omitted. यत् स्वलक्षण—ग.
५. तदन्यथा. ग.
६. Omitted. विना. ग.
७. Omitted. यत्. ग.

बृहती

**इह तु यन्नोपपद्यते, तदेवावगम्यते । किं चात्र नोपपद्यते ? जीवतो गृहाभावदर्शनात् अन्यत्राभावो नोपपद्यते । ततः किम् ? नात्राभावस्य गम्यता । कस्य तर्हि ? भावस्य ; न चासौ गृहाभावदर्शनेनोपपद्यते । बाढं नोपप-**

पञ्चिका

**वावगम्यम्** । एवं सिद्धान्तिनोक्ते पूर्वपक्षी ब्रूते—**किमत्र नोपपद्यते ? जीवतो गृहाभावदर्शनादन्यत्राभावो नोपपद्यते**—इत्येकग्रन्थेन । जीवतोऽपि गृहाभावे दृष्टेऽन्यत्राभावोऽनुपपन्नः, जीवनाभावप्रसङ्गात् । ततः किमिति पृष्टे स्वाशयमाविष्करोति—**नात्राभावस्य गम्यता । कस्य तर्हि ? भावस्य । न चासौ गृहाभावदर्शनेनोपपद्यते इति** । बहिर्देशे भावोऽवगम्यते । तदुक्तम्—"बहिर्भावस्यादृष्टस्य कल्पना" इति । न च तस्य गृहाभावे सत्यनुपपत्तिः, प्रत्युत यावदुपपत्तिरेव ; यस्य चाभावस्यानुपपत्तिः, न तस्य गम्यता । तेनानुपपद्यमानमेव गम्यतेऽर्थापत्त्येत्यघटमानम् । अथोच्येत—सत्यं गृहाभावदर्शने सत्यन्यत्र भावस्यानुपपत्तिर्नास्तीति, किन्तु गृहाभावदर्शनेन विनानुपपत्तिर्भवत्येव बहिर्भावस्य ; अन्यथाशब्देन विनाशब्दार्थ एवोच्यते ; तेन गृहाभावदर्शनव्यतिरेकेणानुपपत्तिर्बहिर्भावस्येति । तन्न ; न चासौ गृहाभावदर्शनेन विना नोपपद्यते । योऽपि हि देवदत्तादेर्गृहाभावं न पश्यति, तस्यापि बहिर्भावमात्रदर्शनेऽनुपपत्तिप्रतिभासो नास्ति । तस्मादयमपि प्रकारो नोपपद्यते । **बाढं नोपपद्यत इति** । सिद्धान्ती वदति । अत्रेदमाकूतम्—नात्र गृहाभावदर्शनेन विनानुपपत्तिरुच्यते ; किं तु गृहाभावदर्शनेन बहिर्विना भावो नोपपद्यत इति । तेन गृहाभावदर्शनं बहिर्देशसम्बन्धेऽनवगते भावस्यानुपपत्तौ कारणम् ; अनुपपत्तिश्च प्रमाणान्तरविरोधः । गृहाभावदर्शने सति, अनवगते बहिर्देशसम्बन्धे, प्रमाणप्रतीतमपि जीवनम्—कथमिह नास्ति ? जीवति वा—इति संशय्यमानं

---

१. किञ्चात्र. ग.
२. जीवतो हि. ग.
३. उपपत्तिरवश्यं चाभावस्य. ग.
४. न च तस्य ग.
५. भावस्य ह्यन्यथा. ग.
६. तन्नचासौ गृहाभावदर्शनेनापि. ग.
७. बहिर्भावश्चात्र. ग.
८. अपि हि. ग.
९. दर्शनेन सत्यनव—ग.
१०. संशयमानम्. ग.

बृहती

द्यते ; न हि गृहाभावदर्शनेन विना बहिः भाव उपपद्यते ।

नन्नु "दृष्टः श्रुतो वाऽर्थः अन्यथा नोपपद्यते" इति गमकस्यान्यथानुपपद्यमानतां दर्शयति । अग्रन्थज्ञो देवानां प्रियः—"दृष्टः श्रुतो वार्थोऽर्थकल्पना" इति किमिदमर्थकल्पनेति ? दृष्टः श्रुतो वार्थोऽर्थान्तरस्य प्रमाणमित्यर्थः । "अन्यथा नोपपद्यते" इति केन सम्बध्यते ? प्रमित्येति वदामः; अन्यथानुपपद्यमानतामापादयन् अर्थान्तरं गमयति । किमत्र ज्ञातसम्बन्धिता नैवापेक्ष्यते ? अपेक्ष्यते हि सम्बन्धमात्रज्ञानम् , न तु सम्बन्धिता ; अनुमाने तु—"ज्ञातसम्बन्धस्य" इति षष्ठ्या सम्बन्धितैवावगमिकेत्युक्तम् ।

पञ्चिका

बहिर्देशसम्बन्धितयावगम्यते । अतोऽत्र स एवानुपपन्नो भावः; स एवावगम्यत इति सिद्धम् । न हि गृहाभावदर्शनेन विना बहिः भाव उपपद्यत इति । गृहाभावदर्शनेन बहिर्विना भावो नोपपद्यत इति ग्रन्थार्थः । बाढशब्देन चानुपपत्तिरतिशयेनेत्युक्तम् ।

ननु च "दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते" इति गमकस्यान्यथानुपपद्यमानतां दर्शयति । न गम्यस्य । दृष्टोऽर्थोऽन्यथा नोपपद्यत इति सम्बन्धः प्रतिभातीत्यभिप्रायः । अग्रन्थज्ञो देवानां प्रिय इति । आक्रोशे षष्ठ्या अलुक् "आक्रोशे देवानां प्रिय इत्यस्योपसंख्यानं कर्त्तव्यम्" इति । परमार्थं दर्शयति—"दृष्टः श्रुतो वार्थोऽर्थकल्पना" इति—किमिदमर्थकल्पनेति ? सामानाधिकरण्यं नोपपद्यत इत्यर्थः । दृष्टः श्रुतो वार्थोऽर्थान्तरस्य प्रमाणमित्यर्थः । कल्पनाशब्दोऽत्र प्रमितिपर इत्यभिप्रायः । "अन्यथा नोपपद्यते" इति केन संबध्यत इति । यदि दृष्टः श्रुतो वेत्यनेन सम्बन्धो[1] नोच्यते, केन तर्हि संबध्यत इति । प्रमित्येति वदामः । येयमर्थापत्तिसंज्ञितो[2] प्रमितिः, तया संबध्यत इति वदाम इति । तत्र वचनव्यक्तिमाह—अन्यथानुपपद्यमानतामापादयन्नर्थान्तरं गमयतीति । अन्यथा, क-

१. वेत्यनेन न सम्बन्धः. केन. ग.   २. संज्ञिका. ग.

पञ्चिका

ल्यस्याकल्पनायाम्, अनवगते बहिस्सम्बन्धे, अनुपपद्यमानताम् प्रमाणान्तरविरोधम्, आपादयन् गृहाभावो बहिर्भावमर्थान्तरं गमयतीति। **किमत्र ज्ञातसम्बन्धिता नैवापेक्ष्यते ?** अनेन पुनरप्याशङ्क्यते। अस्यार्थः—यावज्जीवनं देशेन नित्यसम्बद्धमिति नावगतं तावद्गृहाभावदर्शनेन बहिर्भावमनवबुध्यमानस्यापि नानुपपत्तिः। तेन सम्बन्धिज्ञानापेक्षित्वादनुमानमेवेदम्। **अपेक्ष्यते हि सम्बन्धमात्रज्ञानम्, न तु सम्बन्धिता।** सत्यम्; जीवनस्य देशेन सह सम्बन्धोऽपेक्ष्यते, न पुनर्गमकस्य गृहाभावस्य बहिर्भावेन सह[1] सम्बन्धिता। अतोऽर्थापत्तौ जीवनस्य देशेन सह सम्बन्धमात्रज्ञानमवगत्यङ्गम्[2]। **अनुमाने तु "ज्ञातसम्बन्धस्य" इति षष्ठ्या सम्बन्धितैवावगमिकेत्युक्तम्।** ज्ञातः सम्बन्धो यस्य—इति विग्रहवाक्यगतया षष्ठ्या सम्बन्धिन एवैकदेशस्य दृश्यमानस्य गमकत्वम्; तेन यस्य जीवनस्य देशेन सम्बन्धोऽवगतः, तस्य गमकत्वं नास्ति; यस्य च गमकत्वम्, तस्य सम्बन्धज्ञानापेक्षा नास्तीति सिद्धं प्रमाणान्तरम्। अत्र श्लोका भवन्ति—

"विना कल्पनयार्थेन नयतानुपपन्नताम्।
अर्थान्तरं कल्प्यते यत्तदर्थापत्तिगोचरः॥
अभावेन गृहे भावो बहिः कल्पनया विना।
नयतानुपपन्नत्वं कल्प्यमानो[3] बहिर्यथा॥
गम्यस्यानुपपन्नत्वमिह कल्पनया विना।
मानान्तरविरोधेन सन्देहापत्तिलक्षणम्[4]॥
देशेन हि विना भावो न कदाचन दृश्यते।
गृहाभावेन सिद्धोऽपि तेन सन्देहमृच्छति॥
तत्सन्देहव्युदासाय कल्पना या प्रवर्त्तते।
सन्देहापादकादर्थादर्थापत्तिरसौ स्मृता॥
गमकस्यानुमाने तु विपक्षासत्त्वलक्षणम्[5]।
गम्यतेऽनुपपन्नत्वं विना गम्येन[6] वस्तुना॥

---

१. Omitted. सह ग.
२. मवगमकमिष्यते. ग.
३. कल्पनातः. ग.
४. सन्देहोत्पत्ति. क.
५. स च लक्षणम्. ग.
६. गम्येत. ग.

बृहती

"दृष्टः श्रुतो वा" इति दर्शनश्रवणोपन्यासः किं कारणान्तरव्युदासाय ? नेति वदामः, उपलब्धोऽर्थः--इत्यर्थः । श्रुतग्रहणमिदानीं किमर्थम् ? "दृष्टः" इत्येव वक्तव्यम् । उच्यते—अभिधानान्तरमेवेदम्— "दृष्टः श्रुतो वा" इत्युपलब्धेर्वाचकम् ॥

पञ्चिका

तत्सामग्रीविभेदेन भिन्ने एते परस्परम् ।
अर्थापत्त्यनुमानाख्ये प्रमाणे इति निश्चितम् ॥ " इति ।

दृष्टः श्रुतो वेति दर्शनश्रवणोपन्यासः किं कारणान्तरव्युदासाय ? दृष्टग्रहणेन प्रत्यक्षपरिच्छिन्नो गृह्यते, श्रुतग्रहणेन तु शब्दावगतः । यदि तु दृष्टग्रहणेनोपलब्ध उच्यते, ततः श्रुतग्रहणमतिरिच्येत । तस्मात् प्रमाणद्वयपरिग्रहायापरप्रमाणव्युदासाय च "दृष्टः श्रुतो वा" इत्युक्तमिति पूर्वपक्षवाद्येवापादयति । ततश्च प्रमाणान्तरपूर्विकार्थापत्तिर्न संगृहीतेति दूषणं हृदि स्थितम् । सिद्धान्ती त्वाह—नेति वदाम इति ! न प्रमाणान्तरव्युदासाय । किं तर्हि दृष्टः श्रुतो वेति ? उपलब्धोऽर्थ इत्यर्थः । ततश्चोप[2]लब्धमात्रग्रहणात्सर्वप्रमाणसङ्ग्रहो भवतीत्यर्थः । श्रुतग्रहणमिदानीं किमर्थम् ? दृष्ट इत्येव वक्तव्यम् । दृष्टग्रहणेनैवोपलब्धवाचिना श्रुतस्यापि संगृहीतत्वादिति ।

ननु च यद्यपि श्रुतोऽप्युपलब्ध एव, तथापि श्रुतपूर्विकाया अर्थापत्तेः प्रमाणग्राहिणीत्वेन विशेषं सूचयितुं श्रुतग्रहणं कृतमिति । ननु श्रुतार्थापत्तावपि श्रुतो दिवाभोजनाभावो रात्रिभोजनं विना पीन[3]त्वस्यानुपपन्नत्वे सत्यनुपपद्यमानो रात्रिभोजनमेव कल्पयति, न शब्दम् ; न हि शब्देन विनार्थस्यानुपपत्तिः; किं तु अर्थेनैव । सत्यमेवम्, अर्थमेव कल्पयितुं प्रवृत्तार्थापत्तिः तस्यार्थस्य सविकल्पकज्ञानग्राह्यत्वाच्छब्दपुरस्सरतया प्रतीतेः शब्द एव प्रथमोपनिपातिनि पर्यवस्यति, नार्थं यावद्गच्छति; शब्द एव त्ववगतोऽर्थ-

---

१. Added. प्रमाणान्तर–ग.
२. पलब्धिमात्र. ग.
३. Omitted. पीनत्वस्य. ग.

पञ्चिका

मुं[1]पस्थापयति । नन्वेवं प्रत्यक्षादिष्वपि सविकल्पकज्ञानान्यर्थं न[2] गृह्णीयुः, किं तु शब्द एव पर्यवस्येयुः । तिर्यगादिप्र[3]तिपत्तिषु शब्दशून्यास्विन्द्रियस्यार्थ एव सामर्थ्यमवधृतम् ; तेन सविकल्पकदशायामपि तत्रैव भवितुमर्हति; नान्यत्र, शक्तिकल्पनापरिक्षयात् । श्रुतार्थापत्तिस्तु कदाचिदपि तिरश्चां नास्ति, शब्दव्युत्पत्तिनिबन्धनत्वात्तस्याः; न ह्यव्युत्पन्नः शब्दपूर्वकं वाक्यार्थमवबुध्यते । ननु दृष्टार्थापत्तौ तावदर्थापत्तेरर्थ एव सामर्थ्यमवधृतम् ; अत्रापि तथैव भवितुमर्हति । सत्यमर्थ एव सामर्थ्यं दृष्टम् , किं तु उ[4]पपादकत्वेन ; न ह्यर्थोऽपि स्वरूपतः प्रतीयते, किं तु उपपादकतया ; तच्च उपपादकम् , यस्मिन्नवगतेऽनुपपत्तिः शाम्यति; शब्देऽपि च[5] साक्षादुच्चरितेऽनुपपत्तिशान्तिर्भवतीति प्रथमोपनिपातिनि शब्द एव श्रुतार्थापत्तेर्व्यापारः । तदाह भगवान् वार्तिककारः—

"न चार्थेनार्थ एवायं द्वितीयो गम्यते पु[6]नः ।
सविकल्पकविज्ञानग्राह्यत्वात्तु तिरोहितः ॥
अग्निरिन्द्रियलिङ्गाभ्यां नाग्निरित्येव गृह्यते ।
तथा चार्थात्मनैवायं तिर्यग्भिरपि दृश्यते ॥
श्रुतार्थापत्तिबोधस्तु तिरश्चां न कदाचन ।
शब्दव्युत्पत्तिजा ह्येषा श्रुतार्थापत्तिधीर्मता ॥
शब्दान्तराणां बुद्ध्यासौ नार्थमेवाधिगच्छति ।
तेनैषा नियतं तावत्प्रथमं वाक्यगोचरा ॥
वाक्यमेव तु वाक्यार्थं गतत्वाद्गमयिष्यति ।" इति ।

तदेतत् टीकाकारो भगवान्न मृष्यति । यथागुरुदर्शनं किञ्चिदुच्यते— सविकल्पकविज्ञानेषु शब्दोऽर्थावच्छेदकरूपः प्रतीयते, वाचकतया च शब्दोऽर्थमवच्छिनत्ति । तेन—गौः—इति ज्ञाने 'गोशब्दवाच्योऽयम्' इत्येवमर्थः परिगृह्यते । न च शब्दवाच्यतां शब्दो वक्ति । तेनार्थस्य अप्रतिपादकोऽस्मिन् विषये शब्दः; किं तु वृद्धव्यवहारावग[7]तवाचकतया वाच्यं

१. मुत्थापयति. ग.
२. Omitted, न. ग.
३. प्रतीतिषु. क.
४. उत्पादकत्वेन. ग.
५. Omitted, च. ग.
६. तु नः ग.
७. गतया वाचक. ग.

पञ्चिका

विशिंषन्नवभाति । तेनासावर्थानुपस्थापकत्वात् प्रथमभाव्यपि नानुपपत्तिं शमयितुमलमिति नार्थापत्तिप्रमेयतामनुभवितुमर्हतीति । तेनार्थविषयैवेयमपीति विशेषप्रदर्शनार्थमपि श्रुतग्रहणं न भवति । ये तु---शब्द एव विश्वजिदादिष्वपरिपूर्णत्वादनुपपन्न इति मन्यन्ते ; तेन तदुपपादकः शब्द एव कल्प्यते इति वदन्ति, ते स्वमनीषिकाकल्पनया विक्लवं भाषमाणा उपेक्षामर्हन्तोऽपि बालैराद्दता इति बालजनपरिबोधनाय किञ्चिदुच्यते ।

का तावदियं शब्दस्यानुपपत्तिरर्थानुपपत्त्यतिरेकिणी ? अपरिपूर्णता चेत्, का पुनः शब्दस्यापरिपूर्णता ? अर्थ एव हि केनचिदर्थभागेन विनापरिपूर्णो भवति । अर्थापरिपूर्तेः शब्दोऽप्यपरिपूर्णः इति चेत्, भवत्वेवम्; [2]यन्निबन्धना हि तस्यानुपपत्तिः तस्यैव तर्ह्युपपत्तिरङ्गीकरणीया ; अन्यथा तदवस्थैव शब्दस्यापरिपूर्णता स्यात् । तस्मादपरिपूर्णत्वेऽपि शब्दस्य अर्थ एव कल्पनीयः । न चार्थानुपपत्तौ शब्दस्यानुपपत्तिः, भिन्नत्वाच्छब्दार्थयोः । अथोच्येत—अर्थानुपपत्तौ प्रमेयाभावे शब्दस्य प्रमाणताप्यनुपपन्नैव—इति ; एवमपि प्रमाणतानुपपन्ना स्यात्, न शब्दः । न च प्रमाणता पृथगनुपपन्ना, किं तु अर्थानुपपत्त्यैव ; एवं चेन्मूलभूतार्थानुपपत्तिरेवार्थापत्त्युपस्थापिकास्तु । अपि च प्रमाणतापि केनचिदर्थेन विना प्रमेयाभावशङ्कयानुपपन्ना, न शब्दाभावेन, येन शब्दं कल्पयेदित्यलमतिविचारेण । दूरमन्तरिता वयं प्रकृतमनुसरामः ।

[3]तत्रोत्तरम्—**अभिधानान्तरमेवेदमुपलब्धेर्वाचकम्** । अस्यार्थः—दृष्टशब्दमात्रेण न सर्वपरिग्रहः, किं तु श्रुतशब्दसहितेन; तेन श्रुतग्रहणं नानर्थकम् । कथं पुनः श्रुतग्रहणसहितेन दृष्टशब्देनोपलब्धतोच्यते ? श्रूयताम्—दृष्टशब्देन यद्यप्युपलब्धमात्रमुच्यते, तथापि श्रुतशब्दसन्निधानात् गोबलीवर्दन्यायेन शब्दप्रमितव्यतिरिक्तमुच्यते । नन्वेतस्य गोबलीवर्दन्यायस्याश्रयणे किं प्रयोजनम् ? उच्यते—लौकिका वयम् ; लोकश्चेत्थमपि व्यवहरमाणो दृश्यते; न च लोके पर्यनुयोगावकाशोऽस्ति, अनादित्वात् । अत इदमुक्तमभिधानान्तरमेवेदं लोकप्रतीतमुपलब्धेर्वाचकमिति ॥

इत्यर्थापत्तिप्रकरणम् ॥

---

१. न भवति. ग. तस्य च तर्ह्युपपत्ति. ग.
२. निबन्धना तर्हि तस्यानुपपत्तिः ३. अत्र. ग.

भाष्यम्

**अभावोऽपि प्रमाणाभावः 'नास्ति'----इत्यस्यार्थस्यासन्निकृष्टस्य ॥**

बृहती

"अभावोऽपि प्रमाणाभावः 'नास्ति' इत्यस्यार्थस्यासन्निकृष्टस्य ।" अभावोऽपि प्रमाणाभावः—इति किं प्रमाणलक्षणमिदम्? ओम्—इत्यु-

पञ्चिका

"अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्यासन्निकृष्टस्य" । अभावोऽपि प्रमाणाभाव इति किमिदं प्रमाणलक्षणमिति । पूर्वपक्षवादिनः प्रश्नः । अत्र चायमभिप्रायः—

यदि प्रमाणलक्षणमिदम्, तदनुपपन्नम्, प्रमेयाभावात् । अथ न प्रमाणलक्षणम्, तर्हि षष्ठं प्रमाणमिति प्रसिद्धिबाधः ; तदा ग्रन्थोऽयमसङ्गतो निष्प्रयोजनश्चेति । अत्र[1] चाचार्यदेशीयः प्राह—ओमित्युच्यत इति । प्रमाणलक्षणमिदमङ्गीक्रियत इत्यर्थः । अयं च तत्राभिप्रायः—भूतलादिषु घटादीनामभावस्तावत्प्रतीयते—भूतले घटो नास्ति—इति ; न हीयं प्रतीतिर्भूतलमात्रालम्बना, सत्यपि घटे प्रसङ्गात् । न च निरालम्बना, स्वयमेवालम्बनसाधनत्वात् ; तेनेयमभावमेवालम्बते । न चेयमप्रमाणम्, बाधकाभावान्निश्चयात्मकत्वाच्च । अत एवास्यां प्रमाणात्मिकायां प्रतीतौ प्रतिभासमानत्वात् प्रमेयत्वमपि तस्य युक्तम् । यदि चाभावो न प्रतीयते, भूतलादिषु चरणन्यासादिव्यवहारो न स्यात् ; न ह्यसौ भूतलमात्रपरिच्छेदात्, कण्टकादिमत्यपि भावात् न च केवलभूतलग्रहणात्, अभावस्याप्रमेयत्वे कैवल्यापरिच्छेदात् ; कैवल्यं हि भूतलधर्मः नाभावादन्यत् । न चान्यासंसृष्टस्वरूपमात्रग्रहणात्[2]। सूक्ष्मकण्टकादियोगिनि भूतले स्वरूपमात्रेण गृहीते प्रवृत्तिप्रसङ्गात्, प्रयत्नपूर्विकाया जिज्ञासाया अयोगात् । तथा अभावस्याप्रमेयत्वे शशविषाणादीनामप्यनुमानं

---

१. Omitted. अत्र च. ग. २. अन्यासंदृष्ट—ग.

बृहती

**च्यते । किमनेन प्रमीयते ? उक्तम्—नास्ति—इत्ययमर्थः । किं च तन्नास्ति ? प्रमीयमाणस्य प्रमेयता ; अतश्चाप्रमितेः प्रमाणतेत्यलौकिकमिव प्रतिभाति । लक्षणमपि—" प्रमाणाभावः "—**

पञ्चिका

निर्बाधमासज्येत । तस्मादभावः प्रमेयः । न चेयमभावप्रतीतिः प्रत्यक्षम्, अनिन्द्रियसंप्रयोगजत्वात् । ननु च भावप्रतीतिवदिन्द्रियसंप्रयोगानुविधायिनी कथमनिन्द्रियजा ? उच्यते—भावग्रहणपुरस्सरोऽयमभावावसायः; भावग्रहणं चेन्द्रियेणेति तद्भावभावित्वमन्यथासिद्धम्; किमत्र प्रमाणमिति चेत्, गृहीतभावस्वरूपमात्रस्योपरतेन्द्रियव्यापारस्यापि देशान्तरगतस्य कारणान्तरोपजातजिज्ञासस्याभावप्रतिपत्तिदर्शनात् । न चेदमनुमानमपि, सम्बन्धग्रहणानुपपत्तेः; न ह्यगृहीते सम्बन्धिनि सम्बन्धावसायः सुगमः । न चाभावस्य सम्बन्धिनो ग्रहणमस्ति । तदिदमभावाख्यं प्रमाणान्तरं भाष्येणानेन लक्षितमिति ।

तत्राहाचार्यः—**किमनेन प्रमीयत इति** । न किञ्चिदस्य प्रमेयमिति भावः । **उक्तं नास्तीत्ययमर्थ इति** । "नास्ति—इत्यस्यार्थस्यासन्निकृष्टस्य" इत्येनेन—नास्ति—इत्ययमर्थः प्रतीयत इत्युक्तम् । एतन्निराकरोति—**किं च तन्नास्तीति** । नेदमत्र प्रतीयत इत्यर्थः । इदमत्र[1] नास्तीति शब्दस्य नेदमत्र प्रमीयत इत्यर्थः । ततश्च नास्तीति यदुच्यते, तदस्य प्रमेयमित्येतदा[3]पद्यते; तथा च सति यन्न प्रमीयते, तत्प्रमेयमित्यप्रमीयमाणस्य प्रमेयत्वम् ; यच्च न प्रमीयते, न तस्य प्रमितिरस्ति ; अन्यथा हि प्रमीयमाणतैव स्यात् । **अतश्चाप्रमितेः प्रमाणतेत्यलौकिकमिव प्रतिभाति** । ननु मा भूद्यन्न प्रमीयते, तस्य प्रमेयत्वम् ; किं तु तस्य तु यन्नास्तित्वमभावशब्दवाच्यं भूतलाद्यधिकरणम्, तत् प्रमेयमस्त्विति । नेत्युच्यते ; अप्रमीयमाणत्वमेव हि नास्तित्वम्, नापरम् । योऽपि हि पृथग्भूतमभावमाह, तेनापि भा[4]वस्य प्रमीयमाणताप्यङ्गीकरणीयैव ; तयैव च नास्तित्वव्यवहारोपपत्तेः किमर्थान्तराभ्युपगमेन ? न चाप्रमीयमाणतैव प्रमेयम् ; यस्मात्त-

---

१. गतकारणा- क.
२. वाक्यमेतन्नास्ति. ग.
३. तावत्. ग.
४. भूतलस्यापि. ग.

बृहती

इति प्रमाणं न भवतीत्येव लक्षयति । अस्ति चेयं प्रसिद्धिर्मीमांसकानाम्—षष्ठं किलेदं प्रमाणम्—इति । न चास्य ग्रन्थतो लोकतश्च

पञ्चिका

दर्थासंसृष्टानुभवयुक्तैवात्मनस्तस्यार्थस्याप्रमीयमाणता; सा चावस्था आत्मनः स्वसंविदितैव । अतः प्रमेयं नावशिष्यते । किञ्च योऽप्यभावं प्रमाणमाह, तस्यापि तज्ज्ञानोत्पत्तौ तदसंसृष्टानुभवयोग एव कारणम् ; स च न चक्षुरादिवदज्ञात एव सत्तामात्रेण ज्ञानजनकः; यतः सम्प्रति दृश्यमानेऽपि भूतलादिषु कस्मिंश्चिदर्थे असत्यपि तदनुपलम्भे—नासीदिदं प्रागिह—इति प्रतीतिर्दृश्यते । अतः संप्रति नास्तित्वबुद्धिः प्राक्तनादेव केवलोपलम्भादधुना स्मृतिसमारूढादुपजायत इति बलादभ्युपगमनीयम् । ततश्च केवलोपलम्भलक्षणमेव नास्तित्वमस्तु ; किमर्थान्तरपरिग्रहेण ? या च सा केवलोपलम्भयोगिता आत्मनः सा च क्वचिदर्थे उपलम्भकसामग्रीवैकल्येन, क्वचिच्च साकल्येनैव । तत्र येयमभावव्यवहारं प्रवर्त्तयति, तामेव हि तादृशीं दशामनुसन्दधतः—क्षितितले घटो नास्ति—इति व्यवहारः प्रवर्त्तते । न चात्रातिप्रसङ्गोऽस्ति—संयुक्तेऽप्यभावव्यवहारः स्यात्—इति, संयुक्तोपलम्भात् केवलोपलम्भस्यान्यत्वात् । प्रयत्नपूर्विकापि च जिज्ञासा भूतलादिषु सूक्ष्मकण्टकादिविषयोपलम्भहेतुसाकल्येऽप्येषावस्थेति पर्येषितुमिति कानुपपत्तिः ? अन्यथा हि सूक्ष्मत्वादियमवस्था आत्मन इति शङ्कया निःशङ्को नाभावव्यवहारः स्यात् ; अस्यामेव च प्रतिपक्षभूतायां नास्तित्वात्मिकायां सिद्धायामनुमानं शशादिसम्बन्धिनां विषाणादीनां न प्रवर्तत इत्यभावस्य प्रमेयान्तरं नास्तीति सिद्धम् । **लक्षणमपि च प्रमाणाभाव इति प्रमाणं न भवतीत्येव लक्षयति** । प्रमाणाभावोऽभावः—इत्युक्ते प्रमाणं न भवतीति प्रतीयते; न हि—प्रमाणं प्रमाणाभावः—इति शक्यते वक्तुम् । तस्मान्नेदं प्रमाणलक्षणम् । अधुना पूर्वपक्षी ब्रूते—**अस्ति चेयं प्रसिद्धिः मीमांसकानां षष्ठं किलेदं प्रमाणमिति । न चास्य ग्रन्थतो**

१. अर्थोपलम्भक. ग. २. कादिषु. ग.

बृहती

प्रमाणतावसीयते। अतो न विघ्नः प्रसिद्धेः किं बीजमिति। किमत्र न ज्ञायते? ग्रन्थतस्तावत् प्रमाणाभाव एवावसीयते। 'नास्ति' इत्यप्युक्ते प्रमेयस्याभावं लौकिकाः प्रतिपद्यन्ते। किं तर्ह्यनेन लक्षितेन? प्रमाणावगत्यर्थोऽयमारम्भः, तदनुसारी ह्यर्थनिश्चयः कथं स्यादिति। अत एवेदमुच्यते, यस्मात् प्रमाणावगत्यर्थोऽयमारम्भः। किमनेन पूर्वोक्तानां प्रमाणानां स्वरूपमवसीयते? यत्पूर्वोक्तैरेव स्वलक्षणैर्नावसीयते। सर्वस्वलक्षणाभिधानवाक्यशेषोऽयं ग्रन्थः; न ह्युत्पादमात्राज्ज्ञानस्यार्थे तस्मिन् प्रमाणस्य प्रमाणतावसीयते। अतः स्वलक्षणमात्राभिधानात् निश्चय-

पञ्चिका

जमिति। अनेन प्रसिद्धिविरोधं दर्शयति। सिद्धान्ती त्वाह—किमत्र न ज्ञायत इति। निर्मूलापि प्रसिद्धिरस्तीति भावः। ग्रन्थतस्तावत्प्रमाणाभाव एवावसीयते; नास्तीत्यप्युक्ते प्रमेयस्याभावं लौकिकाः प्रतिपद्यन्ते। [1]एतच्च प्राग्व्याख्यातत्वान्न पुनर्व्याख्यायते। किं तर्ह्यनेन लक्षितेनेति। लक्षणग्रन्थविरोधं पूर्वपक्षवाद्याह। यस्मात्प्रमाणावगत्यर्थोऽयमारम्भः तदनुसारी प्रमाणानुसारी अर्थनिर्णयः[2] कथं स्यादित्येवमर्थं प्रमाणलक्षणमुच्यते। यच्च प्रमाणमेव न भवति, किं तेन लक्षितेनेति। अत्रोत्तरम्—अत एवेदमुच्यते, यस्मात्प्रमाणावगत्यर्थोऽयमारम्भः। प्रमाणावगमार्थमेवेदं लक्षणमित्यर्थः। किमनेन पूर्वोक्तानां प्रमाणानां स्वरूपमवसीयते—इति प्रश्नः। यत्पूर्वोक्तैः स्वलक्षणैः नावसीयते—इत्युत्तरम्। [3]यत्स्वरूपं पूर्वोक्तैर्लक्षणैर्नावसीयते, तदनेनावसीयते इत्यर्थः। कथमित्याह—सर्वस्वलक्षणाभिधानवाक्यशेषोऽयं ग्रन्थः। किं पुनरनेन स्वलक्षणाभिधानवाक्यशेषभूतेन ग्रन्थेन क्रियत इति तत्राह—[4]न ह्युत्पादमात्राज्ज्ञानस्यार्थे तस्मिन् प्रमाणस्य प्रमाणतावसीयते। न ह्युत्पन्नं ज्ञानमित्येतावतार्थे [5]स्वविषये ज्ञानस्य प्रमाणभूतस्य प्रमाणतावसीयते; [6]यतस्तत्संप्रयोगजत्वादिके प्रतीतेऽपि

१. ततश्च. ग.
२. निश्चयः ग.
३. यस्य रूपं ग.
४. नह्युत्पादनमात्रादित्यादि. ग.
५. अर्थेऽस्य विषये. ग.
६. यतः सम्प्रयोग. ग.

बृहती

**स्वरूपेण प्रमाणभावस्य समधिगम्यमानत्वात् सर्वप्रमाणानाम्, तस्मात् कार्यप्रत्यस्तमयात् 'नास्ति' इति, अनेन पूर्वोक्तस्यैव लक्षणस्य साधुतोच्यते।**

पञ्चिका

न प्रमाणतावसीयते तस्मात्। कार्यसमधिगम्यत्वात् सर्वप्रमाणानाम्[1]; प्रमाणं हि नाम करणकारकम्; सर्वं कारकं कार्यसमधिगम्यम्; कार्यं च प्रमाणस्य[2] अर्थनिश्चयलक्षणम्; निश्चयश्च 'अयमेव' इति सावधारणोऽनुभवः; अवधारणं चार्थान्तराद्व्यवच्छेदः। तदुक्तं मतान्तरे—

"अयमेवेति यो ह्यषे भावे भवति निर्णयः।
नैष[3] वस्त्वन्तराभावसंवित्त्यनुगमादृते॥" इति।

तत्र यदानेन ग्रन्थेन नास्तीत्यस्यासन्निकृष्टस्याप्रमीयमाणस्य यः प्रमाणाभावः, सोऽभावः—इत्यभावलक्षणं कृतम्। श्लोकश्चात्र भवति—

"यन्नास्ति भूतलादौ
घटादि तस्याप्रमीयमाणस्य।
योऽसौ प्रमाणविरहः
प्रमाणविषयेऽपि सोऽभावः"॥ इति—

तदा पूर्वोक्तेनैव लक्षणेन निश्चयपर्यन्तमपि प्रमाणस्वरूपं लक्ष्यत इति ज्ञायते; यस्मादर्थान्तरव्यवच्छेदोऽप्युपलम्भकसामग्रीसाकल्ये केवलोपलम्भलक्षणः[4] तत्प्रमाणानुत्पादात्मक एव, तस्मात्—कार्यप्रत्यस्तमयात् प्रमाणकार्यसंविदनुदयात्केवलोपलम्भादिति यावत्-नास्तीति व्यवहारो यस्मात्तस्मात्, अनेन पूर्वोक्तस्यैव प्रमाणलक्षणस्य[5] साधुतोच्यते। यदि हि यावदन्य एवाभावो नाम भावात्, तदा पूर्वोक्तं प्रमाणलक्षणं सर्वमेवासाधु स्यात्; तन्मात्रेणाभावानवगमात् तत्पुरस्सरवस्तुनिश्चयाभावात् अनिश्चयफलस्य प्रमाणत्वानुपपत्तेः अप्रमाणं च प्रमाणमिति लक्षणमात्रं बालजल्पितमेव

---

१. सर्वकारकाणाम्. ग.
२. प्रमाणनिश्चयार्थस्य अर्थनिश्चयार्थलक्षणम्. ग.
३. न स. ग.
४. केवलं लक्षणं तत्. ग.
५. Omitted. प्रमाण. ग.

भाष्यम्

तस्मात् प्रसिद्धत्वात् न परीक्षितव्यं निमित्तम् ॥

बृहती

केयं तर्हि प्रसिद्धिः ? प्रसिद्धिर्वटयक्षप्रसिद्धिवत् । यदि पुनर्व्यवहारान्यत्वात् कारणान्यत्वं मन्यन्ते किं कुर्मः ? न हि व्यवहारान्यत्वात् प्रमाणान्यत्वसिद्धिः । अतः तल्लक्षणमेवेदम् । इदमेव च तल्लक्षणम् । तस्मात् प्रसिद्धत्वादपरीक्ष्यं निमित्तम् ॥

पञ्चिका

स्यात् । केयं तर्हि प्रसिद्धिरिति । पुनः प्रसिद्धिप्रश्न उत्तरदानाय । प्रसिद्धिर्वटयक्षप्रसिद्धिवदिति । व्यामोहपूर्विकेयं प्रसिद्धिरिति यावत् । यदि तावद्व्यवहारान्यत्वात् कारणान्यत्वं मन्यन्ते, तदा वयं किं कुर्मः ? [1]भावव्यवहारो विनापि दृश्यानुपलम्भानुसन्धानेन भवति ; अभावव्यवहारस्तु दृश्येऽपि तस्मिन्नर्थे केवलोपलम्भानुसन्धानादित्येतस्मादेव व्यवहारान्यत्वात् यदि केचिन्मीमांसकाः प्रमाणान्यत्वं मन्यन्ते, तदा वयं किं कुर्मः ? न हि व्यामुग्धानधिकुरुते पुरुषप्रयत्न इति तेषामुपेक्षा कार्या । ननु व्यवहारान्यत्वात् परमार्थ एव कस्मात्प्रमाणभेदो न भवति, इत्यत्राह—न हि व्यवहारान्यत्वात्प्रमाणान्यत्वसिद्धिः । [2]प्रमेयान्यत्वेनैव हि प्रमाणान्यत्वं भवति ; न हि व्यवहारान्यत्वमात्रेण प्रमेयान्यत्वमिति न प्रमाणान्तरमिदम् । उपसंहरति—अतस्तल्लक्षणमेवेदम् । तेषां प्रमाणानामेवेदं लक्षणम्, [3]न स्वतन्त्रप्रमाणान्तरलक्षणम् । इदमेव च तल्लक्षणम् तस्याभावस्येदमेव लक्षणम् । न पुनरन्यद्वस्तुधर्मोऽभावो नामेत्यादिकम् । यथा चान्यन्न लक्षणम्, तथोक्तमिति । तस्मात् प्रसिद्धत्वादपरीक्ष्यं निमित्तमिति । मूलप्रस्ताव उपसंहृतः ॥

---

१. Omitted. भाव–कुर्मः. क.
२. प्रमाणान्यत्वेन. ग.
३. Omitted. न–मेव लक्षणम्. क.

भाष्यम्

ननु प्रत्यक्षादीन्यन्यानि भवन्तु नाम प्रमाणानि, शब्दस्तु न प्रमाणम्। कुतः? अनिमित्तं विद्यमानोपलम्भनत्वात्। अनिमित्तम् अप्रमाणं शब्दः। यो ह्युपलम्भनविषयो नोपलभ्यते, स नास्ति यथा शशस्य विषाणम्। उपलम्भनानि चेन्द्रियाणि पश्वादीनाम्, न च पशुकामेष्ट्यनन्तरं

बृहती

"ननु प्रत्यक्षादीन्यन्यानि भवन्तु नाम प्रमाणानि, शब्दस्तु न प्रमाणम्। कुतः? अनिमित्तम्, विद्यमानोपलम्भनत्वात्। अनिमित्तम् अप्रमाणं शब्दः; यो ह्युपलम्भनविषयो नोपलभ्यते, स नास्ति यथा शशस्य विषाणम्। उपलम्भनानि चेन्द्रियाणि पश्वादीनाम्। न च पशुकामेष्ट्यनन्तरं पशव उपलभ्यन्ते। अतो नेष्टिः पशुफला।" प्रत्यक्षादीन्यन्यानि भवन्तु प्रमाणानि, शब्दस्तु न प्रमाणम्—इति कोऽभिप्रायः? अयमभिप्रायः—यदुक्तम् अनपेक्षत्वादिति प्रमाणा-

पञ्चिका

प्रत्यक्षादीन्यन्यानि भवन्तु नाम[1] प्रमाणानि; शब्दस्तु न प्रमाणम्। कुतः? अनिमित्तं विद्यमानोपलम्भनत्वात्; अनिमित्तमप्रमाणं शब्दः; यो ह्युपलम्भविषयो नोपलभ्यते, स नास्ति यथा शशस्य विषाणम्। उपलम्भनानि चेन्द्रियाणि पश्वादीनाम्; न च पशुकामेष्ट्यनन्तरं पशव उपलभ्यन्ते। अतो नेष्टिः पशुफला। प्रत्यक्षादीन्यन्यानि भवन्तु प्रमाणानि, शब्दस्तु न प्रमाणमिति कोऽभिप्रायः? अस्य प्रश्नस्यायमर्थः—शब्दादर्थविषयं विज्ञानं जायमानं कथमप्रमाणमिति। अयमभिप्रायः—यदुक्तमनपेक्षत्वादिति प्रमाणान्त-

---

१. Omitted. नाम. ग.

बृहती

न्तरानवगम्यमर्थमवगमयति इति, एतावन्मृषा । कुतः ? "भविष्यंश्चैषोऽर्थः" इति भाव्यतया प्रामाण्यमुक्तम्, तदत्र न संभवति । कथं पुनरसम्भवः ? किमनियोगकं वाक्यमस्तीति ? किमत्र नियोगः करिष्यति ? प्रमाणान्तरावगम्येऽपि तस्य दर्शनात् स्मृत्यादौ । तस्माद्विनियोगावगम्यमेवार्थमालोच्य नियोगस्य विषयो वक्तव्यः । स चायं विनियोगो विद्यमानोपलम्भनविषय एवोपलभ्यते—"चित्रया यजेत पशुकामः" इत्यादौ ।

पञ्चिका

रानवगम्यमर्थमवगमयतीत्येतावन्मृषा[1] । अनपेक्षत्वादिति सूत्रावयवेन प्रमाणान्तरानवगम्यमर्थं शब्दोऽवगमयति प्रमापयतीति[2] यदुक्तं तन्मृषा । कुतः ? यस्मात् "भविष्यंश्चैषोऽर्थः" इति भाष्येण भाव्यतया कार्यतया शब्दार्थस्य कार्यस्य चानन्यप्रमाणावगम्यत्वात् स्वातन्त्र्येण प्रामाण्यमुक्तम्, तदत्र चित्रादौ न संभवति । कथं पुनरसंभवः ? किमनियोगकम् नियोगाभिधायकतया[3] नियुज्यतेऽनेनेति व्युत्पत्त्या नियोगशब्दाभिधेयलिङादिरहितं वाक्यमस्ति, येनासंभवः ? यावता सर्वमेव सनियोगकं वाक्यम् । तथा च सति कार्याभिधायकत्वात् संभवत्येव प्रामाण्यम् । अत्रोत्तरम्[4] —किमत्र नियोगो लिङादिशब्दः करिष्यति ? न स्वातन्त्र्येणार्थमवगमयतीति यावत् । प्रमाणान्तरावगम्येऽपि परतन्त्रेऽप्यर्थे[5] तस्य लिङादेर्दर्शनात् स्मृत्यादौ । एतदुक्तं भवति—लिङादेः परतन्त्रार्थत्वमविवादम्[6] ; स्वातन्त्र्यं च न क्वचिदपि दृष्टम् ; दृष्टानुसारिणी च कल्पना न्याय्या । तस्माद्विनियोगावगम्यमर्थमेव परस्परान्विताभिधायिपदजातगम्यमेव, चित्रायागस्य पशूनां च योऽयं साध्यसाधनसम्बन्धः प्रतीयते तमालोच्य, नियोगस्य लिङादेः विषयो वक्तव्यः । एतदुक्तं भवति--फलसाधनतानिबन्धनामेव कार्यतां यागस्य लिङादिर्वदतीति । एवं खल्वभ्युपगम्यमाने शब्दस्वातन्त्र्यमदृष्टं न कल्पितं भविष्यति, अस्वातन्त्र्यं च दृष्टं न परित्यक्तं भविष्यति । किञ्च स चायम् विनियोगः

---

१. इत्येतन्मृषा. क.
२. Omitted. प्रमापयति. ग.
३. नियोगानभिधायकं. ग.
४. अथोत्तरम्. क.
५. पारतन्त्र्ये. ग.
६. Added, तावत्. ग.

बृहती

कात्र विद्यमानोपलम्भनता? क्रियानन्तरफलभाविता। दृष्टार्थत्वाच्च वृष्ट्यादेः अनन्तरफलभावितया प्रमाणान्तरावगम्यतैव वस्तुतो वक्तुं शक्यते। संभवति च प्रमाणान्तरविषयत्वे को हि नामादृष्टं लोके स्वातन्त्र्यं शब्दस्य कल्पयितुं क्षमः? तस्मान्नियोगः प्रैषाद्यर्थ एव इति प्रतिपत्तव्यम्। तदिदम् "कुतः" इत्येतस्य प्रश्नस्य "विद्यमानोपलम्भनत्वात्" इत्युत्तरम्। नन्वेवं ग्रन्थे व्याख्यायमाने "पशवो नोपलभ्यन्ते" इत्यादिरनर्थको ग्रन्थः। उपलभ्यन्तां मा वा पशवः; सर्वथा प्रमाणान्तरसापेक्षं शाब्दमित्येतावदत्र

पञ्चिका

अन्वयाभिधायिपदजातात्मको विद्यमानोपलम्भनविषय एव विद्यमानमुपलम्भनमुपलब्धिकारणं प्रमाणान्तरं यस्य यागेन सह पशूनां साध्यसाधनभावस्य स विद्यमानोपलम्भनो विषयो यस्य स विद्यमानोपलम्भनविषय एवोपलभ्यते "चित्रया यजेत पशुकामः" इत्यादि।[1] फलसाधनतानिबन्धना कार्यतैव लिङादिभिरभिधीयते इति। **कात्र विद्यमानोपलम्भनता? क्रियानन्तरफलभाविता** क्रियानन्तरं फलस्य भवनशीलता। **दृष्टार्थत्वाच्च वृष्ट्यादेः**। शुष्यत्सु व्रीह्यादिषु वृष्ट्यादि काम्यमानमनन्तरफलभावितयैवाव[2]गम्यत इत्यनयाऽपि युक्त्यानन्तरभाविता युक्ता। शक्यते चानन्तरफलभावितया कर्मणः प्रमाणान्तरगम्यतास्य साध्यसाधनभावात्मकवस्तुनो वक्तुमुक्तेन न्यायेन। संभवति च प्रमाणान्तरविषयत्वे फलनिबन्धनयागकर्तव्यताविषयत्वे, को हि नामादृष्टं स्वातन्त्र्यं कल्पयितुं लोके शब्दस्य क्षमः? तस्मान्नियोगः प्रैषाद्यर्थतुल्य एव; यथा प्रैषादिषु लौकिकेषु वैदिकेषु च नियोगः, स च प्रमाणान्तरपूर्वकः, तथा विध्युद्देशगतोऽपीति प्रतिपत्तव्यम्। यदिदमुक्तस्माभिः तदिदम् 'कुतः' इत्यस्य प्रश्नस्य 'विद्यमानोपलम्भनत्वात्' इत्युत्तरं दत्तं भाष्ये। **नन्वेवं ग्रन्थे व्याख्यायमाने "पशवो नोपलभ्यन्ते" इत्यादिरनर्थको ग्रन्थः।** उपलभ्यन्तां पशवो मा वोपलभ्यन्ताम्, सर्वथा प्रमाणान्तरसापेक्षं शाब्दमित्येतावत् साध्यम्[3]; तच्च सिद्धमेव; किमर्थमतः[4] परं फलानुपलब्धिरूपमुपन्यस्यते?

---

१. यतश्च फल—ग.
२. काम्यते ग.
३. अत्र साध्यम्. ग.
४. अपरं. ग.

बृहती

साध्यम् । सत्यमेतावत् साध्यम्; केन चोक्तमन्यत् साध्यमिति ? अनुपलब्ध्युपन्यासो न घटते इत्युक्तम् । न न घटते, घटत एव ; प्रमाणान्तरपरीक्षया प्रामाण्यं वक्तव्यम्, न स्वतः—इत्येवंपरो ग्रन्थः । तच्चात्र प्रमाणान्तरं दृष्टम् । कथं पुनरत्र दृष्टावगतिः ? क्रियानन्तरभावित्वात्फलस्य । कथं तर्हि कृष्यादेः ? किं कृष्यादेर्नानन्तरं फलमुपलभ्यते ? किं क्रियाफलं

पञ्चिका

परिहारमाह—सत्यमेतावत्साध्यम् ; केन चोक्तमन्यत् साध्यमिति ? येन दूषणं स्यात् । अत्रापर[1] आह—तर्ह्यनुपलब्ध्युपन्यासो न घटते अनर्थकत्वादित्युक्तम् । समाधिरुच्यते—न न घटते, घटत एव । यस्मात् प्रमाणान्तरसद्भावपरीक्षया प्रामाण्यं वक्तव्यम्, न स्वतः--इत्येवंपरो ग्रन्थः । अस्यार्थः—यदेतत्प्रमाणान्तरानुपलम्भेन प्रामाण्याभिधानम् तत् प्रमाणान्तरसापेक्षत्वप्रतिपादनपरम् ; निरपेक्षस्य हि प्रमाणान्तरानुपलब्धेऽपि प्रामाण्यमुपपद्यत एव स्वातन्त्र्येण; सापेक्षस्य च प्रमाणान्तरायत्तं प्रामाण्यम् । तच्च प्रमाणान्तरमेवं स्यात्, यदि क्रियानन्तरं फलं स्यात् ; तदभावे प्रमाणान्तरेणायमर्थः प्रत्येतुं न शक्यत इति तदपेक्षस्याप्रामाण्यं युक्तमेव । तस्मात्प्रमाणान्तरसापेक्षत्वप्रदर्शनार्थत्वेऽस्य ग्रन्थस्य न किञ्चिदनुपपन्नम् । ननु प्रमाणान्तरसापेक्षत्वेऽपि किमिति प्रत्यक्षाद्यभावेनाप्रामाण्यम्, तत्राह—तच्चात्र प्रमाणान्तरं दृष्टम् । दृष्टशब्देन चात्र प्रत्यक्षादिकमुच्यते । कथं पुनरत्र दृष्टावगतिः ? दृष्टमेवात्र प्रमाणमिति कथमवगम्यत इत्यर्थः । क्रियानन्तरभावित्वात्फलस्य । यस्माद्यत्फलम्, तत्[2] क्रियानन्तरमेव भवति; क्रियानन्तरभाविनि च साधनत्वं दृष्टप्रमाणावगम्यमेव । कथं तर्हि कृष्यादेः ? यदि सर्वं फलं क्रियानन्तरम्, तर्हि कृष्यादौ कथमनन्तरं फलं कालान्तरे साध्यमधिगम्यते ? अत्रोत्तरम्—किं कृष्यादेर्नानन्तरं फलमुपलभ्यते ? येनैवं वदसि । एकग्रन्थेनाह—किं क्रियाफलं नावगम्यते, उत प्रयो-

---

१. अपर आह—तदन्तरफलानुप. ग. २. Omitted. तत्—उत. ग.

बृहती

नावगम्यते, उत प्रयोजनफलम् ? पाटनं तावत् भूम्यवयवानां क्रियाफलमवगम्यते, व्रीह्युत्पत्तिस्तु प्रयोजनफलम्। न च प्रयोजनानवगमाददृष्टतोच्यते। अत्र च प्रयोजनं फलं च पशव एवावगम्यन्ते, फलान्तरानवगमात्। यच्च किञ्चित् हविर्विकाराद्यवगम्यते, न तत्पाटनादिवत् व्रीह्याद्युत्पत्तेः पशुकारणतया शक्यते वक्तुम्, अदर्शनात्। तस्मात् प्रमाणान्तरपरीक्षैवात्र धर्मजिज्ञासुभिः कर्तव्या, न पुनरध्ययनाद्धर्मावगतिः। कथं पुनः स्वर्गकामादिषु

पञ्चिका

जनफलमिति। पुनरप्येकग्रन्थेनाह—पाटनं तावद्भूम्यवयवानां क्रियाफलमवगम्यत इति। कृष्यादेरप्यनन्तरफलता। व्रीह्युत्पत्तिस्तु प्रयोजनम्, तदर्थत्वात्पुरुषप्रवृत्तेः। तथा च प्रयोजनलक्षणमक्षपादोक्तम्—"यदधिकृत्य कृतिः[1] प्रवर्तते, तत् प्रयोजनम्" इति। किञ्च, न च प्रयोजनादर्शनाददृष्टतोच्यते। यदि हि प्रयोजनस्यानन्तरादर्शनादस्माभिरदृष्टता दृष्टप्रमाणशून्यता चित्रादावुच्येत, तदा सर्वत्र प्रयोजनं क्रियानन्तरमेव ब्रुवाणा वयमुपालभ्येमहि--कथं तर्हि कृष्यादेः ?--इति ; यावता वयं फलादर्शनादेव ब्रूमहे ; तत्र चाव्यभिचार इति। नन्वत्रापि सस्याधिगमवत्कालान्तरेऽपि पशवो भवेयुः, तत्राह—अत्र हि प्रयोजनं फलं च पशव एवावगम्यन्ते, फलान्तरादर्शनात्। [2]नन्वस्ति हविर्विकारादिः, तत्राह—यच्च किञ्चिद्धविर्विकाराद्यवगम्यते न तत्पाटनादिवत् व्रीह्याद्युत्पत्तेः पशुकारणतया शक्यते वक्तुमदर्शनात्। अस्यार्थः—यद्यप्येवं दृश्यते, तथापि पशवोऽप्यनन्तरमेव भवन्तीति वक्तव्यम् ; कालान्तरे तदुत्पत्तेरयोगात्, क्रियाया विनष्टत्वात्, हविर्विकारस्य च तदुत्पत्त्यननुगुणत्वात् ; यथा पाटनं सस्योत्पत्तौ कारणम्, तत एव तदुत्पत्तिः; तस्मादनन्तरभावित्वात्फलस्य पशूनां च फलत्वात् दृष्टमत्र प्रमाणान्तरम् ; तेन तदभावेऽप्रामाण्यमिति सिद्धम्। साधितमर्थमुपसंहरति—तस्मात् प्रमाणान्तरपरीक्षैवात्र धर्मजिज्ञासुभिः कर्तव्या, न पुनरध्ययनाद्धर्मावगतिः। कथं पुनः स्वर्गकामादिषु विद्यमानोपलम्भनता ? स्वर्गं प्रति

---

१. "यमर्थमाधिकृत्य प्रवर्तते तत् प्रयोजनम्" इति मुद्रितन्यायसूत्रपाठः.

२. Omitted. नन्वस्ति—शक्यते. ग.

भाष्यम्

पशव उपलभ्यन्ते । अतो नेष्टिः पशुफला । कर्मकाले च फलेन भवितव्यम् , यत्कालं हि मर्दनम्, तत्कालं मर्दनसुखम् । 'कालान्तरे फलं दास्यति' इति चेत् , न ; 'न कालान्तरे फलमिष्टेः'—इत्यवगच्छामः । कुतः ? यदा तावदसौ विद्यमाना आसीत् , तदा फलं न दत्तवती ; यदा फलमुत्पद्यते, तदासौ नास्ति ; असती कथं दास्यति ? अपि च, तत्काल एव फलं श्रूयते—यागः करणमिति वाक्यादवगम्यते ; करणं चेदुत्पन्नं कार्येण भवितव्यमिति । प्रत्यक्षं च फलकारणमन्यत् उपलभामहे । न च दृष्टे कारणे सत्यदृष्टं कल्पयितुं शक्यते, प्रमाणाभावात् ।

बृहती

विद्यमानोपलम्भनता ? नियोगस्य तावन्नियोगत्वं पश्चादावपहृतम् ; एकश्चायं नियोगोऽनुबन्धभेदाद्भिद्यत इति स्थितिः[1] । तस्मात् सर्वत्र सापेक्ष इत्युक्तं

पञ्चिका

साध्यसाधनभावस्यादृष्टप्रमाणसमधिगम्यत्वात् ; ततश्च स्वर्गकामादिचोदनानां स्वातन्त्र्येण प्रामाण्यं स्यादिति । अत्रोत्तरम्—नियोगस्य तावन्नियोगत्वं पश्चादावपहृतम् ; एकश्चायं नियोगोऽनुबन्धभेदात् भिद्यत इति स्थितिः ; तस्मात्सर्वत्र सापेक्ष इत्युक्तं भवति । अस्यार्थः—नियोगस्य नियोजकत्वं[2] तावन्नास्ति ; प्रमाणान्तरसमधिगम्या फलसाधनतैव कर्मणां नियोक्त्री, तदनुवादकास्तु लिङादय इति यदा पश्चादावुक्तम् तदा स्वर्गादावप्येकत्वान्नियोगस्याधिकार-

---

१. स्थितम्. ग.  २. जनकत्वं नास्ति ; तेन. ग.

भाष्यम्

एवं दृष्टापचारस्य वेदस्य स्वर्गाद्यपि फलं न भवतीति मन्यामहे । दृष्टविरुद्धञ्च किञ्चिद्वैदिकं वचनम् । पात्रचयनं विधायाह---"स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति"---इति प्रत्यक्षं शरीरकं व्यपदिशति, न च तत् स्वर्गं लोकं यातीति; प्रत्यक्षं हि तत् दह्यते। न च "एष याति" इति विधिशब्दः । एवंजातीयकं च प्रमाणविरुद्धं वचनमप्रमाणम् ; अम्बुनि मज्जन्त्यलाबूनि, ग्रावाणः प्लवन्ते--इति यथा । तत्सामान्यादग्निहोत्रादिचोदनास्वप्यनाश्वासः । तस्मान्न चोदनालक्षणोऽर्थो धर्मः ॥

बृहती

भवति। अतो यत्र प्रमाणान्तरमस्ति, भवतु तत्र तथात्वम् ; यत्र नास्ति, तत्र मा भूत् । तस्मात् सुष्ठूक्तम्—"शब्दस्तु न प्रमाणम्"—इति। "दृष्टविरुद्धं च

पञ्चिका

विषयानुबन्धमात्रेण[1] भिन्नस्य सर्वत्र नियोजकत्वं नास्ति; तेन तत्रापि सापेक्षत्वात्सर्वत्र सापेक्षः शब्द इत्युक्तं भवति । अतो यत्र प्रमाणान्तरमस्ति, भवतु तत्र तथात्वम् । न पुनः प्रामाण्यम् , अनुवादकत्वात् । यत्र नास्ति प्रमाणान्तरम् , तत्र तथात्वमपि मा भूत् ; दूरत एव प्रामाण्यम्। तस्मात्सुष्ठूक्तम्[2]—"शब्दस्तु न प्रमाणम्" इति । सर्वथा प्रमाणत्वाभावात् । अत्र मूलयुक्तिः पारतन्त्र्यदर्शनात् सापेक्षत्वमिति । विद्यमानोपलम्भनता तु सापेक्षत्व एवाभ्युच्चययुक्तिरिति । स्वर्गकामाधिकारेऽपि सापेक्षत्वादप्रामाण्यमिति स्थितम् ।

---

१. मात्रे भिन्नस्य. ग. २. तस्मात् सूक्तम् . ग.

भाष्यम्

'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानम्' १.१.५.। तुशब्दः पक्षं व्यावर्तयाति । अपौरुषेयः शब्दस्यार्थेन संबन्धः । तस्य अग्निहोत्रादिलक्षणस्यार्थस्य ज्ञानं प्रत्यक्षादिभिरनवगम्यमानस्य । तथा च चोदनालक्षणः सम्यक्संप्रत्यय इति । पौरुषेये हि शब्दे यः प्रत्ययः, तस्य मिथ्याभाव आशङ्क्येत ; परप्रत्ययो हि तदा स्यात् । अथ शब्दे ब्रुवति कथं मिथ्येति ? न हि तदानीमन्यतः पुरुषादवगतिमिच्छामः । ब्रवीतीत्युच्यते—बोधयति बुद्ध्यमानस्य निमित्तं भवति इति ; शब्दे च निमित्ते स्वयं बुध्यते ; कथं विप्रलब्धं ब्रूयात्—'नैतदेवम्'—इति ? न चास्य चोदना 'स्याद्वा न वा'—इति सांशयिकं प्रत्ययमुत्पादयति । नच 'मिथ्यैतत्'—इति

बृहती

किञ्चिद्वैदिकं वचनं पात्रचयनं विधाय आह—"स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्ग लोकं याति" इति प्रत्यक्षं शरीरं व्यपदिशति । न च तत् स्वर्ग लोकं याति; प्रत्यक्षं हि तद्दह्यते । न च 'एष याति' इति विधिशब्दः एवंजातीयकं। च प्रमाणविरुद्धं वचनमप्रमाणम् ।" कथं पुनरिदं प्रमाणविरुद्धम् ? अर्थवादोऽयम् ; अर्थवादेषु च सर्वे प्रमाणविरोधा गुणवादेन व्याख्याताः । अथायमभिप्रायः—नाद्याप्यर्थवादा

पञ्चिका

दृष्टविरुद्धं च किञ्चिद्वैदिकमित्यादिना एवंजातीयकं च प्रमाणविरुद्धं वचनमप्रमाणमित्यन्तेन भाष्यं पठित्वाक्षिपति--कथं पुनरिदं प्रमाणविरुद्धम् ? अर्थवादोऽयम् ;अर्थवादेषु च सर्वे प्रमाणविरोधा गुणवादेन व्याख्याताः "गुणवादस्तु',

भाष्यम्

कालान्तरे देशान्तरेऽवस्थान्तरे पुरुषान्तरे वा पुनरव्यपदेश्यप्रत्ययो भवति । योऽप्यस्य प्रत्ययविपर्यासं दृष्ट्वा अत्रापि विपर्येसिष्यति—इत्यानुमानिकः प्रत्यय उत्पद्यते, सोऽप्यनेन प्रत्यक्षेण प्रत्ययेन विरुध्यमानो बाध्यते । तस्माच्चोदनालक्षण एव धर्मः ॥

बृहती

व्याख्यायन्ते—इति, बालिशभाषितमेतत् ; न ह्युक्तस्योच्यमानस्य वा स्थितस्याक्षेपो युक्तः । अन्यत्र विशेषाभिधानात् । उक्तोच्यमानताविशेषे हि विवक्ष्यमाणे सर्वमनवस्थितं स्यात् । तस्मात् स्थितत्वात् स्थितत्वमेव वक्तव्यावक्तव्ययोः कारणम् । किञ्च, अत्रोपन्यस्तस्य परिहृतस्य तत्र पुनरु-

पञ्चिका

इति सूत्रेण । अथायमभिप्रायः —अर्थवादा नाद्यापि गुणवादाश्रयणेन व्याख्याताः इति, बालिशभाषितमेतत् ; न ह्युक्तस्यार्थस्य पूर्वम् उच्यमानस्य वा संप्रति—इत्येतच्चोपलक्षणं वक्ष्यमाणस्य वा—स्थित[1]स्य न्यायोपपन्नस्याक्षेपो युक्तः, तस्य च स्थितत्वे गुणवादोऽपि स्थित इति भाष्यमनुपपन्नम् । अन्यत्र विशेषाभिधानात् । विशेषाभिधाने तु विशेषाभिधानार्थमेवाक्षेपो युक्तः; इह[2] तन्नास्ति । उक्तोच्यमानताविशेषे हि विवक्ष्यमाणे सर्वमनवस्थितं स्यात् । सर्वस्य सर्वत्र वक्ष्यमाणस्योपयोगिनोऽभिधानापत्तेः । तस्मात्स्थितत्वात्स्थितत्वमेव वक्तव्यावक्तव्ययोः कारणम् । किञ्च अत्रो[3]पन्यस्तस्य प्रमाणविरोधस्य, गुणवादाश्रयणेन च परिहृतस्य, पुनस्तत्रार्थवादाधिकरणे "शास्त्रदृष्टविरोधात्[4]" इत्युपन्यासो न घटते । समाधिः—

---

१. -स्यान्यथोपपन्नस्य. ग. ३. Omitted अत्र. ग.
२. Omitted इह तत्. ग. ४. विरोधाद्युपन्यासः. ग.

बृहती

पन्यासो न घटते । उच्यते—स्थित एवार्थवादानां गुणवादेन व्याख्याने इदं वचनमाक्षिप्यते—अत्र हि तदुक्तो न भवति ; गुणवादो हि प्रमाणान्तर-प्रतिपत्तिबलेनोपजायते । अत्र च प्रमाणान्तरप्रतिपत्तिः शरीरे एव, न शरीरव्यतिरिक्तं किञ्चिदुपलभामहे ; तच्च 'एषः' इति व्यपदिष्टम् 'याति' इत्यनेन विरुद्धम्, दह्यमानत्वाच्छरीरस्य । तस्माद्विधितोऽर्थवादतश्चाय-थार्थतैवावसीयते । किञ्च, विधौ हि सति नियोगतोऽपि तावत् स्वातन्त्र्य-शङ्का जायते ; अर्थवादे सापि नास्ति इति प्रकटयति—"न च

पञ्चिका

उच्यते, स्थिते एवार्थवादानां गुणवादेन व्याख्याने इदं वचनमाक्षिप्यते । यस्मादत्र तदुक्ता, अर्थवादव्याख्यानोक्ता गुणवादतैव न भवति । यज्ञायुधीशब्देन लक्षणयात्मैवोच्यते ; तस्य चाधिकाराभिप्रायं स्वर्गयानमिति येयं गुणवादता परत्र परशब्दप्रवृत्त्यभिप्रायेण[1] लक्षणात्मिका, सा न संभवति । कस्मात् ? गुणवा[2]-दो हि प्रमाणान्तरप्रतिपत्तिबलेनोपजायते । यथा गङ्गायां घोष इति । अत्र च प्रमाणान्तरप्रतिपत्तिः शरीर एव । यस्मान्न शरीरव्यतिरिक्तं किञ्चिदस्ति, तस्यानुपलब्धेः । तच्छरीरं[3] प्रत्यक्षत्वात् 'एषः' इति व्यपदिष्टम् 'याति' इत्यनेन विरुद्धम्, दह्यमानत्वाच्छरीरस्य । तस्माद्विधितो विध्यालोचनया, अर्थवादतश्च अर्थवादालोचनया वा अयथार्थत्वमेवावसीयत इति । अनेनोदाहरणान्तरप्रयो-जनमपि दर्शितम् । किञ्च, विधौ हि सति नियोगतोऽपि तावत् स्वातन्त्र्यशङ्का जायते; अर्थवादे सापि नास्तीति प्रकटयति "न च 'एष याति' इति विधि-शब्दः" इति । अस्यार्थः — विधिपक्षे[4] नियोगस्य प्रमाणान्तराविषयत्वात् स्वात-न्त्र्यशङ्का स्यादपि, अर्थवादे तु सिद्धार्थत्वात् सिद्धस्य[5] प्रमाणान्तरापेक्षायां

---

१. भिप्रायात्. ग.
२. गुणवादा न प्रमाणान्तर-प्रतीतिवशादुपजायन्ते. ग.
३. तच्च शरीरं. ग.
४. विधिपक्षे हि. ग.
५. Added च. ग.

बृहती

'एष याति' इति विधिशब्दः'' इति । उच्यते—न प्रमाणान्तरापेक्षः शब्दस्यार्थेन सम्बन्धः' कस्तर्हि ? औत्पत्तिकः । ननु च लोके प्रमाणान्तरापेक्षितैव सर्वस्य वचसो दृष्टा ? सत्यं व्यवहारे, न त्वभिधाने । यथा च लोकेऽप्यौत्पत्तिकमभिधानम् , तथा सम्बन्धपरिहारे वक्ष्यामः । ननु सर्व एवायं सूत्रार्थो विवृतः पुनरिहानूदितः । सत्यम् ; विशेषाभिधानाय ॥

पञ्चिका

विवादाभावात् तदपि स्वातन्त्र्यं शङ्क्यमानमपि न भवतीति "न चैव याति" इत्यनेन भाष्यकारः प्रकटयतीति स्थितम् । उच्यते—न प्रमणान्तरापेक्षः शब्दस्यार्थेन सम्बन्धः । कस्तर्हि ? औत्पत्तिकः । अनेन ग्रन्थेन पूर्वोक्तमाक्षेपं परिहर्तुमुपक्रमते । यदि हि प्रमाणान्तरापेक्षः शब्दस्यार्थेन सह वाच्यवाचकभावः सम्बन्धः स्यात् तदा चित्रादिवाक्येषु लिङादयः प्रमाणान्तरानुभूतफलसाधनतानिबन्धनां कार्यतां वदन्तीति स्यादेवाप्रामाण्यम् ; औत्पत्तिके स्वाभाविके निरपेक्षे तु वाचकत्वे स्वातन्त्र्येणार्थपरिच्छेदात्प्रामाण्यं युक्तम् । ननु च लोके प्रमाणान्तरापेक्षितैव सर्वस्य वचसो दृष्टा । यथालोकं च वेदे प्रतीतिरिति सापेक्षतया प्रामाण्यम् । सत्यं व्यवहारे, न त्वभिधाने । अस्यार्थः—व्यवहारे शब्दप्रयोगलक्षणे सत्यं सापेक्षत्वम् ; प्रमाणान्तरेणार्थं प्रतीत्य लोकः शब्दं प्रयुङ्क्ते यतः; न पुनरभिधाने सापेक्षता, स्वशक्त्यैवार्थाभि¹धानात् । न च व्यवहारे सापेक्षता वेदे दोषमावहति, अपौरुषेयत्वात् ; पुरुषो हि प्रमाणान्तरप्रतीतिमपेक्षते शब्दं प्रयोक्तुम् ; तदभावे त्वपेक्षा नास्ति । कथं पुनरभिधा²नेऽपेक्षा नास्ति, तत्राह—यथा च लोकेऽप्यौत्पत्तिकमभिधानम्, तथा सम्बन्धपरिहारे वक्ष्यामः । यदि पौरुषेयः सम्बन्धः, स्यात् सापेक्षता ; यदा पुनरपौरुषेयत्वं वक्ष्यति, तदा सेत्स्यत्यनपेक्षत्वम् । ननु सर्व एवायं सूत्रार्थो विवृतः । औत्पत्तिकसूत्र एव । पुनरिहानूदितः । अनेन पौनरुक्त्य-

---

१. अर्थशक्तौ चार्था- ग. २. धाने त्वपेक्षा. ग.

बृहती

कः पुनरत्र विशेषोऽभिधीयते ? ननु च सम्बन्ध एव नास्ति—इति पूर्वोक्तमाक्षिप्य पुनः समाधिः । ननु च वाक्यार्थोऽयमाक्षिप्तः—"विद्यमानोपलम्भनत्वात्"—इति ; पदविषयमौत्पत्तिकत्वं मन्यन्ते मीमांसकाः । किमनयानुपासितगुरुकथया विकल्पितया ? यस्माद्धि यः प्रतीयते, स तस्यार्थः; न च केवलात्पदात् वृद्धव्यवहारे कस्यचिदर्थस्यावगतिर्दृष्टा ; अनवगम्यमानस्य चार्थस्य केनचित्सम्बन्ध इति दुर्वचं वचः । कथं तर्हि प्रसिद्धिरियम् ? अनुपासितगुरुत्वादित्युक्तम् । तस्मादौत्पत्तिको वाक्यवाक्यार्थयोः सम्बन्धः ॥

पञ्चिका

माह । उत्तरम्—सत्यमनूदितो विशेषाभिधानाय । कः पुनरत्र विशेषोऽभिधीयते ? तं दर्शयति—ननु च सम्बन्ध एव नास्तीति पूर्वोक्तमेवाक्षिप्य पुनः समाधिः । ननु च वाक्यार्थोऽयमाक्षिप्तो विद्यमानोपलम्भनत्वादिति । पदविषयमौत्पत्तिकत्वं मन्यन्ते मीमांसकाः । तस्माद्भिन्नविषयत्वादाक्षेपपरिहारावसंबन्धावित्यर्थः । किमनयानुपासितगुरोः अभिहितान्वयवादिनः कथया विकल्पितया ? यस्माद्धि यः प्रतीयते, स तस्यार्थः ; न च केवलातपदात् वृद्धव्यवहारे कस्यचिदर्थस्यावगतिर्दृष्टा ; अनवगम्यमानस्य चार्थस्य केन चित्सम्बन्ध इति दुर्वचं वचः । अनेन ग्रन्थेन वाक्यविषय आक्षेपः, औत्पत्तिकत्वमपि वाक्यविषयमेवेति परिहारः; यस्मान्न केवलं पदं क्वचिदर्थप्रतीतिं जनयति, वृद्धव्यवहारे तथा व्युत्पत्तिविरहात् ; अन्वितस्वार्थाभिधानतयैव व्युत्पत्तेः अर्थान्तरापेक्षत्वाच्चान्वयस्य पदान्तरा[1]दृते तदनवगतेः पदान्तरापेक्षत्वे च सि[2]द्धं वाक्यस्यैव प्रतिपादकत्वम् ; न केवलस्य पदस्य । कथं तर्हि प्रसिद्धिरियम् ? पदविषयमौत्पत्तिकत्वमिति । अनुपासितगुरुत्वात् भ्रान्तिमूलेत्युक्तम् । तस्मादौत्पत्तिको वाक्यवाक्यार्थयोः सम्बन्धः ॥

---

१. पदान्तराश्रुतेश्च. ग.　　२. Omitted सिद्धं. ग.

भाष्यम्

'स्यादेतदेवम्, नैव शब्दस्यार्थेन सम्बन्धः, कुतोऽस्य पौरुषेयता अपौरुषेयता वेति। कथम्? स्याच्चेदर्थेन सम्बन्धः,

बृहती

स्यादेतदेवम्; नैव शब्दस्यार्थेनास्ति सम्बन्धः; कुतोऽस्य पौरुषेयता अपौरुषेयता वा—इति? कथम्? स्याच्चेनर्थेन सम्बन्धः, क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्। संश्लेषसम्बन्धमभिप्रेत्योच्यते भवता—कार्यकारणनिमित्तनैमित्तिकाश्रयाश्रयियौनादयः सम्बन्धाः शब्दस्यार्थेनानुपपन्ना एवेति" स्यादेतत्—इति यदि नित्यः सम्बन्धः स्यादित्यर्थः। इदं किमिति न स्यात्—"तस्माच्चोदनालक्षणोऽर्थो धर्मः"—इति? "स्याच्चेदर्थेन सम्बन्धः"—इति। अस्याभावे हेतुं क्षुरमो-

पञ्चिका

स्यादेतदेवं नैव शब्दस्यार्थेनास्ति सम्बन्धः; कुतोऽस्य पौरुषेयता अपौरुषेयता वेति? कथम्? स्याच्चेदर्थेन संम्बन्धः, क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्। संश्लेषसम्बन्धमभिप्रेत्योच्यते भवता सिद्धवादि[1]ना औत्पत्तिकत्वं सम्बन्धस्योच्यते, कार्यकारणनिमित्तनैमित्तिकाश्रयाश्रयियौनादयः सम्बन्धाः शब्दस्यार्थेनानुपपन्ना एवेति। भाष्यं पठित्वा भवतेति चार्थलभ्येन शब्देन पूरयित्वा व्याचष्टे—"स्यादेतदिति" यदि नित्यः सम्बन्धः स्यादित्यर्थः। अनेन 'यदि नित्यः सम्बन्धः स्यात्' इत्यध्याहारापेक्षम—"स्यादेतत्—"इति भाष्यमिति दर्शयति। टीकार्थस्तु स्यादेतदिति भाष्यस्य—यदि नित्यः संबन्धः स्यात्, स्यादेतदित्येषोऽर्थः—इति। पुन[2]रिदानीम्

---

१. सिद्धान्तवादिना. ग. २. Omitted पुनः. ग.

भाष्यम्

क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम् । संश्लेष-सम्बन्धमभिप्रेत्योच्यते कार्यकारणनिमित्तनैमित्तिकाश्रयाश्रयि-यौनादयः सम्बन्धाः शब्दस्यार्थेनानुपपन्ना एवेति ।

बृहती

मोदकशब्दोच्चारणग्रन्थेन ब्रुवन् सम्बन्धस्याभ्युपगमं दर्शयति—“संश्लेष-सम्बन्धमभिप्रेत्य” इति । केनायमभ्युपगतः सम्बन्धः, येन निरा-करणीयतया उपन्यस्यते ? ननु च शब्दस्वातन्त्र्यवादिभिः—शब्दादर्थोऽवगम्यते—इत्ययमेवाभ्युपगतः सम्बन्धः ; अनभ्युपगतस्य निराकरणमन्धपदम् । इदमेवात्र निराक्रियते—यदुत शब्दादर्थोऽवगम्यते

पञ्चिका

“स्यादेतत्” इति भाष्यमक्षरतो व्याचष्टे । इदम् उपसंहारभाष्योक्तम् “तस्मा-च्चोदनालक्षणो धर्मः” इतीदम्, किमिति न स्यात्? यावता ‘स्यादेतदेवम्—चोदनालक्षणो धर्मः’ इति एतच्छब्देन च “स्यादेतत्” इति भाष्यश्रुतेन पूर्वप्रकृतम् ‘चोदनालक्षणो धर्मः’ इत्येतत्प्रत्यवमृश्यत इत्यर्थः । स्याच्चेदर्थेन सम्बन्ध इत्यस्य सम्बन्धस्याभावहेतुं क्षुरमोदकशब्दोच्चारणग्रन्थेन ब्रुवन् भाष्यकारः सम्बन्धस्य संश्लेषलक्षणस्याभ्युपगमं दर्शयति—“संश्लेषसंबन्धमभिप्रेत्योच्यते”—इत्यनेन भाष्येण । तत्राह दूषणम्—केनायमभ्युपगतः सम्बन्धः ? येन निरा-करणीयतया मुखस्य पाटनपूरणप्रसक्त्या निराकार्यतया उपन्यस्यते ? एकग्रन्थेनाह—ननु च शब्दस्वातन्त्र्यवादिभिर्मीमांसकैः ‘शब्दादर्थोऽवगम्यते’ इत्ययमेव—वाच्य-वाचकभाव इति यावत्—सम्बन्धोऽभ्युपगतः, न संश्लेषः । अनभ्युपगतस्य निराकरणमन्धपदम् । अपर्यालोचनापूर्वकमित्यर्थः । समाधिमाह—इदमे-वात्र निराक्रियते, यदुत ‘शब्दादर्थोऽवगम्यते’ इति । वाच्यवाचकभाव एवायं

१. भाष्योक्तेन. ग.  २. Added संश्लेषस्य. ग.

बृहती

इति । कथं पुनः संश्लेषसम्बन्धनिराकरणेनेदं निराकृतं भवति ? भवति ; शब्दादर्थज्ञानं हि कार्यं केनचित्कारणेन ; शब्दादर्थज्ञानं च न च शब्दादेवेति शक्यते वक्तुं चक्षुरादीनामिव, प्रथमश्रवणादप्रतीतेः । एवं तर्हि धूमादीनामग्न्याद्यर्थावगताविव न स्वरूपमेव कारणम् । किं तर्हि ? सहावस्थानादिलक्षणः सम्बन्धः । स चायं शब्दे न कश्चिदुपलभ्यते प्रागर्थावगमात् । तस्मात् सम्बन्धान्तरनिराकरणेन वाच्यवाचकता निराकृता भवति । यद्येवं सर्व एव निराकरणीयाः ; किमिदमुच्यते—यौनादयो न संभवन्तीति संश्ले-

पञ्चिका

निराक्रियते । केन कारेणन निराक्रियत इत्येतन्नोपपद्यत इत्यनेन कारणेनेत्यर्थः । कथं पुनः संश्लेषसम्बन्धनिराकरणेनेदम् 'शब्दादर्थोऽवगम्यते' इति निराकृतं भवति ? न ह्यन्यस्मिन् निराकृतेऽन्यन्निराकृतं भवतीत्यभिप्रायः । भवतीति । उत्तरम् । भवति निराकृतमित्यर्थः । कुतः ? शब्दादर्थज्ञानं हि कार्यं केनचित्कारणेन ; तत्र तावन्न शब्दादेव केवलादिदं कार्यमुत्पद्यत इति शक्यते वक्तुं चक्षुरादीनामिव यथा चक्षुरादीनां कार्यं चक्षुरादिभ्य एवोत्पद्यते, तथेदमपीति न[१] । कस्मात् ? प्रथमश्रवणादप्रतीतेः । एकग्रन्थेनाह—एवं तर्हि एवं च सति स्वरूपमेवशब्दस्य अर्थज्ञाने न कारणम् यथा धूमादीनां न स्वरूपमेवाग्न्याद्यवगतौ कारणम् । किं तर्हि ? सहावस्थानादिलक्षणः सम्बन्धः । स चायं शब्दे न कश्चिदुपलभ्यते प्रागर्थावगमात् । यथा धूमादिषु सहभावः प्रागेवानुमानादुपलभ्यते । तस्मात्कारणभूतसम्बन्धान्तरनिराकरणेन कार्यभूता वाच्यवाचकतैव निराकृता भवति । यदि कारणतया निराकरणं संश्लेषस्य, एवं सर्व एव सम्बन्धा निराकरणीयाः । किमिदमुच्यते यौनादयो न[२] संभवन्तीति । सिद्धाभावप्रदर्शनमात्रं क्रियमाणं निराकरणं न भवतीति । युक्तितो बाधनं निराकरणम्, तच्च यौनादेर्न कृतम् ; संश्ले-

---

१. Omitted. न. क. २. नैव भवन्तीति. ग.

बृहती

षस्यैव सहेतुकं निराकरणम् ? अथायमभिप्रायः—यौनादयो नोपलभ्यन्त—इति ; संश्लेषो वा किमुपलभ्यते ? तथा च—"क्षुरमोदकशब्दोच्चारणे" इत्यनुपलब्धिरेवोपन्यस्ता । तस्मान्न विद्मः—केन विशेषेणेदं निराकरणीयतयोपन्यस्तमिति । अथायमभिप्रायः—संश्लिष्टस्यैवार्थस्य गम्यत्वं गमकत्वं चेति, तदयुक्तम्; कार्यकारणयोरसंश्लिष्टयोरपि गम्यगमकत्वदर्शनात्। कार्यकारणमपि तन्त्वादि संश्लिष्टमिति चेत्, नैतन्निमित्ते संभवति ; तदपि हि कारणमेव गम्यं च । तस्मादिदमन्धपदमिति प्रतिभाति । उच्यते—अत्र ह्यौत्पत्तिकवादिनः केचित्—स्व-

पञ्चिका

षस्यैव हि सहेतुकं निराकरणं कृतम्। अथायमभिप्रायः—यौनादयो नोपलभ्यन्ते इति ; तेनानाशङ्कनीयत्वान्न निराक्रियन्ते । एतद्दूषयति—संश्लेषो वा किमुपलभ्यते? येन निराक्रियते ; यावता सोऽपि नोपलभ्यते । तथा च स्वयमेव भाष्यकारेण "क्षुरमोदकशब्दोच्चारणे" इत्यनेन ग्रन्थेनानुपलब्धिरेवोपन्यस्ता । तस्मान्न विद्मः केन विशेषेणायं भाष्यकारेण[1] निराकरणीयतया संश्लेष उपन्यस्तः । अथायमभिप्रायः—गमकत्वं शब्दस्य, गम्यत्वं चार्थस्य ; तच्चान्यत्र संश्लिष्टस्यैव दृष्टम् ; तेनेहापि कदाचित् तदेवाशाङ्क्येतेति निराक्रियते । तदयुक्तम्, कार्यकारणयोरसंश्लिष्टयोरपि गम्यगमकत्वदर्शनान्नैकान्तेन संश्लेष एव कारणम् ; अपि तु कार्यकारणभावादयोऽपि ; अतस्तेऽपि निराकरणीया इति भावः । अत्र परिचोदयति—कार्यकारणमपि तन्त्वादि संश्लिष्टमिति चेत् । अस्यार्थः—सर्वत्र संश्लेषो व्यापकः ; कार्यकारणयोरपि समवायिकारणभूततन्तुपटयोरसमवायिकारणात्मकतन्तुसंयोगपटयोश्च संश्लेषदर्शनात्। नैतन्निमित्ते संभवति। नैतत् संश्लिष्टत्वं निमित्ते कुविन्दादौ संभवति । न च कुविन्दादयो न कारणम्, तद्भावभावाविशेषात् । गम्यं च कार्यदर्शनात्। त[2]स्मान्नैकान्ततः संश्लेषादवगतिः, किन्तु सम्बन्धान्तरादपीति । तस्मादन्धपदमेवेदं सर्वं संश्लेषसम्बन्धमात्रनिराकरणं प्रतिभाति । अत्र परिहारमाह—उ[3]च्यते

---

१. Omitted भाष्यकारेण. ग.    ३. Omitted उच्यते. ग.

२. तस्मान्नाप्येकान्ततः. ग.

भाष्यम्

उच्यते---योऽत्र व्यपदेश्यः सम्बन्धः, तमेकं न व्यपदिशति भवान् प्रत्याय्यस्य प्रत्यायकस्य च संज्ञासंज्ञिलक्षणः।

बृहती

रूपमेवाध्यस्य शब्दोऽर्थं प्रत्याययति—इति प्रतिपन्नाः ; युक्तिश्चोक्ता—स्वमेव रूपं शब्दस्य, येयमर्थपरिणतिः—इति । अतस्तन्निराकरणम् । तस्मिन् पक्षे संश्लेष एव शब्दार्थयोः सम्बन्धः । सोऽयं कार्यानुपलब्ध्या न घटते इति—"क्षुरमोदकशब्दोच्चारणे मुखस्य पाटन पूरणे स्याताम्" इत्युक्तम् । कथं तर्हि—गौरयम्—इति तुल्यो निर्देशः शब्दार्थयोः ? अस्त्ययं निर्देशः, स तु नाध्यासकृत इति आकृतिग्रन्थे वक्ष्यामः । "यौनादयस्तु सम्बन्धाः शब्दस्यार्थेनानुपपन्ना एव" इत्यनभ्युपगमं दर्शयति । "योऽत्र व्यपदेश्यः सम्बन्धः, तमेकं न व्यपदिशति भवान् प्रत्याय्यस्य प्रत्यायकस्य च संज्ञासंज्ञिलक्षणः "—इत्यनेनौ-

पञ्चिका

अत्र ह्यौत्पत्तिकवादिनः केचित्स्वरूपमेवाध्यस्य शब्दोऽर्थं प्रत्याययतीति प्रतिपन्नाः । वैयाकरणाः किल शब्दा एवार्थरूपेणाध्यस्ताः शब्दादवगम्यन्त इति मन्यन्ते । युक्तिश्च[1] तैरुक्ता 'स्वमेव रूपं शब्दस्य, येयमर्थपरिणतिः' इति । योऽयमर्थाकारः, स शब्दस्यैव रूपं यस्मात् तस्माच्छब्दाध्यासरूपोऽर्थः ; अर्थाकारस्य शब्दरूपत्वे च निर्देशतुल्यतैव हेतुः । अतस्तन्निराकरणायेदमुक्तं संश्लेषनिराकरणम् । त[2]स्मात् तस्मिन् पक्षे संश्लेष एव तादात्म्यरूपः शब्दार्थयोः सम्बन्धः । सोऽयं संश्लेषः कार्यानुपलब्ध्या न घटत इति "क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्" इत्युक्तम् । यदि तादात्म्यं नास्ति, कथं तर्हि—गौरयम्—इति तुल्यो निर्देशः शब्दार्थयोः ? अ[3]त्र परिहारमाह--अस्त्ययं निर्देशः, स तु

१. तैरेवोक्ता. ग.
२. यस्मात्. ग.
३. अत्र परिहारः. ग.

भाष्यम्

आह—यदि प्रत्यायकः शब्दः, प्रथमश्रुतः किं न प्रत्याययति ? उच्यते—सर्वत्र नो दर्शनं प्रमाणम् ; 'प्रत्यायकः'—इति हि

बृहती

त्पत्तिकत्वं पुनरुपोद्बलयति । "आह—यदि प्रत्यायकः शब्दः, प्रथमश्रुतः किं न प्रत्याययति" ? स्वतो हि सर्वभावानां प्रवृत्तिश्चक्षुरादीनामिव रूपग्रहणे ; तस्मात् सापेक्षत्वं शब्दस्यार्थप्रतिपत्तावस्तीति "प्रथमश्रुतः किं न प्रत्याययति" इत्युक्तम् । "सर्वत्र नो दर्शनं प्रमाणम्" इति स्वाभाविकानां सापेक्षत्वं निरपेक्षत्वं च दर्शनादेवावगम्यते ; दृष्टं हि चक्षुरादेः स्वाभाविकत्वेऽपि रूपावगतावपेक्षित्वम् , दहने चानपेक्षित्वमग्न्यादेः । तदिदमुक्तम्—"सर्वत्र नो दर्शनं प्रमाणम्"—इति ।

पञ्चिका

नाध्यासकृत इत्या[1]कृतिग्रन्थे परिहारं वक्ष्यामः । यौनादयस्तु सम्बन्धाः शब्दस्यानुपपन्ना इ[2]त्यनेनानभ्युपगमं दर्शयति । योऽत्र व्यपदेश्यः सम्बन्धस्तमेकं न व्यपदिशति भवान् प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षणः सम्बन्ध इत्यनेनौत्पत्तिकत्वं पुनरुपोद्बलयति राद्धान्ती । "आह—यदि प्रत्यायकः शब्दः प्रथमश्रुतः किं न प्रत्याययति" इति भाष्यम् ; तत्राभिप्रायं टीकाकारो व्यनक्ति—स्वतो हि सर्वभावानां प्र[3]वृत्तिश्चक्षुरादीनामिव रूपग्रहणे । सर्वे भावा हि कार्यकरणे प्रवर्तमानाः स्वत एव प्रवर्तन्ते यथा चक्षुरादयो रूपग्रहणे ; शब्दस्तु प्रथमश्रवणे अप्रतिपादकत्वात्स्वत एव न प्रवर्तते ; तस्मात्केनचि[4]त्सम्बन्धं कृत्वा प्रवर्त्यत इति ज्ञायते । तस्मात्सापेक्षत्वं शब्दस्यार्थप्रतिपत्तावस्तीति प्रथमश्रुतः किं न प्रत्याययतीत्यनेन भाष्येणोक्तम् । सर्वत्र नो दर्शनं प्रमाणमिति । स्वाभाविकानां स्वभावत

---

१. Omitted आकृति. ग.
२. एवेत्यनभ्यु. ग.
३. कार्यकारणभावात् स्वतः. ग.
४. सम्बन्धा(न्धा)सम्बन्धं कृत्वा प्रवर्त (र्त्य) ते. क.

भाष्यम्

प्रत्ययं दृष्ट्वावगच्छामः, 'न प्रथमश्रुतः'--इति प्रथमश्रवणे प्रत्ययमदृष्ट्वा ; यावत्कृत्वःश्रुतेन 'इयं संज्ञा, अयं संज्ञी'--इत्यवधारितं भवति, तावत्कृत्वःश्रुतादर्थावगम इति । यथा चक्षुः द्रष्टृ न बाह्येन प्रकाशेन विना प्रकाशयतीति अद्रष्टृ न भवति । यदि

बृहती

दृष्टं हि कार्यं पुरुषप्रयत्नानपेक्षम्, पुरुषानुपलब्धेः ; सापेक्षं च, प्रथमप्रयोगानवगतेः, प्रयोगान्तरे चावगमात् । "यदि प्रथमश्रुतो न प्रत्याययति, कृतकस्तर्हि"—इति कोऽभिप्रायश्चोदकस्य ? यदि तावत्—कृतकः कार्यः, न सामयिकः—इत्यभिप्रायः, ततः सिद्धं साध्यते ; पुरुषान्तरप्रत्ययान्तरानपेक्षिता—शाब्दं प्रमाणम्--इति वदतोऽभिप्रेता चक्षुरादी-

पञ्जिका

एव पुरुषप्रयत्नानपेक्षकार्यकराणां[1] सापेक्षत्वं निरपेक्षत्वं च द्वयमपि दर्शनादेवावगम्यते ; दृष्टं हि चक्षुरादेः स्वाभाविकत्वेऽपि रूपावगतावालोकापेक्षत्वं दहने चानपेक्षत्वमग्न्यादेः । तेन सापेक्षत्वमात्रं प्रथमश्रवणे अर्थाप्रतिपादकत्वात् स्यात्, न[2] तु पुरुषप्रयत्नापेक्षत्वम् । तदिदमुक्तम्—"सर्वत्र नो दर्शनं प्रमाणम्" इति । दृष्टं हि तत्र कार्यं पुरुषप्रयत्नानपेक्षं पुरुषानुपलब्धेः, सापेक्षं च प्रथमश्रवणादनवगतेः प्रयोगान्तरे चावगमात् । "यदि प्रथमश्रुतो न प्रत्याययति, कृतकस्तर्हि" इति कोऽभिप्रायश्चोदकस्येति । अनेन भाष्यमाक्षिपति । एकग्रन्थेनाह—यदि तावत्कृतकः कार्य इत्येतावानभिप्रायः न सामयिकः पुरुषसङ्केतप्रवर्त्तित इति, ततः सिद्धं साध्यते । कुतः ? पुरुषान्तरप्रत्ययान्तरानपेक्षिता[3] हि शाब्दं प्रमाणं वदतोऽभिप्रेता चक्षुरादीनामिव रूपग्रहणे, न पुनरुत्पत्तिमत्त्वं नेष्यते ।

---

१. मनपेक्ष्य कार्यकारिणां. ग. वदतः. ग.
२. तत्पुरुषप्रयत्नानपेक्षित्वम्. ग. ४. Added अपि. ग.
३. -ता न शब्दमप्रमाणमभि-

भाष्यम्

प्रथमश्रुतो न प्रत्याययति, कृतकस्तर्हि शब्दस्यार्थेन सम्बन्धः । कुतः ? स्वभावतो ह्यसम्बन्धावेतौ शब्दार्थौ, मुखे हि शब्दमुपलभामहे, भूमावर्थम्; 'शब्दोऽयं न त्वर्थः, अर्थोऽयं न शब्दः'—इति च व्यपदिशन्ति । रूपभेदोऽपि भवति, 'गौः'—इतीमं शब्दमुच्चारयन्ति, सास्नादिमन्तमर्थमवबुध्यन्त इति ; पृथग्भूतयोश्च यः सम्बन्धः, स कृतको दृष्टः, यथा रज्जुघटयोरिति ॥

बृहती

नामिव रूपग्रहणे, न पुनरुत्पत्तिमत्तापि नेष्यते ; उत्पद्यत एव हि सम्बन्धः, क्रियागर्भत्वात्तस्य ; क्रियायाश्चोत्पत्तिमत्त्वात् तदनुवर्ती सम्बन्धोऽप्युत्पत्तिमानेव । अथ कृतकः रज्जुघटयोरिव पुरुषयत्नजन्यः इत्यभिप्रायः; तदयुक्तम् ; चक्षुरादेरालोकाभावे कदाचित् कार्यमकुर्वतः तत्सद्भावे च कार्यं कुर्वतोऽपि पुरुषान्तरप्रत्ययान्तरानपेक्षत्वात् सन्बन्धस्य, तथा शब्दस्यापि सम्बन्धः स्यादिति । तस्मादसमर्थमिव सिद्धान्तलङ्घने

पञ्चिका

उत्पद्यत एव हि सम्बन्धःक्रियागर्भत्वात्तस्य,क्रियायाश्चोत्पत्तिमत्त्वात् तदनुवर्ती[1] सम्बन्धोऽप्युत्पत्तिमानेव । स एव पुनरेकग्रन्थेनाह—अथ कृतको रज्जुघटयोरिव पुरुषप्रयत्नजन्य इत्याभिप्रायः । तदयुक्तम् ; चक्षुरादेरालोकाभावे कदाचित्कार्यमकुर्वतस्तत्सद्भावे च कार्यं कुर्वतोऽपि पुरुषान्तरप्रत्ययान्तरानपेक्षत्वात् सम्बन्धस्य तथा शब्दस्यापि सम्बन्धः स्यादिति । तस्मादसमर्थमिव अशक्तमिव सिद्धान्तलङ्घने भाष्यं प्रतिभाति "कृतकस्तर्हि" इति । नेदमसमर्थम् । अयमस्याभिप्रायः—नेदमुद्योतनादितुल्यं द्वितीयादिश्रवणम् ; उद्योतनस्यापि ह्यनुग्राहकत्वमेतत्कार्य-

---

१. तदनुरूप. क.

बृहती

भाष्यं प्रतिभाति---"कृतकस्तर्हि"—इति । नेदमसमर्थम् ; अयमस्याभिप्रायः-- नेदमुद्योतादितुल्यम् ; उद्योतस्याप्यनुग्राहकत्वं कार्यसमधिगम्यमेव, अनवगतिपूर्वकत्वादवगतेश्चक्षुरादीनाम् । शब्दे पुनरर्थावगतिपूर्विकैवार्थावगतिः; हि 'अयमस्यार्थः' इत्यवगम्य ततः शब्दादर्थं प्रतिपद्यते । तस्मात् सन्बन्धान्तरपूर्विकैवार्थावगतिरिति सापेक्षता । तदिदं कृतकशब्देन सामयिकत्वं कृतकता वोक्ता ॥

पञ्चिका

समधिगम्यमेव, तथैव कार्यदर्शनादनवगतिपूर्वकत्वादवगतेश्चक्षुरादीनाम् । न[1] च चक्षुरादयोऽवगमकत्वेनावगता अवगमकाः ; तेन तत्र युक्तम् । शब्दे पुनस्त्वयैवं वक्तव्यम्—अर्थावगतिपूर्विकैवार्थावगतिः—इति ; यस्माद्व्यवहारे 'अयमस्यार्थः' इत्यवगम्य ततः शब्दादर्थं प्रतिपद्यत इति । न च प्रतिपत्तावनुत्पन्नायाम् 'अयमस्यार्थः' इति ज्ञानं भवति । तस्मादवगतिपूर्विकैवावगतिरिति त्वयाभ्युपगमनीयम् । न चैतद्युक्तम्; अवगतेरेव कारणं चिन्त्यते यतः । न चावगतिरेवावगतेः कारणमिति युक्तम्, आत्माश्रयदोषप्रसङ्गात् । तस्मा[2]न्निमित्तान्तरापेक्षायां देवदत्तादिषु दृष्टः समय एव गवादिष्वर्थ[3]धीहेतुरिति साम्प्रतम् । तथा च कीर्तिनोक्तम्—

"यज्जातीयो यतः सिद्धः स तस्मादग्निकाष्ठवत् ।
अदृष्टहेतुरप्य[4]न्यो विशिष्टः संप्रतीयते" ॥ इति ।

तदिदमाह—तस्मात्सम्बन्धान्तरपूर्विकैवार्थावगतिरिति सिद्धा सापेक्षता । तदिदं कृतकशब्देन सामयिकत्वं कृतकता वोक्ता । यदायमर्थः प्रतिपादयितुमभिप्रेतः, तदा 'अयं मया शब्दः प्रयोज्यः' इति योऽयं प्रयोगनियमः, स समयः ; तेन निर्वृत्तः सामयिकः शब्दार्थयोः सम्बन्धः । तस्मिंश्च पक्षे शब्दप्रयोगादर्थप्रतिपादनाभिप्रायं प्रतीत्य तत्पुरस्सरसामर्थ्यज्ञानम् ; 'अस्य शब्दस्यायमर्थः' इति यावत्पुरुषस्य संकेतः; तेन कृतः कृतकः सम्बन्ध इत्यभिप्रेतः। तस्मिंस्तु पक्षे शब्दादेवार्थज्ञानम् । पक्षद्वये चास्मिन् पुरुषप्रयत्नापेक्षत्वात् सम्ब-

१. Omitted न च. ग.
२. तस्या निमित्ता- ग.
३. अर्थप्रतिपत्तिहेतु. ग.
४. –प्यनेन. ग.

भाष्यम्

अथ 'गौः'—इत्यत्र कः शब्दः ? गकारौकारविसर्जनीया इति भगवानुपवर्षः ; श्रोत्रग्रहणे ह्यर्थे लोके

बृहती

"अथ 'गौः' इत्यत्र कः शब्दः" —इति कोऽयं प्रश्नः ? अयमयं प्रश्नः—यद्यपरिणत्या शब्दोऽर्थमवगमयति, कस्तर्हि शब्दोऽभिप्रेतः ? योऽयं श्रोत्रेणावच्छिद्यते, स शब्दोऽभिमतः ? ओम्--इत्युच्यते ; श्रोत्रग्रहणे

पञ्चिका

न्धस्य तत्पुरस्सरत्वाद्वेदार्थावगतेः पौरुषेयत्वमेव वेदानाम् । पुरुषाश्च प्रमाणान्तरेणार्थमवगम्यावगमयन्तीति सापेक्षता । ततश्चाप्रामाण्यं चोदनाया इति स्थितोऽयमाक्षेपः ॥

इति सम्बन्धाक्षेपः ।

अथ गौरित्यत्र कः शब्द इति कोऽयं प्रश्नः ? अस्यार्थः—सापेक्षतया शब्दस्याप्रामाण्ये पूर्वपक्षवादिनोक्तेऽत्र कोऽयं प्रश्नः ? अर्थे[1] सिद्धान्तवादिनः सिद्धान्तं कर्तुमवसरः, न चायं सिद्धान्तोपक्रम एव । तथा हि—"गकारौकारविसर्जनीया इति भगवानुपवर्षः" इत्युत्तरं पूर्वपक्षवादिनः स्यात्[2] ; तच्चानुपपन्नम् । तस्मादयुक्तोऽयं प्रश्नः । अयमयं प्रश्नः --यद्यपरिणत्या शब्दोऽर्थमवगमयति, कस्तर्हि शब्दोऽभिप्रेतः ? अत्रेदमर्थतत्त्वम्—वैयाकरणः पूर्वपक्षवादिना सिद्धान्तिनि पराजिते सिद्धान्तिनमेव पर्यनुयुङ्क्ते—संश्लेषलक्षणसम्बन्धं परित्यजता भवता प्रत्याय्यप्रत्यायकभावं चाभ्युपगच्छता अपरिणत्या शब्दोऽर्थमवगमयतीत्यभ्युपगतम् ; एवमभ्युपगच्छतस्ते कः शब्दोऽभिप्रेतः ? न तावद्वर्णात्मकः, तेभ्योऽर्थप्रतिपत्त्ययोगात् । तस्मादवर्णात्मकः शब्दोऽभ्युपेयः ; तस्य च[3]ार्थतादात्म्यमविरुद्धम् ; तेन संश्लेषलक्षणः सम्बन्धोऽभ्युपगम्यताम् । तथा च स्वाभाविकोऽपि सम्बन्धः सिद्ध इत्यनपेक्षत्वमपि सिद्धम् । तेन विमुच्यतां प्रत्याय्यप्रत्यायकभावलक्षणः सम्बन्ध इति । तेन युक्तोऽयं प्रश्नः । एकग्रन्थेनाह—योऽयं श्रोत्रेणावच्छिद्यते स शब्दो[4]ऽभिमत इति । इदानीं सिद्धान्त्याह—ओमित्युच्यते ।

---

१. अयं. क.
२. न सिद्धान्तिनि पराजिते. ग.
३. Omitted च. क.
४. Added भवतः. क.

भाष्यम्

शब्दशब्दः प्रसिद्धः, ते च श्रोत्रग्रहणाः । यद्येवम्, अर्थ-प्रत्ययो नोपपद्यते । कथम् ? एकैकाक्षरविज्ञानेऽर्थो नोप-लभ्यते ; न चाक्षरव्यतिरिक्तोऽन्यः कश्चिदस्ति समुदायो नाम, यतोऽर्थप्रतिपत्तिः स्यात् । यदा गकारः, न तदा औकार-विसर्जनीयौ, यदा औकारविसर्जनीयौ, न तदा गकारः। अतो गकारादिव्यतिरिक्तोऽन्यो गोशब्दोऽस्ति, यतोऽर्थप्रतिपत्तिः स्यात् । अन्तर्हिते शब्दे स्मरणादर्थप्रतिपत्तिश्चेत् न, स्मृतेरपि क्षणिकत्वादक्षरैस्तुल्यता । पूर्ववर्णजनितसंस्कार-सहितोऽन्त्यो वर्णः प्रत्यायकः—इत्यदोषः । नन्वेवं 'शब्दा-

बृहती

ह्यर्थे लोके शब्दशब्दः प्रसिद्धः; ते च श्रोत्रग्रहणाः गकारौकारविसर्जनीयाः । नन्वेवं सत्यर्थप्रत्ययो नोपपद्यते, क्रमवर्तित्वाद्वर्णानाम् ; क्षणिकत्वाच्च तदुप-लब्धीनाम्। उपलभ्यमानतया च पदादिव्यवस्था, न तु सन्मात्रतया। तस्मा-

पञ्चिका

अङ्गीकारे ह्योमिति ; तेनाङ्गीक्रियत इति यावत् । यस्मात् श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः ; ते च श्रोत्रग्रहणाः गकारौकारविसर्जनीयाः । तस्मात्त एव शब्दाः । नन्वेवं सत्यर्थप्रत्ययो नोपपद्यते । कथम् ? क्रमवर्तित्वाद्वर्णानां क्षणिकत्वाच्च तदुपलब्धीनाम्; उपलभ्यमानतया च पदादिव्यवस्था, न तु सन्मात्रतया ; तस्मादनुपपन्नोऽर्थप्रत्ययः । अस्यार्थः—वर्णास्तावन्न सन्मात्रतयार्थं प्रतिपादयन्ति, तेषां सर्वगतत्वान्नित्यत्वाच्च सर्वत्र सर्वदा चार्थ-प्रतीतेः । उपलब्धिपक्षे तु प्रत्येकं प्रतिपादकत्वं नास्ति । न च समुदि-तानाम्, क्रमवर्तित्वात्तदुपलब्धीनाम् ; न च क्रमोत्पन्नानामुपलब्धीनां स्थेम्नोपलब्धौ

बृहती

दनुपपन्नोऽर्थप्रत्ययः। अथायमभिप्रायः—उपलब्धिविनाशेऽपि तत्स्मृत्यनुग्रहादर्थावगमः—इति; सापि न सर्वविषयिणी उपलब्धिवत्; उपलब्ध्यनुसारिणी हि सा; अतोऽप्यर्थावगतिर्न घटते। तस्मात्—शब्दतत्त्वमेवेदमर्थरूपतया विवर्तते—इत्युक्तं शब्दविद्भिः। किं वा विवर्तपक्षे श्रोत्रादिव्यापारनिरपेक्षैव स्वरूपेऽर्थे वावगतिः शक्यते वक्तुम्? बाढम्; शब्दादयः श्रोत्राद्यवच्छेदेनैकरूपा अप्यनेकरूपा इव भान्ति मरकतपद्मरागादिषु

पञ्चिका

साहित्यम्, तासां क्षणिकत्वात्। न च तत्प्रकारातिरेकि प्रकारान्तरमस्तीत्यनुपपन्नोऽर्थप्रत्यय। अथायमभिप्रायः—उपलब्धिनाशेऽपि तत्स्मृत्यनुग्रहादर्थावगम इति। अस्यार्थः—यद्यपि क्षणिकत्वादुपलब्धयो युगपन्न संभवन्ति, तथापि तत्स्मृत्यनुगृहीता वर्णा अवगमं करिष्यन्तीति। सापि न सर्वविषयिणी उपलब्धिवत्; उपलब्ध्यनुसारिणी हि सा। अस्यार्थः—सापि स्मृतिः सर्व[1]-विषयैका नास्ति; यथोपलब्धिः प्रत्येकवर्णविषया, तथा सापि; यस्मादुपलब्ध्या संस्कारः क्रियते, संस्काराच्च स्मृतिः, तेनोपलब्धिवदेकैकवर्णविषया संस्कारात् स्मृतिरिति न सर्ववर्णविषयत्वम्। न च प्रत्येकवर्णविषयाभ्य एव स्मृतिभ्यः संस्कारयौगपद्येन युगपद्भाविनीभ्योऽर्थप्रतीतिः, क्रमविपर्ययोच्चरितेष्वपि वर्णेषु संस्कारयौगपद्येन स्मृतौ यौगपद्याविशेषा[2]त्तदर्थसंवित्प्रसङ्गात्। अतोऽप्यर्थावगतिर्न घटते। तस्माच्छब्दतत्त्वमेवेदमर्थरूपतया विवर्तत इत्युक्तं शब्दविद्भिः। यस्माद्वर्णातिरेकी शब्दः कार्यगम्यः, तस्मात्स विवर्ततेऽर्थरूपेणेति प्रतीतिविरुद्धता नास्ति। वर्णात्मके हि[3] शब्दे गवादीनां तद्रूपता प्रत्यक्षेण विरुध्यते। किं वा विवर्तपक्षे श्रोत्रादिव्यापारनिरपेक्षैव स्वरूपेऽर्थे वावगतिः शक्यते वक्तुम्? अस्यार्थः—विवर्तवादिनापि हि श्रोत्रादिव्यापारापेक्षा शब्दस्वरूपेऽर्थे वा अवगतिर्वाच्या। सा[4] भिन्नयोरेव शब्दार्थयोराकारं समर्पयति। यदि परं श्रोत्रादिव्यापारानपेक्षा प्रतीतिरभ्युपगम्येत, तदा स्यादेव विवर्तः; न चासावस्तीति विवर्तपक्षोऽप्यनुपपन्नः। अत्रोत्तरम्—बाढम्। अतिशयेन शक्यते। शब्दादयः श्रोत्राद्यवच्छेदेन ह्येकरूपा अप्यनेकरूपा इव भान्ति[5]। अस्यार्थः—

१. सर्ववर्ण. ग.
२. षात्तत्प्रसङ्गात्. ग.
३. Omitted. हि. क.
४. Added. च. ग.
५. प्रतिभान्ति. ग.

बृहती

मुखमेकमप्यनेकरूपमिव प्रतिभाति। ननु च खड्गादिष्वेकं ग्राहकम्; उपाधयो हि खड्गादयः। तदेकग्राहकवशात् 'एकं मुखम्' इति शक्यते वक्तुम्; भेदाश्चोपाधिनिबन्धनाः। अत्र पुनः किमेकं ग्राहकं शब्दादेः, यद्वशात्—श्रोत्राद्युपाधिकृतो भेदः, एकमेवेदं वस्तु—इति वर्ण्यते? किमिदं प्रलप्यते—एकग्राहकवशादेकं वस्तु—इति? एकत्वादेव ह्येकत्वम्। ननु चोक्तमेकत्वमेव न प्रतीयते—इति; श्रोत्रादयो हि प्रतीतेः कारणम्। ते च भेदेनैव प्रतीतिमुत्पादयन्ति। प्रतीतिभेदे सति 'एकं वस्तु' इति दुर्वचं वचः। कथं तर्हि खड्गादिषु 'तदेवेदं मुखम्' इति? बिम्बाकारप्रत्यभिज्ञाना-

पञ्चिका

यद्यपि परमार्थतो भेदो नास्ति, तथापि श्रोत्राद्युपाधिवशेन भिन्नबुद्धिर्भवति। अत्र दृष्टान्तमाह—[1]मरकतपद्मरागादिषु मुखमेकमप्यनेकरूपमिव प्रतिभाति। तथात्रापि भविष्यति। ननु च खड्गादिष्वेकं ग्राहकम्। चक्षुरिन्द्रियम्। उपाधयो हि खड्गादयः। तस्यैकस्य वशेन 'एकं मुखम्' इति शक्यते वक्तुं भेदाश्चोपाधिनिबन्धना इति च शक्यते वक्तुम्। अत्र पुनः किमेकं ग्राहकं शब्दादेः, यद्वशाच्छ्रोत्राद्युपाधिकृतो भेदः, एकमेवेदं वस्त्विति वर्ण्यते? एकस्मिन् ग्राहके श्रोत्रादयो भिन्ना उपाधिमात्रतयैवावतिष्ठन्ते; तद्वशाच्च भेद इति युज्येतापि। अत्रोत्तरम्—किमिदं प्रलप्यते एकग्राहकवशादेकं वस्त्विति। अत्रापि नैकग्राहकवशादेकं मुखम्, किं तु; एकत्वादेव ह्येकत्वम्। एकत्वेनैव प्रतीतेरेकत्वम्; तेनात्राप्येकत्वेन प्रतीतेः शब्दरूपादीनामेकत्वमिति। ननु चोक्तमेकत्वमेव न प्रतीयत इति। यस्मात् श्रोत्रादयः प्रतीतेः कारणम्; ते च भेदेनैव प्रतीतिमुत्पादयन्ति; प्रतीतिभेदे सति 'एकं वस्तु' इति दुर्वचं वचः। कथं तर्हि खड्गादिषु 'तदेवेदं मुखम्' इति? बिम्बाकारप्रत्यभिज्ञानादुपाधिनिबन्धनो भेद इति शक्यते वक्तुम्? अस्यार्थः—कथमुपाधिषु नानावभासे सत्यपि 'तदेवेदं मुखम्' इति निश्चयः, यावता भेद एव स्यात्; यदि बिम्बाकारप्रत्यभिज्ञा स्यात्, तदोपाधिनिबन्धनो भेद इति शक्यते वक्तुम्, नान्यथा।

---

१. मरतक. क.

बृहती

तदुपाधिनिबन्धनो भेद इति शक्यते वक्तुम्? उक्तं तर्हि त्वयैवैकत्वम् 'प्रत्यभिज्ञानादेकत्वम्' इति । अस्ति चेदमेकत्वं शब्दादावपि—गौरयम्, शुक्लोऽयम्, सुरभि चन्दनम्---इति । तस्मादत्राप्येकतया प्रत्यभिज्ञानात् श्रोत्राद्युपाधिनिबन्धन एवायं भेद इत्युपपन्नम् । श्रोत्रादेः किंनिबन्धनो भेदः ? विषयभेदप्रतिपत्तिनिबन्धन इति वदामः । विषयभेदप्रतिपत्तेः किं निबन्धनम्? श्रोत्रादिभेद इत्युक्तम् । एवं सतीतरेतराश्रयतोक्ता भवति ; बाढमुक्ता ; अविद्यामातृकेयम् ; अत एवाविद्येत्युच्यते बुधैः ।

पञ्चिका

उत्तरम्—उक्तं तर्हि त्वयैवैकत्वम् । त्वया हि प्रत्यभिज्ञानादेकत्वं भवेदिति वदतैकत्वमुक्तम् । कुतः ? प्रत्यभिज्ञानात् सर्वत्र तदेवेदं मुखमिति प्रतीतेः तत्र भेदाभेदयोः परस्परविरोधित्वे भेदस्योपाधिवशेनाप्युपपत्तेरभेद एव पारमार्थिक इति निश्चीयते । ननु च भवत्वेवं मुखे, शब्दादिषु कथमिति तत्राह—अस्ति चेदमेकत्वं शब्दादावपि । गौरयमिति जातिशब्दयोस्तुल्यव्यपदेशादेकत्वावगमः, शुक्लोऽयमिति रूपशब्दयोः, सुरभि चन्दनमिति, गन्धशब्दयोर्द्रव्यशब्दयोश्च । तस्मादत्राप्येकतया प्रत्यभिज्ञानाच्छ्रोत्रादिनिबन्धन एवायं भेद इत्युपपन्नम् । अस्यार्थः—सर्वशब्देषु तावत् 'शब्दः शब्दः' इत्येका बुद्धिः, अभिव्यञ्जकध्वनिवशाद्भेदः; शब्दस्य जात्यादीनां तुल्यव्यपदेशादभेदः, श्रोत्राद्युपाधिवशेन भेद इत्युपपन्नम् । अत्र चोदयति—श्रोत्रादेः किंनिबन्धनो भेदः ? अत्राभिप्रायः—त्वन्मते सर्वं जगदेकरूपम् ; अतः श्रोत्रादेरपि कथं भेद इति । विषयभेदप्रतिपत्तिनिबन्धन इति वदामः । कार्यभेदाच्छ्रोत्रादीनामपि भेद इत्यर्थः । विषयभेदप्रतिपत्तेः किं निबन्धनम् ? विषयभूतानां शब्दादीनां भेदप्रतिपत्तेः किं कारणमित्यर्थः । श्रोत्रादिभेदो निबन्धनमित्युक्तमेवानन्तरम् । एवं सतीतरेतराश्रयतोक्ता भवति । सा च न युक्ता । बाढमुक्ता अविद्यामातृकेयम् । येयमितरेतराश्रयता इयमविद्यामातृका । मातृका सदृशी । यदि हि काचिदनुपपत्तिर्न स्यात्[1] विद्यैव स्यात् ; अनुपपन्नार्थैवाविद्या । अत एवाविद्येत्युच्यते बुधैः[2] । यत एवानु-

---

१. कदाचिदत्रानुप. ग. २. बुद्धैः. क.

भाष्यम्

दर्थं प्रतिपद्यामहे'—इति लौकिकं वचनमनुपपन्नं स्यात् । उच्यते---यदि नोपपद्यते, अनुपपन्नं नाम ; न हि 'लौकिकं वचनमनुपपन्नम्'--इत्येतावता प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्नोत्युपगन्तुम्। लौकिकानि वचनान्युपपन्नार्थानि, अनुपपन्नार्थानि च दृश्यन्ते यथा 'देवदत्त गामभ्याज' इत्येवमादीनि, 'दश दाडिमानि, षट् अपूपाः'—इत्येवमादीनि च ।

ननु च शास्त्रकारा अप्येवमाहुः---"पूर्वापरीभूतं भाव-

बृहती

तस्माद्विवर्त एवाश्रयणीयस्तत्त्वविद्भिरवगतेः कारणम् । अतो न शब्दज्ञो देवानां प्रियः, यो हि युतसिद्धयोः शब्दार्थयोः सम्बन्धमर्थावगतौ कारणं मन्यते । "पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णो वाचकः" इति । कोऽयं संस्कारो नाम ? यदि तावद्वर्णावगतिः ; प्रत्युक्ता,

पञ्चिका

पपन्ना । तस्माद्विवर्त एवाश्रयणीयस्तत्त्वविद्भिरवगतेः कारणम् । विवर्तस्योपपन्नत्वात्[1] । एवं वैयाकरणः स्वपक्षं साधयित्वा मीमांसकं पराजित्य पर्यनुयुङ्क्ते-- अतो न शब्दज्ञो देवानां प्रियः, यो हि युतसिद्धयोः शब्दार्थयोः सम्बन्धमर्थावगतौ कारणं मन्यत इति । पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णो वाचक[2] इति । कोऽयं संस्कारो नाम ? यदि तावद्वर्णावगतिः । संस्क्रियते अर्थप्रतीतियोग्यात्मा क्रियतेऽनेनेति[3] व्युत्पत्त्या । प्रत्युक्ता सा ; अर्थोपलब्धौ कारणत्वं तस्यापि[4] न संभवति, अयौगपद्यादित्युक्तम् । अथ स्मरणं संस्कारः,

---

१. अन्यदिति तत्त्वस्य भिन्नत्वात् । एवं. ग.
२. प्रत्यायक. ग.
३. अनयेति. क.
४. तस्या न. क.

बृहती

**स्मरणमपि तथैव । अथ स्मृतिकार्यान्यथानुपपत्त्या कश्चित्पदार्थविशेषः कालान्तरावस्थायी विद्यत इति कल्प्यते ; असावपि प्रतिवर्णविषय एव शक्यते कल्पयितुम्, एकैकवर्णविषयत्वादुपलब्धेः, तदनुसारित्वाच्च स्मृतेः, तत्कार्यत्वाच्च संस्कारस्य । तस्माद्वर्णोपलब्धिवदसावपि न कारणम् ।**

पञ्चिका

आत्रह—**स्मरणमपि तथैव** । यथैवोपलब्धिस्तथैवाकारणम्, अयौगपद्यादेव । **अथ स्मृतिकार्यान्यथानुपपत्त्या कश्चित्पदार्थविशेषः कालान्तरावस्थायी विद्यत इति कल्प्यते** । अनुभूत एव वस्तुनि स्मरणं भवति, नाननुभूते ; तत्र यद्यनुभवः कश्चिदतिशयमात्मनि नादध्यात्, तदानुभूताननुभूतयोरविशेषादुभयत्रापि स्मृतिः स्यात् ; न चोभयत्रापि ; अतश्चेयं व्यवस्थया स्मृतिरुपजायमाना अनुभवाहितं संस्कारं प्रकल्पयति । सोऽपि च यद्यनुभववत्क्षणिकः स्यात्, कालान्तरे स्मृतिर्नोपपद्यते । तस्मात्कालान्तरावस्थायी संस्कारोऽस्तीति गम्यते ; तेनास्य स्थास्नुतया यौगपद्यमुपपद्यत इति, तत्राह—**असावपि प्रतिवर्णविषय एव शक्यते कल्पयितुम्, एकैकवर्णविषयत्वादुपलब्धेः, तदनुसारित्वाच्च स्मृतेः, तत्कार्यत्वाच्च संस्कारस्य** । अस्यार्थः—संस्कारो हि वर्णस्मृतिजनकतया वर्णान् स्मृतौ युगपल्लम्भयन्नर्थप्रतीतौ कारणतां यायात् ; स चैकैकवर्णविषय एव, न सकलवर्णविषयः । कस्मात् ? उपलब्धिभिराधीयन्ते संस्काराः, उपलब्धयश्च प्रत्येकवर्णविषया एव ; तेन कारणमुखेन तावदेकवर्णविषयः संस्कारः । तथा च कार्यमपि । यत्संस्कारस्य कल्पकम्, तदपि प्रत्येकवर्णविषयमेव, उपलब्ध्यनुसारित्वात्स्मृतेः; उपलब्धं हि स्मर्यते, नानुपलब्धम् । न च समुदिता वर्णा उपलब्धा इति न समुदितवर्णविषया स्मृतिः, तत्कार्यत्वाच्च संस्कारस्य । सैव स्मृतिः कार्यं यस्य स तत्कार्यः, तस्य भावस्तत्कार्यत्वं तस्मात् । एतदुक्तं भवति—स्मृतितः संस्कारः कल्प्यमानः कार्यानुरूप्यात्प्रतिवर्णविषय एव कल्पनीय इति । **तस्माद्वर्णोपलब्धिवदसावपि न कारणम्** । ननु भवतु स्मृतिहेतुः संस्कारः प्रतिवर्णविषयः; अन्य एवापूर्वः प्रतिवर्णजनितोऽर्थप्रतीतिहेतुरस्तु, तत्रा-

बृहती

न च स्मृतिज्ञानशून्यः संस्कारोऽस्तीति प्रमाणमस्ति । दर्शयति च प्रत्येकवर्णविषयमेव संस्कारम्---"पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः" इति ब्रुवन् । तस्मादुपलब्धिस्मृतिभ्यां किमभ्यधिकमस्यार्थप्रतिपत्तौ सामर्थ्यं मन्यते भाष्यकारः ? स्फोटवादिनो वा कथम्—इत्येतदप्यनुत्तरम् ; न ह्यभ्युपगतिरर्थसिद्धौ हेतुः । तस्मादुपवर्णनीयोऽयं ग्रन्थः । अथ कालान्तरावस्थायितैव विशेषः, तन्न; परस्परासम्बन्धे किमवस्थितिः करिष्यति ? अथार्थप्रतिपत्तिरेव सम्बन्धे हेतुः, एवमितरेतराश्रयता

पञ्चिका

ह—न च स्मृतिज्ञानशून्यः संस्कारोऽस्तीति प्रमाणमस्तीति । अर्थप्रतीतिलक्षणकार्यस्य विवर्तेनाप्युपपत्तेरिति वक्ष्यति । दर्शयति च प्रत्येकवर्णविषयमेव संस्कारम्—"पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः" इति ब्रुवन् । पूर्ववर्णाः संस्कारजनकाः, अन्त्या वर्णा नेत्येतद्ग्रन्थात् संभूय वर्णाः संस्कारं नारभन्ते—इति ज्ञायते । तस्मादुपलब्धिस्मृतिभ्यां किमभ्यधिकमस्यार्थप्रतिपत्तौ सामर्थ्यं मन्यते भाष्यकारः ? नास्याधिकं सामर्थ्यमस्तीति भावः । ननु यथा अर्थप्रतिपत्तिरनुपपन्ना तथा स्फोटाभिव्यक्तिरप्यनुपपन्ना ; यस्मान्नैकैकेन वर्णेन ध्वनिना वा स्फोटोऽभिव्यज्यते । न च नाभिव्यज्यतामिति वाच्यम्, अनभिव्यक्तादर्थप्रत्ययप्रसङ्गात् । न च समुदितैः, समुदायासम्भवात् । न च भागशोऽभिव्यक्तिः, भागाभावात् । तस्मादर्थप्रतिपत्तिरेव परमस्तु वर्णेभ्यः, किं स्फोटकल्पनयेति ; तत्राह—स्फोटवादिनो वा कथम्—कथं स्फोटाभिव्यक्तिरित्यनुत्तरं सिद्धान्तिनः । न ह्यभ्युपगतिरर्थसिद्धौ हेतुः । यत्खल्वनुपपन्नम्, तदनुपपन्नमेव; न चाभ्युपगमादुपपन्नता भवति । तस्मादुपवर्णनीयोऽयं ग्रन्थः । अथ कालान्तरावस्थायितैव विशेषः । उपलब्धिस्मृती क्षणिके, संस्कारस्तु कालान्तरावस्थायीति तस्मादधिकत्वम् । तन्न ; परस्परासम्बन्धे किमवस्थितिः करिष्यति ? एकैकवर्णविषयस्मृतिहेतुत्वात्तस्य, स्मृतीनां च यौगपद्याभावात् स्थायितापि नोपकारिणी । अथार्थप्रतिपत्तिरेव सम्बन्धे हेतुः । अर्थप्रतिपत्तिरन्य-

भाष्यम्

माख्यातेनाचष्टे 'व्रजति, पचति'—इत्युपक्रमप्रभृति अपवर्ग-पर्यन्तम्" इति यथा । न शास्त्रकारवचनमप्यलमिममर्थ-मप्रमाणकमुपपादयितुम् ।

बृहती

प्राप्नोति । भवत्विति चेत् , न तत्त्वावगमे युक्तोऽयमभ्युपगमः । कथं तर्हि बीजाङ्कुरादिषु ? दर्शनात्—इति यद्युच्यते, तत इहापि दर्शनं शक्यते वक्तुम् । न, विवर्तप्रतिपक्षसम्भवात् ; अर्थावगतिर्हि कारणमात्रस्य हेतुतां प्रतिपद्यते, न संस्कारसम्बन्धस्यैव । बीजाङ्कुरादिषु विशेषदर्शनादुपपन्नम् ;

पञ्चिका

थानुपपन्ना युगपत्सर्ववर्णविषयां स्मृतिं कल्पयति ; स्मृतिरपि संस्काराणां परस्परं संभूयकारितामित्यर्थप्रतिपत्तिरेव संस्काराणामन्योन्यसम्बन्धे हेतुः । उत्तरम्—**एवमितरेतराश्रयता प्राप्नोति** । वर्णेभ्य एव ह्यर्थप्रतिपत्तौ निश्चितायां परस्पर-सम्बन्धकल्पना, परस्परसम्बन्धाच्च वर्णेभ्य एवार्थप्रत्ययो वाच्यः; स्फोटादप्यर्थ-प्रतिपत्त्युपपत्तेः[1] । भवत्वितरेतराश्रयता न दोषमावहेद्विवर्तवादिन इवेति चेत् । **न तत्त्वावगमे युक्तोऽयमभ्युपगमः । कथं तर्हि बीजाङ्कुरादिषु** । बीजादङ्कुरः, अङ्कुराद्[2]बीजमिति तत्रापि कथमितरेतराश्रयता न भवति ? **दर्शनादिति यद्युच्येत** । दृश्यते तावद्बीजादङ्कुरोऽङ्कुराद्बीजम् ; न च दृष्टेऽनुपपत्तिरिति यद्युच्येत । **तदिहापि दर्शनं शक्यते वक्तुम्** । अर्थप्रतिप[3]त्तिर्हि वर्णप्रतीत्यनुरोधिनी दृश्यते, तेनैतद्दर्शनं सिद्धम् ; विवर्तस्य प्रतिपक्षस्य सम्भवात् विवर्तादप्यथर्प्रतीतिसम्भवा-दित्यर्थः । **अर्थावगतिर्हि कारणमात्रस्य[4] हेतुतां प्रतिपद्यते** । कारणमात्रं गम-यति, न संस्कारसम्बन्धस्य हेतुतां प्रतिपद्यते । बीजाङ्कुरयोस्तु कारणविशेष-दर्शनादुपपन्नम्, साक्षादेव बीजादङ्कुरोत्पत्तेर्दर्शनादङ्कुराच्च बीजोत्पत्तेः । इह त्वानु-

---

१. उत्पत्तेः. ग.
२. Added. च. ग.
३. प्रतीति- ग.
४. Omitted स्य. ग.

बृहती

इह त्वानुमानिकत्वात् संस्कारस्य विशेषोपलब्धिर्नोपपद्यते। तस्माद्विवर्तमेवोपपन्नतरं मन्यामहे। अत इदानीमिदमप्ययुक्तम्। किमयुक्तम्? सा च शब्दकल्पना चेति। कथमयुक्तम्? विवर्तपक्षे हि का नामेयं शब्दकल्पना? यस्मादध्यासितोपाध्यध्यासितविशेषं सर्वप्रमाणावगम्यमेकं वस्त्वित्युक्तम्, तस्मादशब्दज्ञतैवेयं यदुत भिन्नयोरपि शब्दार्थयोरौत्पत्तिकः सम्बन्धोऽभिधीयते। नन्वेकत्ववादिनोऽपि नैवायं विभागः शक्यते वक्तुम्—ज्योतिष्टोमोऽयम्, दर्शपूर्णमासाविमौ—इति; एकत्वे हि न वाक्यैकत्व एवावस्थितिः, किन्तु सर्ववाक्यानामेकवाक्यता प्राप्नोति वर्णानामिव पदे, पदानामिव वाक्ये। कस्मात्? एकत्वावगमादेव; भवति हि सर्ववाक्येषु 'शब्दः शब्दः' इत्येका बुद्धिः, सर्ववाक्यार्थेषु च 'शब्दार्थः शब्दार्थः' इति।

पञ्चिका

मानिकत्वात्संस्कारस्य वर्णविषयस्य कारणविशेषोपलब्धिर्नोपपद्यते। तस्माद्विवर्तमेवोपपन्नतरं मन्यामहे। यतो विवर्त एवोपपन्नतरः। अत इदानीमिदमप्ययुक्तम्। किमयुक्तम्? सा च शब्दकल्पना चेति। कथमयुक्तम्? विवर्तपक्षे हि का नामेयं शब्दकल्पना? यस्मादध्यासितोपाध्यध्यासितविशेषं सर्वप्रमाणावगम्यमेकं वस्त्वित्युक्तम्। तस्मादशब्दज्ञतैवेयम्, यदुत भिन्नयोरपि शब्दार्थयोरौत्पत्तिकः सम्बन्धोऽभिधीयते। भिन्नयोर्हि वाच्यवाचकलक्षणः सम्बन्धोऽभ्युपगमनीयः। स चोक्तेन न्यायेन नास्तीत्युच्यते पूर्वपक्षवादिना। उच्यते[1]—नन्वेकत्ववादिनोऽपि नैवायं विभागः शक्यते[2] वक्तुम्—ज्योतिष्टोमोऽयं दर्शपूर्णमासाविमाविति। कस्मादित्यत्राह—एकत्वे हि न वाक्यैकत्व एवावस्थितिः, किं तु सर्ववाक्यानामेकवाक्यता प्राप्नोति, वर्णानामिव पदे पदानामिव वाक्ये। कस्मात्? एकत्वावगमादेव; भवति हि सर्ववाक्येषु—शब्दः शब्दः—इत्येका बुद्धिः। तेन वाक्यानि तावदभिन्नानि। वाक्यवदेव च न वाक्यार्थो भिद्यते। सर्ववाक्यार्थेषु च 'वाक्यार्थः, वाक्यार्थः[3]' इत्येका बुद्धिरस्ति। तद्वशादप्येकता प्राप्नोति। तदिदमभिन्नं सर्वमेव ज्योतिष्टोमादिकर्म-

---

१. Omitted उच्यते. ग.
२. शक्यतेऽवगन्तुम्. ग.
३. Omitted वाक्यार्थः. ग.

भाष्यम्

अपि च नैवैतदनुपपन्नार्थम्; अक्षरेभ्यः संस्काराः, संस्कारादर्थप्रतिपत्तिः—इति संभवत्यर्थप्रतिपत्तावक्षराणि निमित्तम् । गौण एवार्थप्रतिपत्तौ शब्द इति चेत् न

बृहती

तदिदमभिन्नमेव ज्योतिष्टोमादि कर्मजातं प्राप्नोति । दृश्यन्ते चाधिकारभेद-विरुद्धाश्चाविरुद्धाश्च । विरुद्धाः विरुद्धफलाः, अविरुद्धाश्च अविरुद्धफलाः; न चैतदेकत्व उपपद्यते । सत्यं नैकार्थत्व इदमुपपद्यते । भिन्नार्थानि चैतानि वाक्यानि । एकार्थप्रतिपत्त्यर्था चैकता; न चात्रैकार्थतावसीयते । तस्मादेकस्मिन् वाक्ये पदवर्णापलापो युक्तः । वाक्यान्तरेषु किंकृतो वाक्यान्तरस्यापलापः ? तस्मान्नेयं विरुद्धाविरुद्धचोदनोपपद्यते । शब्दप्रामाण्यवादिना ह्यर्थसम्बद्धः शब्दशब्देनोच्यते, न काकवाशिताद्यपि श्रोत्रग्राह्यम् । ननु श्रोत्रादिभेदमुपवर्णयता सर्वमेतदविद्याजालमित्युक्तम्;

पञ्चिका

जातं प्राप्नोति । न चैतदङ्गीकर्तुं शक्यम्; तदाह—दृश्यन्ते चाधिकारभेद-[1] विरुद्धाश्चाविरुद्धाश्च; विरुद्धा विरुद्धफलाः अविरुद्धाश्च अविरुद्धफलाः । तत्र विरुद्धाः कृष्णलचरुसर्वस्वारादयः, आयुर्मरणयोः फलयोर्विरोधात्; अवि-रुद्धाश्चाग्निहोत्रादयः । न चैतदेकत्वे वाक्यानामुपपद्यतेऽनेकार्थत्वम् । समाधत्ते—सत्यं नैकार्थत्व इदमुपपद्यते । भिन्नार्थानि[2] चैतानि वाक्यानि । साक्षादर्थ-भेदस्यावगम्यमानत्वात् । ननु च वाक्यानामेकत्वेन तदर्थानामप्येकता तत्राह—एकार्थप्रतिपत्त्यर्था[3] चैकता । एकवाक्यत्वमन्तरेणार्थप्रतिपत्त्यनुपपत्तेरेकं वाक्यमङ्गी-क्रियते; न[4] चात्र भिन्नेषु वाक्येष्वेकार्थतावसीयते । तस्मादेकस्मिन् वाक्ये पदवर्णापलापो युक्तः । वाक्यान्तरेषु किंकृतो वाक्यान्तरस्यापलापः ? तस्मान्नेयं विरुद्धाविरुद्धचोदनोपपद्यते । शब्दप्रामाण्यवादिना[5] ह्यर्थसम्बद्धः शब्दशब्देनोच्यते, न काकवाशिताद्यपि श्रोत्रग्राह्यम् ।

---

१. कारभेदाविरुद्धाश्च वि- ग.
२. भिन्नार्थैकार्थानि. ग.
३. Omitted एक. ग.
४. न चाभिन्नेषु. ग.
५. शब्दप्रमाणवादिनश्चार्थसम्ब-न्धः शब्दः शब्दोऽभिमतः. ग.

भाष्यम्

गौणोऽक्षरेषु निमित्तभावः, तद्भावे भावात्, तदभावे चाभावात्। अथापि गौणः स्यात्, न 'गौणः शब्दो मा भूत्' इति प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्यः परिकल्पयितुम्;

बृहती

किमिदमिदानीमर्धजरतीयमुपन्यस्यते ? अनभिप्रायज्ञो देवानां प्रियः, यतो ब्रह्मण्यसावभेद उक्तः। तद्रूपतया केन वा भेदोऽभिधीयते, शास्त्रावगतौ च केन वा भेदोऽपह्नोतुं शक्यते श्रोत्रादीनामिव ? सत्यं नापह्नूयते; किन्त्वविद्या प्राप्नोति; विद्या चेष्यते वैदिकोऽर्थः। कथमविद्यातोऽभ्युदयः शक्यते वक्तुम् ? अविद्या हि प्रत्यवायस्य निमित्तम्। सत्यं यथा भवानाह। प्रत्यवायस्त्वापेक्षिकः; सर्वं हि क्षयि प्रत्यवा-

पञ्चिका

तेनार्थभेदादर्थप्रतिपादकशब्दभेदो युक्तः। ननु च श्रोत्रादिभेदमविद्याकल्पितमित्युपवर्णयता सर्वमेतदविद्याजातमित्युक्तम्। किमिदमर्धजरतीयम् अर्धेन जरत्यर्धेन तरुणीतिवदिदमुपन्यस्यते ? "समासाच्च तद्विषयात्" इतीवार्थे छः। अत्र वाक्यवाक्यार्थयोर्भेद एवेति। अत्र समाधत्ते—अनभिप्रायज्ञो देवानां प्रियः। यतो ब्रह्मणि ब्रह्मावस्थायामसावभेद उक्तः; तद्रूपतया केन वा भेदोऽभिधीयते ? शास्त्रार्थतया वा केन भेदोऽपह्नोतुं शक्यते श्रोत्रादीनामिव ? अविद्यानिबन्धनो भेदः, परमार्थतस्त्वभेद इत्याशयः। पुनराक्षिपति—सत्यं नापह्नूयते। त्वया भेदः। किन्तु अविद्या प्राप्नोति, विद्या चेष्यते वैदिकोऽर्थः। अन्यथा—कथमविद्यातोऽभ्युदयः शक्यते वक्तुम् ? अविद्या हि प्रत्यवायस्य निमित्तम्। परिहरति—सत्यं यथा भवानाह; प्रत्यवायस्त्वापेक्षिकः। किञ्चिदिष्टमपि किञ्चिदपेक्ष्य प्रत्यवाय उच्यते यथा स्वर्गो मोक्षम् अन्तवत्त्वात्। तेन सर्वं क्षयि कर्मजातं प्रत्यवायायैवान्तवत्त्वादिदोषात्। स च प्रत्यवायो विध्यर्थोऽभ्यु-

१. श्चापेक्षिकः. ग.

भाष्यम्

न हि 'अग्निर्माणवकः'—इत्युक्तेः 'अग्निशब्दो गौणो मा भूत्' इति 'ज्वलन एव माणवकः'—इत्यध्यवसीयते। न च प्रत्यक्षो गकारादिभ्योऽन्यो गोशब्दः इति, भेददर्शनाभावात्, अभेददर्शनाच्च ; गकारादीनि हि प्रत्यक्षाणि, तस्मात् 'गौः'—इति गकारादिविसर्जनीयान्तं पदमक्षराण्येव। अतो न तेभ्यो व्यतिरिक्तमन्यत् पदं नामेति। ननु संस्कार-

बृहती

यायैव ; किन्तु प्रत्यवाय एवैकत्र स च उपायश्चान्यत्र इति विशेषः। तस्मान्न किञ्चिदत्र पूर्वं परेण विरुध्यते। ननु च वाक्यार्थयोर्भेदेऽपि कर्मोत्पत्तिवाक्यैर्गुणवाक्यानां कथमर्थत एकता शक्यते वक्तुम्? उक्तम्—भिन्नत्वेऽप्येकानुष्ठानसिद्धिरिति नित्यकाम्यप्रयोगयोरिव। तस्मात्सर्वमुपपन्नम्।

पञ्चिका

पायश्च सिध्यतीत्यनभ्युदयार्थेभ्योऽप्यापातरमणीयेभ्यो विशेषः, तदाह—किन्तु प्रत्यवाय एवैकत्र। ब्रह्महत्यादौ। स चोपायश्चान्यत्र। वैदिकोऽर्थम् इति विशेषः। तस्मान्न किञ्चिदत्र पूर्वमभेदाभिधानं परेण अविद्यानिबन्धनभेदाभिधानेन विरुध्यते। ननु यदि वाक्यानां वाक्यार्थानां चैक्यं नास्ति, तदा वाक्यवाक्यार्थभेदेऽपि कर्मोत्पत्तिवाक्यैः "अग्निहोत्रं जुहोति" इत्येवमादिभिर्गुणवाक्यानां "दध्ना जुहोति" इत्येवमादीनां कथमर्थत एकत्वं शक्यते वक्तुं भिन्नार्थानामिति भावः। उक्तम्—भिन्नत्वेऽप्येकानुष्ठानासिद्धिरिति। न हि "दध्ना जुहोति" इत्येवमादिभिर्भिन्नमनुष्ठानं चोद्यते नित्यकाम्ययोरिव प्रयोगयोः। यथा काम्यस्याग्निहोत्रादिप्रयोगस्य नित्यस्य चैकानुष्ठानसिद्धिः। तस्मात्सर्वमुपपन्नमस्मिन्नपि[1] पक्षे।

---

१. तस्मिन्. ग.

बृहती

स्यादेतदेवम्, यद्येका बुद्धिः स्यात् ; न ह्यत्रैका बुद्धिरस्ति। ननु च सर्वशब्देषु 'शब्दः शब्दः' इत्येका बुद्धिरस्ति ; असत्यां चैकबुद्धौ शब्दशब्दवाच्यतापि न स्यात् सर्वशब्दानाम्। एकनिमित्ता ह्येकशब्दवाच्यता, न पुनरेकताकृता। अत्र चैकं निमित्तमस्ति श्रोत्रग्राह्यता ; श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः। किं पुनः कारणम्—श्रोत्रग्राह्यतैवात्र गृह्यते, न पुनर्गोत्वादिवत् शब्दत्वमेवाश्रीयते ? सामान्यविशेषविषयमज्ञानमत्रापराध्यते एवं चोदयतः। किं पुनः सामान्यविशेष-

पञ्चिका

इदानीं सिद्धान्तमुपक्रमते—स्यादेतदेवम्, यद्येका बुद्धिः स्यात् ; न ह्यत्रैका बुद्धिरस्ति। ननु च सर्वशब्देषु 'शब्दः शब्दः' इत्येका बुद्धिरस्ति। यदि चैका बुद्धिर्न स्यात् तदा[1] असत्यां चैकबुद्धौ शब्दशब्दवाच्यतापि न स्यात् सर्वशब्दानाम्। यथा रूपादिषु शब्दशब्दो न प्रवर्तते, तथा गकारादिष्वपि न प्रवर्तेत। अत्र प्रतिसमाधत्ते—एकनिमित्ता ह्येकशब्दवाच्यता, न पुनरेकताकृता। अस्यार्थः—न वर्णेष्वेकाकारा[2] बुद्धिरस्ति ; यस्मादेकेन निमित्तेन विनैकशब्दप्रवृत्तिर्न भवति। तच्च निमित्तं क्वचिज्जातिः क्रिया गुणो द्रव्यं वा—गौः गन्ता शुक्लो विषाणीति यथा; क्वचिद्वस्तुन एवैकत्वम् यथा[3] तस्मिन्नेव वस्तुनि पुनः शब्दप्रवृत्तौ आकाश[4]माकाशमिति ; न पुनरेकत्वमेवास्या निमित्तम्। अतो नैकान्तिकत्वादेकशब्दप्रवृत्तेर्न सिध्यत्येका बुद्धिः। ननु निमित्तान्तराभावाद्वस्तुस्वरूपैकतैव निमित्तमेकशब्दप्रवृत्तेरित्याशङ्क्याह—अत्र च शब्दशब्दप्रवृत्तावेकं निमित्तमस्ति श्रोत्रग्राह्यत्वम् ; यतः श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः तस्माच्छ्रोत्रग्राह्यतैव शब्दशब्दप्रवृत्तौ निमित्तम्। न च सत्त्ववर्णत्वादिभिर्व्यभिचारः, सत्त्वादीनामश्रोत्रग्राह्यत्वात् ; न हि सत्त्ववर्णत्वादिसामान्यमस्तीन्द्रियग्राह्यमिति समनन्तरमेव निवेदयिष्यामः। किं पुनः कारणम्? केन पुनः कारणेनेत्यर्थः। "निमित्तकारणहेतुषु" इति प्रथमा द्वितीया वा तृतीयाद्यर्थे। श्रोत्रग्राह्यतैवात्र निमित्तं गृह्यते अङ्गीक्रियते, न पुनर्गोत्वव-

---

१. Omitted तदा अ- ग.
२. Omitted आकार. ग.
३. Added तस्मात्. क.
४. Omitted आकाश. ग.

बृहती

विषयमज्ञानम्? इदमिदमज्ञानम्--यस्मिन् पदार्थग्रहणे सति पूर्वावमर्शो भवति, तत् सामान्यम्; न च गकारादिष्वेकवर्णग्रहे सति वर्णान्तरावमर्शो भवति पाचकादिष्विव, तस्मात् क्रियानिबन्धनैवेयं शब्दशब्द-

पञ्चिका

च्छब्दत्वमेवाङ्गीक्रियते निमित्तम्? अत्रोत्तरम्—सामान्यविशेषविषयमज्ञानमत्रापराध्यते एवं चोदयतः। एवं चोदयन् भवान् सामान्यं विशेषं वा न जानातीति लक्ष्यते; यदि सामान्यं विशेषं वा जानीयात्, नैवं चोदयेत्। किं पुनः सामान्यविशेषविषयं ज्ञानम् यन्मम नास्तीति पृच्छति। तत्र प्रतिवदति। यस्मिन् हि पदार्थग्रहणे सति पूर्वदर्शनसम्बन्ध्यवमर्शो भवति, तत्सामान्यम् यथा विलक्षणशाबलेयादिपदार्थग्रहणे सति—गौः गौः—इत्यादि पूर्वदृष्टाकारानुसन्धानं यत्र=यद्विषयम्, तत्सामान्यं गोत्वादि; अत्र च समानवर्तिकावर्तिनीषु ज्वालासु ज्वालात्वं सामान्यं नास्तीति दर्शयितुं पदार्थग्रहणे सतीति विशेषणमुपात्तम्; न हि ज्वालानां भेदकं किञ्चिदवबुध्यते। एकबुद्धिरपि तत्र भेदाग्रहणनिबन्धनेति शब्दाधिकरणे वक्ष्यामः। न च गकारादिषु एकवर्णग्रहणे सति वर्णान्तरावमर्शो भवति। वर्णान्तरेऽनुभूतस्याकारस्यावमर्शो न भवतीत्यर्थः। पाचकादिष्विव। यथा बहुषु पुरुषेषु पाचकेषु नैकाकारा बुद्धिरस्ति, तथेहापि। एतेन सत्त्वादिसामान्यानि प्रत्युक्तानि; न हि जातिगुणक्रियाद्रव्येषु साधारणाकारावमर्शोऽस्ति[1], सदादिशब्दानां[2] प्रमेयादिशब्दवत्प्रवृत्तिसंभवात्। किं पुनः सच्छब्दस्य प्रवृत्तिनिमित्तम्? प्रमाणसम्बन्धः। नन्वेवं तर्हि प्रमाणसम्बन्धस्यापरिकल्पनेऽप्रमीयमाणदशायां सच्छब्दानुविद्धा बुद्धिर्न स्यात्—अस्ति घटः, आसीद्घटः, भविष्यति घटः--इति; न खलु पचिक्रियासम्बन्धानवबोधे 'पाचकः' इति कश्चिद्व्यपदिशति[3]। यदि तु प्रमाणोत्तरकालभाव्येवायं व्यपदेशः स्यात्, तथापि त्रिधा भेदो नोपपद्यते। सर्वत्र प्रमाणस्यातिवृत्तत्वात् 'आसीत्' इति भवेत्; सत्ताख्ये तु महासामान्ये तस्य चातीतत्वात् 'आसीत्' इत्युच्यते यथा[4] वर्तमानत्वात् 'अस्ति' इति, आगामि-

---

१. वा साधारण. ग.

२. प्रमेयाना. ग.

३. कश्चिदुपदिशाति. ग.

४. तथा. क.

बृहती

वाच्यता ; कस्यायं विवर्तः, कस्य च श्रोत्रादय उपाधितामापद्यन्ते ? तस्माद्विडम्बनैषा "विवर्ततेऽर्थभावेन" इति । तस्मात् कार्यत एव सम्बन्धोऽपि

पञ्चिका

त्वाच्च 'भविष्यति' इति । अत्र प्रतिविधीयते—यस्यपि सामान्यं व्यतिरिक्तमस्ति तस्यापि तत्किमिति क्वचिद्विचलितमागमिष्यति वा विनष्टत्वादाश्रयभूतस्य द्रव्यस्योत्पाद्यमानत्वाच्चेति चेत्, कः पुनर्विनाशः ? सत्तापगम एवेति चेत् । सूक्तमिदं सत्तापगमात्सत्तापगम इति । अथ स्वरूपापगमो विनाशः, तथा भाविन्यपि स्वरूपस्यैव भावित्वमिति अङ्गीकृतम् ; तर्हि स्वरूपसत्तापि भावानामस्ति । सा चेदभ्युपगता, तदा तस्या एव त्रैकाल्यात् 'आसीत्, अस्ति, भविष्यति' इत्युपपन्नस्त्रेधा व्यपदेशः । महासामान्यं च सत्तामवजानीमहे ; न स्वरूपसत्तामपि । एतेनेदमपि निराकृतम्, यदुच्यते—निवृत्तसकलप्रमाणसम्बन्धे वस्तुनि सत्तासन्देहो न स्यात्, प्रमाणसम्बन्धस्य निरस्तत्वात्तल्लक्षणत्वाच्च सत्तायाः—इति ; यतो निर्वृत्तसकलप्रमाणव्यापारे स्वरूपमेव सन्दिह्यते । भिन्नेषु तु पदार्थस्वभावेषु सच्छब्दप्रवृत्तौ प्रमाणसम्बन्धयोग्यतैव निमित्तमित्युच्यते ; न पुनः प्रमाणसम्बन्ध एव सच्छब्दवाच्यः यथा बहुषु पुरुषेषु परस्परभिन्नेष्वेकपचिक्रियोपाधिवशेन पाचकशब्दो निविशत इति नानुपपन्नम् । प्रकृतमुपसंहरति—तस्मात्क्रियानिबन्धनैवेयं शब्दशब्दवाच्यता । कस्यायं विवर्तः, कस्य च श्रोत्रादय उपाधितामापद्यन्ते । येनैकरूपोऽपि श्रोत्राद्युपाधिभेदेन भिन्नो भातीति कल्प्यताम् ; एकस्य वस्तुनो भावात् । तस्माद्विडम्बनैषा—"विवर्ततेऽर्थभावेन" इति । मुखादौ तु युक्तम्, आदर्शादिष्वेकमुखाकारानुसन्धानेन सर्वप्रतीतीनामुदयात् । यत एव विवर्तप्रतिपक्षभूतोऽर्थप्रतिपत्तिहेतुर्नास्ति ; तस्मादर्थप्रतिपत्तिलक्षणात् कार्यादेवान्यथानुपपन्नात्संस्काराणां सम्बन्धोऽप्यभिन्नस्मरणाख्यकार्यजनकत्वरूपः कल्पनीयः; नोपलब्धिस्मृत्योः, अनवस्थानदर्शनात् ।

---

१. यतो मितसकल. क. ख.

भाष्यम्

कल्पनायामप्यदृष्टकल्पना । उच्यते—शब्दकल्पनायां सा च शब्दकल्पना च । तस्मादक्षराण्येव पदम् ॥

बृहती

कल्पनीयः संस्काराणाम्, नोपलब्धिस्मृत्योः, अनवस्थानदर्शनात्। यदप्युक्तम्—अयुक्तं सा च शब्दकल्पना च —इति, तत्राप्यर्थापरिज्ञानमेवापराध्यते; इदं हि तत्रोच्यते—परमार्थस्योपाधिकल्पना, अविद्यमानस्य च

पञ्चिका

वर्णेषु प्रत्येकानुभवाहितानां भावनानामविशेषाद्यौगपद्याच्च मिलितसकलवर्णगोचरस्मरणकरणत्वादर्थप्रतीतिः किं न भवेत्, तथा नानापुरुषसमुच्चारितेष्वप्येकैकोपलम्भानामभेदात्? अत्रेदमेव तावदुत्तरं वाच्यम्—कार्यतः साहित्ये कल्प्यमाने यथाकार्यमेव कल्पयितुं न्याय्यमिति; किन्तु क्रमविशेषपरिगृहीता एव वर्णा अर्थप्रतीतिहेतवः । स्यान्मतम्—स्वभावतो नित्यानां विभूनां वर्णानां कालनिबन्धनस्य देशनिबन्धनस्य पौर्वापर्यस्याभावादुपलब्धिनिबन्धनं तदुपेयम्; एका चेयं सकलस्मरणात्मिका बुद्धिरिति न तन्निबन्धनः क्रम उपपद्यते इति । तदिदमसाम्प्रतम्; उक्तं स्मरणात्मिका बुद्धिरियमिति । तेन पूर्वोपलम्भसम्बन्धसम्भवं पौर्वापर्यमालोचयन्ती जायत इति किमनुपपन्नम्? नन्वेकक्षणभाविनी स्मृतिः कथमभिन्नमवध्यवधिमद्भावं भासयति? क्रमवदवगतनानावर्णविषयत्वादस्याः स्मृतेः। एतेन नदी-दीनादिषु पदभेदबुद्धिर्व्याख्याता, क्रमभेदेन तदुपपत्तेः। एवं च विच्छेदेनोच्चरितेष्वर्थप्रत्ययो न भवति, युगपत्स्मरणाभावात्। भाष्ये च "पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णो वाचकः" इत्यनास्थावादः। परमार्थतस्तु सर्ववर्णेषु स्मरणारूढेष्वेवार्थप्रत्ययः, अन्विताभिधानस्यान्यथानुपपत्तेरिति वक्ष्यामः। यदप्युक्तम्—अयुक्तं सा च शब्दकल्पना चेति, तत्राप्यर्थापरिज्ञानमेवापराध्यते; इदं हि तत्रोच्यते। परमार्थस्यैव वर्णजनितस्योपाधिकल्पना, अविद्यमानस्यैकस्य वस्तुनः स्वरूपकल्पनेति। तदिदम्--सा च शब्दकल्पना चेति।

---

१. धीरियं. ग.
२. पर्यं पर्या-ग.
३. कथं भिन्नं. ग.
४. विवेकेन. ग.
५. Omitted न. ग.
६. Omitted तत्रापि-एवं. ग.

बृहती

कल्पना—इति। तदिदम् "सा च शब्दकल्पना च" इति। "सुरभिचन्दनादीनामाकृतिग्रन्थे परिहारं वक्ष्यामः" इत्युक्तम्। ननु च—शब्दादर्थं प्रतिपद्यामहे—इत्येतदिदानीं लौकिकं वचनं नोपपद्यते। किं गकारादयो न शब्दाः? शब्दास्ते बहवः, न शब्द एकः; 'शब्दात्' इति चैकवचनं पदाभिप्रायम्; न चैतत् पदमस्तीत्युपपन्नैवेयमनुपपत्तिः। तथा च शास्त्रकारैरपि पदाभिप्रायेणैवोपन्यस्तम्—"पूर्वापरीभूतं भावमाख्यातेनाचष्टे"—इति। कामं मोपपादि; अनुपपन्नार्थमपि हि लौकिकं वचनं दृष्टम्—दश दाडिमानि षडपूपाः—इति; लोके चानुपपन्नार्थमेव किञ्चित् दृष्ट्वा प्रयोगं व्याकरणशास्त्रं नियमाय प्रवृत्तम्। इह पुनर्नैवानुपपत्तिः; समुदायस्य निमित्तत्वात्

पञ्चिका

एवं तावत्परस्परं शब्दानामैक्यं नास्तीत्युक्तम्; इदानीं शब्दानामर्थानां च भेदं दर्शयति—सुरभिचन्दनादीनामाकृतिग्रन्थे परिहारं वक्ष्याम इत्युक्तम्। ननु च—शब्दादर्थं प्रतिपद्यामहे—इत्येतदिदानीं लौकिकं वचनं नोपपद्यते। सिद्धान्ती पृच्छति—किं गकारादयो न शब्दाः? येनानुपपत्तिः। पूर्वपक्षी ब्रूते—शब्दास्ते बहवः, न शब्द एकः; 'शब्दात्' इति चैकवचनं पदाभिप्रायम्। न च वर्णव्यतिरिक्तं पदमस्ति; वर्णाश्च बहवः; न तदभिप्रायेणैकवचनोपपत्तिरित्युपपन्ना युक्तिमतीयमनुपपत्तिर्लौकिकस्य वचनस्य सिद्धान्ते इति। तथा च शास्त्रकारैरपि पदाभिप्रायेणैवोपन्यस्तम्—"पूर्वापरीभूतं भावमाख्यातेनाचष्टे" इति। कामं मोपपादि। यस्मादनुपपन्नार्थमपि लौकिकं वचनं दृष्टम्—यान्येव दश दाडिमानि, तान्येव षडपूपाः—इति यथा। किं च यत एव लौकिकं वचनमनुपपन्नमपि संभवति, अत एव व्याकरणादि[1] तन्निवृत्त्यर्थं प्रवृत्तम्; तदाह—लोके चानुपपन्नार्थमेव किञ्चिद्दृष्ट्वा प्रयोगं व्याकरणशास्त्रं नियमाय[2] प्रवृत्तम्। अन्यथा अप्रसक्त एवापभ्रंश इति नारब्धव्यं व्याकरणम्। इह पुनर्नैवानुपपत्तिः, समुदायस्य निमित्तत्वात्। तस्य चैकत्वादेकवचनोपपत्तेः। अत्राह—ननु शब्दशब्दः समुदाये वर्तितुं

१. व्याकरणादि. ग. २. तन्नियमाय. क.

भाष्यम्

अथ 'गौः'—इत्यस्य शब्दस्य कोऽर्थः ? सास्नादिविशिष्टा आकृतिः—इति ब्रूमः । ननु आकृतिः

बृहती

कार्यैक्याच्चैकत्वोपचारः । तस्मात् शास्त्रकारवचनमप्यनयैव युक्त्योपपन्नम्, पदवाक्यनिर्देशश्च—गौः पदम्, अश्वः पदम्, लौकिकं वाक्यम्, वैदिकं वाक्यम्—इति च । तस्मात् गकाराद्येव पदम्, स एव शब्दः; नान्यद्व्यतिरिक्तमस्तीति सिद्धम् ॥

"अथ–गौः–इत्यस्य शब्दस्य कोऽर्थः" ?–इति नायं प्रश्न उपपद्यते। "अथ–गौः–इत्यत्र कः शब्दः ?"–इति युक्तम्; वर्णपक्षेऽपि हि वाचकता नोपपद्यते—इत्याशङ्कानिराकरणाय । अभिधेये हि न कचिद्विशेषः । आकृतिः व्यक्तिः गुणो वा भवतु; न ह्यौत्पत्तिकत्वे

पञ्चिका

नार्हति, न वाचकसमुदाये वाचकशब्दो वर्तत इति । कुत एतत् ? लोकत एवेति चेत्, एवं तर्हि वर्तत इत्येवेहि, एकवचनस्यान्यथानुपपत्तेः; निरस्तश्च विवर्तः । अपि च सर्वेषां वर्णानां मिलितानां अर्थप्रत्यायकत्वादेकाकारावस्थेत्यु-पपन्नमेकवचनम्, तदाह—कार्यैक्याच्चैकत्वोपचार इति । तस्माच्छास्त्रकार-वचनमप्यनयैव युक्त्योपपन्नम् । पदवाक्यनिर्देशश्चोपपन्नः गौः पदम्, अश्वः पदम्, लौकिकं वाक्यम्, वैदिकं वाक्यमिति च इत्यादिकः । तस्मा-द्गकाराद्येव पदम्; स एव शब्दो नान्यद्गकारादिव्यतिरिक्तमस्तीति सिद्धम् ॥

इति स्फोटवादः ।

"अथ गौरित्यस्य शब्दस्य कोऽर्थः ?" इति नायं प्रश्न उपपद्यते । ननु शब्दो निरूपितः, संप्रत्यर्थो निरूप्यत इत्यत्राह—अथ गौरित्यत्र कः शब्द इति युक्तम् । यत्पृष्टम् । वर्णपक्षे वाचकता नोपपद्यत इति वैयाकरणाना-माशङ्कानिराकरणाय । अभिधेये तु न कश्चिद्विशेषः । आकृतिर्वा गुणो वा

---

१. हि वाचकत्वं. ग.

बृहती

कश्चिद्विरोधः । अस्थायी चायं पक्षः; नायं राद्धान्ते यदुत—आकृतिवचनतैव सर्वशब्दानाम्—इति ; गुणवचनताप्यरुणादिषु दृष्टा, व्यक्तिवचनतोद्भिदादिषु । तस्मात् प्रश्नस्तावन्निष्प्रयोजनः । उत्तरमपि राद्धान्तविरुद्धम् । अथायमभिप्रायः—उदाहरणाभिप्रायम्—इति ; अत्रापि प्रश्नस्तावन्निष्प्रयोजनः, एवमुत्तरमपि । यदि शब्दस्य व्यक्तिरर्थः, अथापि सामान्यम् ; सम्बन्धे को विशेषः ? विशेषविवक्षायां च प्रयोजनं वक्तव्यम् । अथेदमुच्यते--

पञ्चिका

व्यक्तिर्वाभिधेया भवतु, तथापि सम्बन्धस्यौत्पत्तिकत्वे कश्चिद्विरोधो नास्ति ; यतः सम्बन्धौत्पत्तिकत्वौपयिकं चात्र प्रदर्शयितुं युक्तम् । अस्थायी चायं पक्षः। आकृतिगुणव्यक्तीनामभिधेयतेत्येवंरूपः । नायं मीमांसकानां राद्धान्तः, यदुत आकृतिवचनतैव सर्वशब्दानामिति ; गुणवचनताप्यरुणादिषु दृष्टा । गुणे सत्यरुणादीनां प्रयोगादसति चाप्रयोगात् । ननु प्रतिगुण्यरुणादीनां भेदादेकं सामान्यमङ्गीकर्तुमुचितम्, अन्यथा शब्दानां प्रवृत्त्यनुपपत्तेः । अत्राभिधीयते—भिन्नत्वमभिन्नत्वं वा वस्तुनो भिन्नाभिन्नावभासिबुद्धिनिबन्धनम्; तत्र तावदरुणिमादिषु न भेदबुद्धिरस्ति । यापि च पटुमन्दतादिभिर्विशेषैर्विशेषबुद्धिः, सापि न स्वरूपभेदमावहति, विशेषमात्रत्वात् । नन्वरुणिमादयः परमाणुषु पार्थिवेषु पाकजाः सर्वकार्यद्रव्येषु च कारणगुणपूर्वा[1] इत्युत्पत्तिमत्त्वादपरापरतैवावसीयते । मैवम् ; कस्यायमभ्युपगमः ? आकृतिवद्द्रव्येषु गुणः समवैतीति वयं प्रतिपद्यामहे । स गुणसमवायः कस्यचित्कथञ्चिदुदेत्यपैति च । न च समवायमपि नित्यमेकमभ्युपगच्छामः[2] ; तेन सकलद्रव्येष्वेकोऽरुणिमा अरुणपदाभिधानीय इति । व्यक्तिवचनतोद्भिदादिषु । कर्मविशेषनामधेयान्युद्भिदादीनि वक्ष्यति । तस्मात्प्रश्नस्तावन्निष्प्रयोजनः । उत्तरमपि राद्धान्तविरुद्धम्—"सास्नादिविशिष्टा आकृतिः" इति । किं तु एवं वाच्यम्—आकृत्यादयः—इति । अथायमभिप्रायः—उदाहरणाभिप्रायमेतदिति । "अथ गौरित्यस्य शब्दस्य कोऽर्थः" इत्युदाहृतं प्रश्ने, तेन तदीयमेव वाच्यमुपदर्शयितुम् "आकृतिः" इत्युक्तमिति । अत्रापि प्रश्नस्तावन्निष्प्रयोजनः । विशेषशब्दा-

---

१. पूर्वकाः. ग. २. अभ्युपैति. ग.

बृहती

व्यक्तिपक्षे सम्बन्धस्य सापेक्षता प्राप्नोति—इति, का कथा पाचकादिषु ? तत्र क्रियोपलक्षणमिति चेत्, इहाप्याकृतिर्भविष्यति। तत्र ह्यभिहिता क्रिया धातुभागेन; इह त्वनभिहिता जातिः नालमुपलक्षणाय—इति चेत्, कल्प्यतामभिधानम् ; न पुनः सापेक्षताभिधाने उपयोगमस्य पश्यामो निरपेक्षताभिधाने वा। तस्मान्मन्दप्रयोजनता प्रश्नोत्तरयोः।

अत्रोच्यते—'वाचकरूपैव सर्ववाच्येष्ववगतिः' इति मन्वानः 'शब्दार्थयोर्भेदो नोपपद्यते' इति पृष्टवान् पूर्वपक्षवादी। इतरस्तु—अविवे-

पञ्चिका

र्थविषयः। एवमत्र प्रष्टुमुचितम्—कः शब्दस्यार्थः—इति, न पुनर्गोशब्दमेव विशेषणाश्रित्य। उत्तरमपि निष्प्रयोजनम्; यस्माद्यदि गोशब्दस्य व्यक्ति-रर्थो यदि वा सामान्यमर्थः, सम्बन्धे को विशेष औत्पत्तिकत्वं[1] प्रति ? तेन विशेषा-भावादुत्तरमेव न दातुमुचितम्। तथार्थविशेषस्याकृतिलक्षणस्य विवक्षायां च प्रयोजनं वक्तव्यम्। एवं वक्तुमुचितम्[2]—आकृत्यादिः—इति। अथेद-मुच्यते—व्यक्तिपक्षे यदि व्यक्तिर्वाच्या स्यात्तदा, सम्बन्धस्य सापेक्षता प्राप्नोतीति विशेषणाकृतिवचनतां साधयितुं प्रश्नोत्तरे इति। का कथा पाचकादिषु ? पाचकादिशब्दा व्यक्तिवचनाः, तेषु सम्बन्धस्यानपेक्षत्वं कथमिति। तत्र क्रियो-पलक्षणमिति चेत्। अस्यार्थः—यद्यपि व्यक्तिवचनता तेषाम्, तथापि पाचकादिषु क्रियाया उपलक्षणभूताया विद्यमानत्वादुपाधिवशेन सम्बन्धग्रहणं सुकरमित्य-नपेक्षत्वम्; इहापि गवादिष्वाकृतिरुपलक्षणं भविष्यति, एवमाकृतितो गौरिति। ननु च पाचकादिषु युक्तमुपलक्षणत्वम्; तत्र ह्यभिहिता क्रिया धातु-भागेनेति भवेदुपलक्षणम्, इह त्वखण्डत्वाच्छब्दस्यानभिहिता जातिर्नालमुपलक्ष-णायेति। उत्तरम्—कल्प्यतामभिधानम्। यद्युपलक्षणता न संभवति। अयमभिप्रायः—यदत्र न्यायानुगतं तद्भवतु वाच्यत्वमुपलक्षणं वा, न पुनः सम्बन्धस्य सापेक्षताभिधाने निरपेक्षताभिधाने वा अस्योपयोगं पश्यामः। तस्मा-

---

१. -कानौत्पत्तिकत्वं प्रति. ग. २. हि युज्यते वक्तुम्. ग.

बृहती

कोऽस्य प्रयोगेऽभिधाने च; प्रायौगिकीं बुद्धिमभिधेयेऽध्यवस्यतीति तदपनुत्तये "सास्नादिविशिष्टा आकृतिः" इत्युक्तवान्। प्रदर्शनार्थं चैतत् अभिधानवत्।

पञ्चिका

न्मन्दप्रयोजनता प्रश्नोत्तरयोः। अत्रोच्यते— वाचकरूपैव सर्ववाच्येष्ववगतिरिति मन्वानः शब्दार्थयोर्भेदो नोपपद्यत इति पृष्टवान् पूर्वपक्षवादी। अस्यार्थः—पूर्वं गकारादिविसर्जनीयान्तं वर्णा एव पदमित्युपसंहृतम्। तदाचिक्षिप्सुः पृच्छति पूर्वपक्षवादी—"अथ गौरित्यस्य शब्दस्य कोऽर्थः" इति। अयं च तस्य भावः—वनमिति बहुषु वृक्षेष्वेकवचनान्तं पदं नोपपद्यते, शब्दरूपे त्वभिधेये युज्यते; तेन वाचकरूपैव सर्ववाच्येष्ववगतिः। तत्र यदि वर्णात्मकं पदं तदा स्पष्टभेदावभासप्रसङ्गः स्यात्। तस्मादन्यदेवेदं शब्दतत्त्वम्। तेनायं भाष्यस्यार्थः— गौरित्यस्य शब्दस्य कोऽर्थो भवतोऽभिमतः किं शब्दाद्व्यतिरिक्तः, येन वर्णा एव पदं ब्रवीषीति। अत्र च न बहिरर्थापह्नवः क्रियते, स्थापितत्वात्; किन्तु शब्दाभिधेयं शब्दाद्व्यतिरिक्तं न भवतीति पूर्वपक्षः क्रियते। इतरस्तु अविवेकोऽस्य प्रयोगेऽभिधाने च; प्रायौगिकीं बुद्धिमभिधेयेऽध्यवस्यति; तदपनुत्तये "सास्नादिविशिष्टा आकृतिः" इत्युक्तवान्। अस्यार्थः—अस्य वैयाकरणस्य पूर्वपक्षिणः प्रयोगे प्रयोगसाधौ अभिधाने अर्थसाधौ अविवेकः। नैवं विविनक्ति—अभिधानसाधुरर्थसद्भाव एव प्रयुज्यते, प्रयोगसाधुस्तु विनाप्यर्थेन प्रयुज्यत इति; तेन प्रायौगिकीं प्रयोगसाधुभावात्मिकां बुद्धिमभिधेयेऽध्यवस्यति। 'वस्तु भवतु बाह्यं शब्दव्यतिरिक्तमेवाव्यपदेश्यम्; अभिधेयं तु शब्दात्मकमेव' इत्येवं–विवेकमपश्यन् शब्दात्मकमभिधेयं मन्यते वैयाकरणः। तदपनुत्तये व्यतिरिक्तमभिधेयं दर्शयितुमितरः सिद्धान्ती सास्नादिविशिष्टा आकृतिरित्युक्तवान्। प्रदर्शनार्थं चैतदाकृतिरिति। अभिधानवत् यथाभिधानमुपलक्षणम् "गौरित्यस्य शब्दस्य" इत्यत्रान्ये शब्दा द्रष्टव्याः, तथा आकृतिरित्यप्युपलक्षणं व्यक्त्यादयोऽपि द्रष्टव्याः।

---

१. सर्ववाक्येषु. ग.
२. ह्यभिधेये. ग.
३. Omitted. शब्दस्य. ग.
४. पूर्वप्रयोगसाधौ. ग.
५. साधुरसद्भावः. ग.
६. Omitted. विवेक. क.

भाष्यम्

साध्यास्ति वा न वा इति । न प्रत्यक्षा सती साध्या भवितु-मर्हति ; 'रुचकः, स्वस्तिकः, वर्धमानकः'---इति हि प्रत्यक्षं दृश्यते । व्यामोह इति चेत्, न ; न असति प्रत्यय-

बृहती

"नन्वाकृतिः साध्यास्ति वा न वा"—इति अभिधेयतया शब्दरूपतां न जहातीत्युक्तवान् । ननु च तद्रूपापत्तावभावाभिधाने किं प्रयोजनम् ? अभिधेयाभिप्राय एवायमभाव उक्तः, न स्वरूपाभिप्रायः । "न प्रत्यक्षा सती साध्या भवितुमर्हति"–इति । यदि परं स्वरूपस्यैवाभावः साध्यते, तदैवानभि-धेयता ; न चाभावः शक्यते वक्तुं प्रत्यक्षगम्यत्वात् । "व्यामोह इति चेत्"

पञ्चिका

"नन्वाकृतिः साध्यास्ति वा न वा" इति भाष्यमाकृतिसद्भावमाक्षिपति ; त[1]च्चानुपपन्नम्, वृत्तिकारग्रन्थे साधितत्वादाकृतेरित्यतोऽन्यथा व्याचष्टे—नन्वा-कृतिः साध्यास्ति वा न वेत्यभिधेयतया शब्दरूपतां न जहातीत्युक्तवान् । अस्यार्थः—न स्वरूपेणाकृतिर्नास्तीत्युच्यते, किन्तु अभिधेयतया शब्दरूपा । ननु च तद्रूपापत्तावभावाभिधाने किं प्रयोजनम् ? भाष्ये किल "अस्ति वा न वा" इति ग्रन्थेनाकृतेरभावः प्रतिपाद्यते ; तच्च न युक्तम् । एवं वक्तव्यम्–शब्दस्वरूपैवा-कृतिरिति । परिहरति–-अभिधेयाभिप्राय एवायमभाव उक्तः, न स्वरूपाभि-प्रायः । अस्यार्थः—अभिधेयस्वरूपा जातिः शब्दे[2]व्यतिरिक्तास्ति वा न वेति भाष्येणोक्तम्, न स्वरूपेणास्ति वा न वेति । अत्र भाष्यम्—"न प्रत्यक्षा सती" इति स्वरूपसद्भावमेवाकृतेः समर्थयमानमिव दृश्यते ; तच्चानुपपन्नम्, अनाक्षि-प्तत्वादित्यन्यथा व्याचष्टे—न प्रत्यक्षा सती साध्या भवितुमर्हतीति । यदि परं स्व[3]रूपेणैवाभावः साध्यते, तदैवानभिधेयता बाह्याया आकृतेः स्यात् ; यदा त्वस्ति, तदा सैवाभिधेया स्यात् ; न चाभावः शक्यते वक्तुम्, प्रत्यक्ष-

१. तथा. ग.
२. शब्दाद्व्यति. ग.
३. स्वरूपस्यैव शब्द. ग.

भाष्यम्

विपर्यासे व्यामोहः इति शक्यते वक्तुम् । असत्यप्यर्थान्तर एवंजातीयको भवति प्रत्ययः; 'पङ्क्तिः, यूथम्, वनम्' इति यथा—इति चेत् न, असम्बद्धमिदं वचनमुपन्यस्तम्; किं असति वने वनप्रत्ययो भवति इति प्रत्यक्षमेवाक्षिप्यते—'वृक्षा अपि न सन्ति' इति। यद्येवम्, प्रत्युक्तः स

बृहती

इति। केन चोक्तम्—स्वरूपेणैवास्याभावः—इति । इतरस्तु तमेवाभिप्रायं बुद्धौ कृत्वा "नासति प्रत्ययविपर्यासे व्यामोहः" इत्युक्तवान् । "असत्यप्यर्थान्तरे एवंजातीयको भवति प्रत्ययः 'पङ्क्तिः, यूथम्, वनम्' इति यथा इति चेत्"—इति अभिधेयतयाभावं प्रकटयति । नैवायं प्रत्यक्षविरुद्धोऽर्थोऽभिधीयते आकृतेरभावः । किं तर्हि? अभिधेयरूपतया अभिधानरूप-

पञ्चिका

गम्यत्वात् । "व्यामोह इति चेत्" इति भाष्यं पठित्वा व्याचष्टे—केन चोक्तं[1] स्वरूपेणैवास्याभाव[2] इति पूर्वपक्ष्यत्र ब्रूते—न मया स्वरूपेणैवाकृतेरभाव उच्यते, किन्तु स्वरूपेणास्त्येव; सैव[3] त्वभिधीयत इति व्यामोह एषः । इतरस्तु राद्धान्ती तमेवाभिप्रायं स्वरूपापह्नवमन्तरेणाभिधेयापह्नवो न युक्त इति पूर्वोक्तं बुद्धौ कृत्वा नासति प्रत्ययविपर्यासे व्यामोहोऽवगम्यत[4] इत्युक्तवान् । अपरमपि भाष्यम् "असत्यप्यर्थान्तरे" इत्यादि स्वरूपापह्नवपरमिव लक्ष्यत इति मत्वाह—असत्यप्यर्थान्तर एवंजातीयको भवति प्रत्ययः पङ्क्तिः यूथं वनमिति यथेति चेत् इत्यभिधेयतया अस्याभावं प्रकटयति; नैवायं प्रत्यक्षविरुद्धोऽर्थोऽभिधीयते आकृतेरभावः; किं तर्हि? अभिधेयरूपतया अभिधानरूपमवगम्यत इत्युक्तम् । यद्यदभिधीयते, तत्तदभिधानरूपमेव यथा वने वृक्षेष्वेकत्वम् । न

---

१. चोक्तं. ग.
२. -णैवाभावः. क.
३. एव. ग.
४. Added अर्थ. ग.
५. -दावपि अभिधेयो. ग.
६. Omitted. इति ग.

बृहती

मवगम्यते--इत्युक्तम्; न चेदमविवर्तवादिन उपपद्यते। तस्माद्विवर्तपक्ष एव श्रेयानित्यभिप्रायः। "असम्बद्धमिदं वचनमुपन्यस्तम्" इति पङ्क्त्यादावपि नैव शब्दरूपावगतिरस्तीत्यभिप्रायः। कथं तर्ह्येकप्रत्ययः? न च शब्दाद्व्यतिरिक्तं किञ्चिदन्यत्पङ्क्त्यादिषु एकमुपलभ्यते; अस्ति चायमेकप्रत्ययः; तस्माच्छब्दाध्यासनिवन्धन एवायम्। "किमसति वने वनप्रत्ययः"—इति असति वृक्षव्यतिरिक्ते एकस्मिन् वनाभिधेयेऽर्थे एकप्रत्ययो नोपपद्यते इति किं प्रत्यक्षसमधिगम्या वृक्षा अपि न सन्तीति शक्यते वक्तुम्? कोऽभिप्रायः? वृक्षा एवात्र एकतया प्रतीयन्ते, न पुनर्वनशब्दरूपतावगम्यते। अथायमभि-

पञ्चिका

चेदमविवर्तवादिन उपपद्यते। तस्माद्विवर्तपक्ष एव श्रेयानित्यभिप्रायः।असम्बद्ध-मित्यादि भाष्यं पठित्वा व्याचष्टे---असंबद्धं वचनमिदमुपन्यस्तमिति पङ्क्त्या-दावपि नैव शब्दरूपावगतिरस्तीत्यभिप्रायः। प्रत्यक्षं शब्दाकारविलक्षणा पङ्क्तिः प्रतीयत इति। इदानीमाशयमाविष्करोति—कथं तर्ह्येकप्रत्ययः? न च शब्दाद्व्यतिरिक्तं किञ्चिदन्यत्पङ्क्त्यादिष्वेकमुपलभ्यते, अस्ति चायमेक-प्रत्ययः; तस्माच्छब्दाध्यासनिबन्धन एवायम्। शब्द एवार्थेऽध्यस्तोऽभि-धीयते, तस्यैकत्वादेकवचनमुपपद्यते। किमसति वने वनप्रत्यय इति असति वृक्षव्यतिरिक्ते एकस्मिन् वनाभिधेयेऽर्थे एकप्रत्ययो नोपपद्यत इति। अनेन भाष्यं व्याख्यातम्; वनशब्देन भाष्यगतेन वनाभिधेयमुक्तम्; वनप्रत्यय इत्यने-नाप्येकवचनप्रत्ययः। किं प्रत्यक्षसमधिगम्या वृक्षा अपि न सन्तीति शक्यते वक्तुम्? कोऽभिप्राय एवं वदतो भाष्यकारस्य? उच्यते—वृक्षा एवा-त्रैकतया प्रतीयन्ते, न पुनः वनशब्दरूपतावगम्यते। अस्यार्थः---वन-शब्दे समुच्चारिते वृक्षा एव प्रतीयन्ते, तत्र भवानेवं वदति--शब्दव्यतिरिक्तोऽर्थो नास्तीति; तथा सति प्रत्यक्षा एव न सन्तीति प्राप्तम्। न चेदमुचितम्, शब्दाति-

---

१. -वप्यभिधेयेनैवशब्दः रूपा-ग.
२. Omitted इति. ग.
३. Added. रूप. क.
४. -रूपतया-ग.
५. अपि. ग.
६. Omitted न. ग.

बृहती

प्रायः—"वृक्षा अपि न सन्ति इति," तदपि हि शब्दाध्यस्तमेव रूपम्—इति; प्रत्युक्तः स माहायानिकः पक्षः। अर्थविषया हि प्रत्यक्षा संवित्, न बुद्धिविषया--इत्युक्तम्। बुद्धिविषयत्वे वा संविदः किं सिध्यति शब्दाध्यासः? अन्या हि वृक्षसंवित्, अन्या च वनसंवित्। तस्माद्बुद्धिविषया वा भवतु, अर्थविषया वा; सर्वथा वनशब्दरूपता नास्तीत्येतावद्वक्तव्यम्। अतः "प्रत्यक्षमेवात्राक्षिप्यते" इत्येवमादेर्ग्रन्थस्यासम्बद्धतैव प्रतिभाति। तस्मादाकृतिसद्भाव एवाक्षिप्यते इति लक्ष्यते।

मैवम्; वनशब्दाकारवादिनो हि भिन्नरूपावगतिरेवोत्तरम्; सा च वृक्षरूपाद्भिन्नैवात्र प्रतीयते। यदि परं तदभावादप्रतीतिः; स चाभावः प्रत्यक्षे प्रत्यर्थिनि नोपपद्यते। ननु विज्ञप्तिः प्रत्यक्षेत्येतदुपपद्यते

पञ्चिका

रेकिणां तेषां प्रत्यक्षासिद्धत्वात्। अथायमभिप्रायः—वृक्षा अपि न सन्तीति, तदपि हि शब्दाध्यस्तमेव रूपमिति। अनेन च यद्येवमिति भाष्यं व्याख्यातम्। प्रत्युक्तोऽयं माहायानिकः पक्षः। अर्थविषया हि प्रत्यक्षा संविन्न बुद्धिविषयेत्युक्तम्। संविदिति भाष्ये बुद्धिपदं विवृतम्। अन्यथा बुद्धिरनुमेया कथं प्रत्यक्षा—इत्याशङ्का स्यात्। इदानीमिदमाक्षिपति—बुद्धिविषयत्वे वा संविदः किं सिध्यति शब्दाध्यासः? येन शब्दाध्यासे निराचिकीर्षिते बुद्धिविषयता संविदो निराक्रियते। अन्या[2] हि वृक्षसंविदन्या च वनसंवित्। अस्यार्थः—यदि वृक्षसंविद्वनसंविच्चैका स्यात्, तदा बुद्धिविषयत्वे संविदोऽस्याःसिध्यति शब्दाध्यासः; न चैतदस्ति। तस्माद्बुद्धिविषया वा भवत्वर्थविषया वा; सर्वथा वनशब्दरूपता नास्तीत्येतावद्वक्तव्यम्। अतः प्रत्यक्षमेवाक्षिप्यत इत्येवमादेर्ग्रन्थस्यासम्बद्धतैव प्रतिभाति। तस्मादाकृतिसद्भाव एवात्राक्षिप्यत इति लक्ष्यते इत्येकदेशिमतमुपन्यस्तम्।

समर्थयते—मैवम्, वनशब्दाकारवादिनो हि भिन्नरूपावगतिरेवोत्तरम्। यो हि वनशब्दाकार एव वनशब्देनोच्यत इति वदति, तस्य शब्दाकारव्यतिरिक्ताकारावगतिरेव निराकरणीयतयोपन्यसनीया; सा

१. -विरुद्ध-ग. २. अन्यैव हि. ग.

भाष्यम्

माहायानिकः पक्षः । अथ किमाकृतिसद्भाववाद्युपालभ्यते —सिद्धान्तान्तरं ते दुष्यति इति 'वनेऽपि तेऽसति वन-प्रत्ययः प्राप्नोति'—इति? एवमपि प्रकृतं दूषयितुमशक्नुवतः

बृहती

इत्युक्तम् । न, भेदावगतेः परिकल्पनापक्षपातित्वात् । तस्मात् सुष्ठु— "प्रत्युक्तः स माहायानिकः पक्षः" इति । ननु एकबुद्धिरनालम्बनैवेयं

पञ्चिका

च भिन्नवृक्षस्वरूपाभिन्नैवात्र प्रतीयते । यदि परं तदभावाद्वृक्षाभावाद-प्रतीतिः, स चाभावः प्रत्यक्षे वृक्षविषये प्रत्यर्थिनि प्रतिपक्षभूते भावग्राहिणि नोपपद्यते; आत्यन्तिकप्रमाणप्रत्यस्तमय एवाभावो यतः । ननु विज्ञप्तिप्रत्यक्षपक्षेऽप्येतत्प्रत्यक्षं शब्दातिरिक्तवृक्षविषयमुपपद्यत इत्युक्तं बौद्धैः; तेन वृक्षसंवित्प्रत्यक्षास्तु, मा भूवन् वनव्यतिरिक्ता वृक्षा इति । अत्र च विज्ञप्तिशब्दस्य साधुत्वाय क्तिन्नाबादित्वाद्वेदितव्यः; अन्यथा ण्यन्तत्वाद्युजेव स्यात् । अत्रोत्तरम्——न, भेदावगतेः परिकल्पनापक्षपातित्वात् । अस्यार्थः—ज्ञानादपि भेदेन वृक्षाः प्रतिभान्ति । तत्र त्वया किं वक्तव्यम्? भेदावग-तिरियं कल्पनामात्रमिति । न चेदं युक्तम्; न हि सर्वलोकावगतोऽर्थः काल्पनिक इति शक्यते वक्तुम् । तस्मात्सुष्ठु शोभनमुच्यते "प्रत्युक्तः स माहायानिकः पक्षः" इति । अत्रेदमभिप्रेतम्——यदि वैयाकरणो वृक्षविषयं प्रत्यक्षं बुद्धिविषयं ब्रूयात्, तदा बाह्यवृक्षाभावे शब्दमात्रमेवाभिधेयमिति[1] स्यादप्येतत्; न चेदं शक्यम्, भेदप्रतीतेरर्थज्ञानयोरिति । अत्र भाष्यम्——" किमाकृतिसद्भाववादी " इत्यादि । तेन चेदमाशङ्कितम्—यदि वृक्षा एव वनप्रातिपदिकाभिधेयाः, तदा तेषां बहुत्वा-देकत्वाभावे सति[2] कथमेकवचनम्? अथ बहुत्वेऽप्येकवचनम्, तदा 'एकस्मिन्नेक-वचनम्' इति भवतामभ्युपगमो न युक्तः । एवं चेत् आकृतिर्विद्यत इत्ययमपि भवता-मभ्युपगमो मृषाभूत एवेति । एतदुपजीव्याह--नन्विदानीमेकबुद्धिः पिण्डेष्वनालम्ब-

---

१. मात्राभिधेय-ग. २. बहुत्वभावे सति. ग.

भाष्यम्

तत्सिद्धान्तान्तरदूषणे निग्रहस्थानमापद्यते । असाधकत्वात् स हि वक्ष्यति----दुष्यतु, यदि दुष्यति; किं तेन दुष्टेन अदुष्टेन वा प्रकृतं त्वया साधितं भवति, मदीयो वा पक्षो दूषितो भवतीति । न च वृक्षव्यतिरिक्तं वनं यस्मात्

बृहती

प्राप्ता । "अथ किमाकृतिसद्भाववदी उपालभ्यते—सिद्धान्तान्तरं ते दुष्यति वनेऽपि तेऽसति वनप्रत्ययः प्राप्नोति इति" । कः पुनरत्र सिद्धान्तः, यो दुष्यति ? एकस्मिन् वर्तमानात् प्रातिपदिकात् एकवचनम्–इति । बहवश्च वृक्षाः; तत्र चेदं प्रातिपदिकं इत्युक्तमायुष्मता । यथैवाकृतिरस्ति–इति, तथैवायमपि । तदिदं राद्धान्तदूषणं भवति । प्रमाणान्तरमूलत्वात् स्मृतेः यदि दूषणं भवति, भवतु नाम ; न ह्यभ्युपगमदूषणाद्धेतोरदुष्टदुष्टता शक्यते वक्तुम्; अदुष्टोऽयं हेतुः प्रत्यक्षावगतिर्नाम । तस्माद्यद्ये-

पञ्चिका

नैव प्राप्ता, आकृतेरभावात् । इदानीं भाष्याक्षराणि व्याचष्टे—अथ किमाकृतिसद्भाववाद्युपालभ्यते—सिद्धान्तान्तरं ते दुष्यति वनेऽपि तेऽसति वनप्रत्ययः प्राप्नोतीति ? कः पुनरत्र सिद्धान्तो यो दुष्यति ? एकस्मिन् वर्तमानात्प्रातिपदिकादेकवचनमिति ? कथं दुष्यति ? बहवश्च वृक्षाः ; तत्र चेदं प्रातिपदिकं वर्तत इत्युक्तमायुष्मता । यथैवाकृतिरस्तीति भवतां राद्धान्तः, तथायमपि राद्धान्तः ; तेन तुल्ययोगित्वादेकाभ्युपगमापाये परोऽभ्युपगमो दुष्ट इति तत्सिद्धान्तान्[१]तरदूषणं निग्रहस्थानम् । असाधकत्वादित्युत्तरभाष्यं व्याचष्टे— तदिदं सिद्धान्तान्तरदूषणमुच्यते, न पुनराकृतिसद्भावस्य दूषणमित्यर्थः । कस्मात् ? न हि स्मृतिदूषणात् प्रत्यक्षमपि दूषितं भवति । तेन प्रत्यक्षसिद्धा नाकृतिरपह्नोतुं शक्यते । प्रमाणान्तरमूलत्वात् स्मृतेर्मूलाभावे यदि दूषणं भवति, भवतु ; न पुनरभ्युपगमाद्धेतोरदुष्टस्यापि दुष्टता शक्यते वक्तुम् । अदुष्टश्चायं हेतुराकृतिसद्भावे प्रत्य-

१. Omitted अन्तर-ग. २. तस्मात्, ग.

भाष्यम्

नोपलभ्यते, ततो वनं नास्ति इत्यवगम्यते । यदि वने अन्येन हेतुना सद्भावविपरीतः प्रत्यय उत्पद्यते, मिथ्यैव वनप्रत्ययः—इति ; ततो वनं नास्ति इत्यवगच्छामः । न च गवादिषु प्रत्ययो विपर्येति ; अतो वैषम्यम् । अथ वनादिषु नैव विपर्येति, न ते न सन्तीति । तस्मात् असम्बद्धः पङ्क्ति-वनोपन्यासः । अत उपपन्नं जैमिनिवचनम्—आकृतिः शब्दा-र्थः—इति । यथा च आकृतिः शब्दार्थः, तथोपरिष्टात् निपुणतरमुपपादयिष्याम इति ॥

बृहती

कत्वमन्तरेणाप्येकवचनम्, किं कुर्मः ; कमुपालभेमहि ? न चायमुपालम्भस्य विषयः । एकस्मिन्नेकवचनम्—इति प्रायिकमेतत्, दारादिषु व्यभि-चारात् । प्रायौगिकमिदमेकवचनम्, नान्वयिकम् । अतः सिद्धान्तापरिज्ञानमे-वात्र गर्हणीयम् । तस्मान्न क्वचित् शब्दाध्यस्ता बुद्धिरस्तीत्युपपन्नं जैमि-

पञ्चिका

क्षावगतिर्नाम । उपसंहरति—तस्माद्यद्येकत्वमन्तरेणाप्येकवचनप्रयोगः, किं कुर्मः, कमुपालभेमहि? अनादित्वात्प्रयोगस्यैवमवगन्तव्यम्—वनादिष्वसत्यप्येकत्वे एकवचनं भवतीति । न चायमुपालम्भस्यापि विषयः; यस्मादेकस्मिन्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनमिति प्रायिकमेतत्, दारादिष्वसत्यपि बहुत्वे बहु-वचनदर्शनाद्व्यभिचारात् । तस्मात्प्रायौगिकमिदमेकवचनम्[1], प्रयोगस्यानादितया प्राप्नोति; नान्वयिकं नार्थान्वयाय[2] प्रभवति । अतः सिद्धान्तापरिज्ञानमेवात्र गर्हणीयं भवतः, योऽयमस्मदीयं सिद्धान्तं न जानाति—किञ्चित्प्रायौगिकमपि भवति, किञ्चिदान्वयिकमिति । यत्पुनरत्र कैश्चिद्दारादिष्ववयवसंख्याभिप्रायेण विभक्तिवर्णनं कृतं तदस्ति[3] वा घटमानम्? यत्र हि प्रातिपदिकं वर्तते तत्संख्या-

१. प्रायोगिकमित्यपि पाठः तत्र तत्रोभयोर्मातृकयोः ।
२. Omitted अर्थ-ग.
३. तद्वर्तता वा. ग.

भाष्यम्

**अथ सम्बन्धः क इति ? यत् शब्दे विज्ञातेऽर्थो**

बृहती

नेर्वचः—आकृतिः शब्दार्थः—इति । आकृतिप्रतिपत्तिमुखेन गोशब्दादीनां निमित्ततेति, तत्राकृत्यधिकरणे निपुणतरमुपपादयिष्यति ॥

"अथ सम्बन्धः क इति ? यच्छब्दे विज्ञातेऽर्थो विज्ञायते" । कः पुनरयं सम्बन्धः पृष्टश्चोपन्यस्तश्च ? पूर्वोक्त एवेति वदामः । ननु चासौ संज्ञासंज्ञिलक्षणः सम्बन्धः; तस्मादन्य एवायं सम्बन्ध इति मन्यते । तदयुक्तम्;

पञ्चिका

यामेव विभक्तयो भवन्ति, "समर्थः पदविधिः" इति । न चावयवादिगताः संख्या वाक्यार्थेऽन्वीयन्ते ; अनन्वीयमानाश्चाभिधीयन्त इति साहसमेतत् । एतच्च नवम एव वक्ष्यामः । तस्मान्न क्वचिच्छब्दाध्यस्ता वाच्ये बुद्धिरस्तीति वनादिष्वपि परिहृतत्वादित्युपपन्नं जैमिनेर्वचः- -आकृतिः शब्दार्थः इति । ननु यत्परः शब्दः स शब्दार्थः, न चाकृतिमात्रपरता कस्यचिच्छब्दस्य, सर्वेषां कार्यपरत्वादित्याशङ्क्याह—आकृतिप्रतिपत्तिमुखेन गोशब्दादीनां निमित्ततेति । अस्यार्थः— आकृतिं कार्यान्वयिनीं प्रतिपादयन्तो गवादिशब्दाः कार्यपराः, तेनाकृतिः शब्दार्थः इत्युक्तमिति । एतच्चाकृत्यधिकरणे निपुणतरमुपपादयिष्यामः ॥

इत्याकृतिवादः

"अथ सम्बन्धःक इति ? यच्छब्दे विज्ञाते सत्यर्थो विज्ञायते" इत्यनेन भाष्येण कः पुनरयं सम्बन्धः पृष्टश्चोपन्यस्तश्च ? पूर्वोक्त एवेति वदामः । य एव "प्रत्याय्यस्य प्रत्यायकस्य च संज्ञासंज्ञिलक्षणः सम्बन्धः" इति पूर्वमुक्तः, स एव पृष्टश्चोपन्यस्तश्चेति । इदानीं येनाभिप्रायेण भेदं मत्वा प्रश्न उक्तः, तमाविष्करोति—ननु चासौ संज्ञासंज्ञिलक्षणः सम्बन्धः । असाविति दूरस्थः पूर्वोक्तः । तस्मादन्य एवायं सम्बन्ध इति मन्यते[1] । अयमाशयः— अत्र यच्छब्द उच्चारितेऽर्थो विज्ञायत इति वदता ज्ञाप्यज्ञापकलक्षणः सम्बन्ध उक्तः । शब्दे[2] ह्युच्चारितेऽर्थो विज्ञायत इतीदमेव शब्दस्य ज्ञापकत्वमर्थस्य ज्ञाप्यत्वम्, न पुनरन्यत् । तत्र पुनः "प्रत्याय्यस्य प्रत्यायकस्य" इति षष्ठ्या

१. मन्यन्ते. ग. २. Omitted शब्दे...उक्त इति. ग.

बृहती

तत्रापि "प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षणः सम्बन्धः" इति स एवायं ज्ञाप्यज्ञापकलक्षणः सम्बन्ध उक्तः । ननु "प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षणः सम्बन्धः" इति वदता—प्रत्याय्यस्य प्रत्यायकस्य इति षष्ठ्यभिधानेन सम्बन्धान्तरमुक्तं भवति । मैवम्; तदेवेदं प्रत्याय्यप्रत्यायकत्वं संज्ञासंज्ञिलक्षणमिति षष्ठ्या प्रतिपादितम् । कुत एतत्? ननु व्यतिरेकं षष्ठी प्रतिपादयति । अस्त्येवात्र हेतुहेतुमत्तया व्यतिरेकः; प्रत्याय्यप्रत्यायकत्वं संज्ञासंज्ञिलक्षणसम्बन्धस्याभिधाने निमित्तम् ; अन्यथा प्रत्याय्यप्रत्यायकोपन्यासोऽनर्थकः; तमेकं न व्यपदिशति भवान्, यः

पञ्चिका

प्रत्याय्यप्रत्यायकभावा।तिरेकी संज्ञासंज्ञिलक्षणः सम्बन्ध उक्त इति । तदयुक्तम्; यस्मात्तत्रापि "प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षणः सम्बन्धः" इति भाष्ये प्रत्याय्यप्रत्यायकशब्दप्रयोगात् स एवायम् , योऽत्र उपन्यस्तः ज्ञाप्यज्ञापकलक्षणः[1] सम्बन्ध उक्तः । इदानीमिमम[2]ाशयमाविष्करोति—ननु "प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षणः सम्बन्धः" इति वदता—प्रत्याय्यस्य प्रत्यायकस्य इति षष्ठ्यभिधानेन सम्बन्धान्तरमुक्तं भवति । मैवं वादीः । तदेवेदमत्रत्यं प्रत्याय्यप्रत्यायकत्वं हि संज्ञासंज्ञिलक्षण इति षष्ठ्या प्रतिपादितम् । अयं भावः—ज्ञाप्यज्ञापकभाव एव प्रत्याय्यप्रत्यायकयोः संज्ञासंज्ञिलक्षणः सम्बन्धः, नान्यः; षष्ठी च सम्बन्धसम्बन्धिनोः भेदादुपपद्यत इति । कुत एतदिति । भावमपरिभावयतः प्रश्नः ननु व्य[3]तिरेकं षष्ठी प्रतिपादयतीति एकग्रन्थेन । भावं विवृणोति—अस्त्येवात्र हेतुहेतुमत्तया व्यतिरेकः, प्रत्याय्यप्रत्यायकत्वं हि संज्ञासंज्ञिसम्बन्धाभिधाने निमित्तम् । अस्यार्थः—ज्ञाप्यज्ञापकाभ्यां सम्बन्धिभ्यामस्त्येव सम्बन्धस्य व्यतिरेकः । हेतुहेतुमत्तयेति व्यतिरेकमेव स्पष्टयति । तस्मादयं शब्दार्थयोः सम्बन्धः संज्ञासंज्ञिसम्बन्ध इत्युच्यते, यतः प्रत्याय्यप्रत्यायकयोः । तेन प्रत्याय्यप्रत्यायकौ सम्बन्धिनौ सम्बन्धस्य विशिष्टरूपतामापादयन्तौ हेतुभूतौ सम्बन्धश्च

---

१. Omitted लक्षणः. ग.
२. Omitted इमं. ग.
३. व्यतिरिक्तं. ग.

भाष्यम्

विज्ञायते । स तु कृतक इति पूर्वमुपपादितम् । तस्मात् मन्यामहे---केनापि पुरुषेण शब्दानामर्थैः सह

बृहती

संज्ञासंज्ञिलक्षणः—इति वक्तव्यम्। अत एव "स तु कृतक इति पूर्वमुपपादितम्" इत्यनेन ग्रन्थेन पूर्वोक्तस्यैवायमुपन्यास इति प्रकटयति। किं पुनः कारणं प्रश्नोपन्यासयोः? इदमत्र कारणम्—विवर्ताक्षेपे हि युतसिद्धयोरनपेक्षत्वं न शक्यते वक्तुमिति मन्वानस्य प्रश्नः। शक्यते वृद्धव्यवहारस्यानादि-

पञ्चिका

हेतुमान् भवति। न चाव्यतिरेके हेतुहेतुमद्भाव उपपद्यत इति। एवं तावत्साधितमेक एवोभयत्रापि सम्बन्ध उक्त इति। यदीहत्य एव तत्रापि सम्बन्धो नाभिमतः स्यात्—अन्यथा हि, प्रत्याय्यप्रत्यायकोपन्यासोऽनर्थकस्तत्र स्यात्। "तमेकं न व्यपदिशति भवान्, यः संज्ञासंज्ञिलक्षणः सम्बन्धः"—इत्येव वक्तव्यम्। यत एवोभयत्रापि स एव सम्बन्धः, अत एव स तु कृतक इति पूर्वमुपपादितमित्यनेन ग्रन्थेन पूर्वोक्तस्यैवायमुपन्यास इति प्रकटयति। अन्यथान्यः सम्बन्धः पूर्वोक्तोऽयमप्यन्य इति नेदं वचनमुपपद्यते "स तु कृतक इति पूर्वमुपपादितम्" इति। किं पुनः कारणं प्रश्नोपन्यासयोः? अस्यार्थः—पूर्वं "कृतकस्तर्हि" इत्येवमन्तेन ग्रन्थेन परैराक्षेपे कृते तत्समाधानमात्रमेव कर्तव्यम्; न पुनः प्रश्नोपन्यासाविति। इदमत्र कारणम्—विवर्ताक्षेपे हि युतासिद्धयोरनपेक्षत्वं न शक्यते वक्तुमिति मन्वानस्य प्रश्नः। अस्यार्थः—निराकृतस्वपक्षो विवर्तवादी मीमांसकमेव पर्यनुयुङ्क्ते—यदि युतासिद्धौ शब्दार्थौ, अथ सम्बन्धः कः? मत्पक्षे हि तादात्म्यादेव शब्दार्थयोः सम्बन्ध उपपद्यते; यदि पृथग्भूतयोरपि प्रत्याय्यप्रत्यायकलक्षणं सम्बन्धमभ्युपगच्छेत्, तदानपेक्षत्वं न सिध्यतीति। अनेन प्रश्नस्तावत्समर्थितः। शक्यते हि वृद्धव्यवहारस्यानादितया वक्ष्यमाणमार्गेणानपेक्षता वक्तुमिति तस्यैव ज्ञाप्यज्ञापकलक्षणसम्बन्धस्योपन्यासः "स तु कृतकः" इति पूर्वोपवर्णितेनैव

१. तत्रैव. ग.
२. पूर्वोक्तं. ग.
३. अयुतसिद्धयोः कथं-ग.

भाष्यम्

सम्बन्धं कृत्वा संव्यवहर्तुं वेदा प्रणीता' इति। तदिदानीमुच्यते----अपौरुषेयत्वात् सम्बन्धस्य सिद्धमिति। कथं पुनरिदमवगम्यते----अपौरुषेय एष सम्बन्धः इति? पुरुषस्य सम्बन्धुरभावात्। कथं सम्बन्धा नास्ति? प्रत्यक्षस्य

बृहती

तयानपेक्षता वक्तुमिति तस्यैवोपन्यासः—"स तु कृतकः" इति पूर्वोपवर्णितेनैवाभिप्रायेणोक्तम् "तस्मान्मन्यामहे—केनापि पुरुषेण शब्दानामर्थैः सह सम्बन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीताः इति"—सापेक्षत्वमुपसंहृतम्। "तदिदानीमुच्यते—अपौरुषेयत्वात् सम्बन्धस्य सिद्धमिति"। वृद्धव्यवहारस्यानादिताभिधनोपन्यासोऽयम्। किमिदं तर्हि प्रश्नोत्तरम्? कथम् इति पृष्टे "पुरुषस्य सम्बन्धुरभावात्"—इत्युत्तरमयुक्तम्।

पञ्चिका

सम्बन्धाक्षेपवादस्थानोक्तेनैवाभिप्रायेणोक्तं वैयाकरणेनैव। तस्मान्मन्यामहे—भवन्मते केनापि पुरुषेण शब्दानामर्थैः सह सम्बन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीता इति सापेक्षत्वमुपसंहृतम्। यदि हि सम्बन्धः कृतकः, तदा सम्बन्धोत्तरकालभाविनो वेदा अपि कृतका एव; अन्यथा हि सङ्केतात्प्राच्येषु वेदेषु नार्थप्रतीतिः स्यात्। सम्बन्धकर्तृवेदप्रणेत्रोश्चैकतोपलक्षणमात्रं सर्वथा कृतकसम्बन्धानुबन्धिनो वेदा अपि कृतका इति विवक्षितम्। "तदिदानीमुच्यते, अपौरुषेयत्वात्सम्बन्धस्य सिद्धमिति" भाष्यं व्याचष्टे—वृद्धव्यवहारस्यानादिताभिधानोपन्यासोऽयम्। यदि वृद्धव्यवहारस्यानादितैवात्रोपन्यस्यते, किमिदं तर्हि प्रश्नोत्तरम्? तदेव दर्शयति—कथमिति। सम्बन्धस्यापौरुषेयत्वहेतौ पृष्टे

भाष्यम्

प्रमाणस्याभावात्, तत्पूर्वकत्वाच्चेतरेषाम् । ननु चिरवृत्तत्वात्

बृहती

वृद्धव्यवहारस्यानादिताप्रतिपक्षनिरासायेदमुपन्यस्तम् । कथं पुनरिदं प्रतिपक्षतया शङ्क्यते? बाढमाशङ्क्यते; अनादिनापि वृद्धव्यवहारेण शब्दादर्थावगमसिद्धौ यत्र कर्तोपलभ्यते, तत्रादिमत्तैवोपलब्धिबलात्प्राप्नोति "वृद्धिरादैच्" इतिवत्। तस्मात् कर्तुरुपलम्भो निराकरणीयः। "कथं सम्बन्धा नास्ति?"--इत्यस्य प्रश्नस्य किमिदमुत्तरमुपपद्यते—"प्रत्यक्षस्य प्रमाणस्याभावात् तत्पूर्वकत्वाच्चेतरेषाम्"—इति? कथं नोपपद्यते? अनुमानादेरपि प्रमाणत्वाभ्युपगमात्। तत्पूर्वकत्वं चायुक्तम्, शब्दस्य सापे-

पञ्चिका

पुरुषस्य सम्बन्धुरभावादित्युत्तरं न युक्तम्। एवं वक्तव्यम्—वृद्धव्यवहारस्यानादित्वाति। [१]समर्थनमाह—वृद्धव्यवहारस्यानादिताप्रतिपक्षनिरासायेदमुपन्यस्तम्। पुरुषस्य सम्बन्धुः सद्भावो वृद्धव्यवहारस्यानादितायाः प्रतिपक्ष इति सोऽनेन ग्रन्थेन निराक्रियते। कथं पुनरिदं सम्बन्धुरुपलम्भनं प्रतिपक्षतया शङ्क्यते? बाढमाशङ्क्यते; अनादिनापि वृद्धव्यवहारेण शब्दादर्थावगमसिद्धौ यत्र सम्बन्धस्य कर्तोपलभ्यते, तत्रादिमत्तैवोपलब्धिबलात्प्राप्नोति "वृद्धिरादैच्" इतिवत्। अस्यार्थः—यद्यपि वृद्धव्यवहारानादितयापि शब्दादर्थावगम उपपद्यते, तथापि साक्षात्सङ्के[२]तकरणदर्शने न शक्यतेऽनादिता वक्तुमिति भवति सम्बन्धृपुरुषोपलम्भनं प्रतिपक्षभूतम्। तस्मात्कर्तुरुपलम्भो निराकरणीयः। "कथं सम्बन्धा नास्ति" इत्यस्य प्रश्नस्य किमिदमुत्तरमुपपद्यते—प्रत्यक्षस्य प्रमाणस्याभावात्तत्पूर्वकत्वाच्चेतरेषामिति? कथं नोपपद्यते? अनुमानादेरपि प्रमाणत्वाभ्युपगमात्। तेन प्रत्यक्षमात्रनिराकरणं न सम्बन्धुर्नास्तितामावहति।

---

१. समर्थयन्नाह. ग. २. कारण—ग.

बृहती

क्षत्वप्रसङ्गात्, क्रियादिषु चाननुमेयतापत्तेः । सापेक्षत्वे च शब्दस्यौत्पत्तिकत्वप्रयासोऽनर्थक एव । तदिदमापतितम्--घोटारूढस्य विस्मृतो घोट इति । अभिप्रायानभिज्ञस्येदं चोद्यम् ; केवलानुमानागमगम्यता तावन्न संभवत्यनादौ वृद्धव्यवहारे प्रत्यर्थिनि । तस्मात् प्रत्यक्षं तत्पूर्वकं चागमानुमानं

पञ्चिका

ननु [1]प्रत्यक्षे निराकृते तत्पूर्वकत्वाच्चेतरेषामित्यनेन ग्रन्थेनानुमानाद्यपि निराकृतमित्यत्राह--तत्पूर्वकत्वं चायुक्तम्, शब्दस्य सापेक्षत्वप्रसङ्गात् । अस्यार्थः--यदि यद्यत्प्रत्यक्षपूर्वकं तत्तत्प्रत्यक्षे निराकृते निराकृतं भवति, तदा यत्रैव तर्हि प्रत्यक्षं प्रवर्तते तत्रैव तेन तेन प्रवर्तितव्यमित्यायातम्; शब्दोऽपि च प्रत्यक्षपूर्वक इति तेनापि प्रत्यक्षविषय एव प्रवर्तितव्यम्; अतश्चास्य प्रत्यक्षसापेक्षता प्राप्ता; क्रियादिषु च प्रत्यक्षाविषयेष्वननुमेयतापत्तेः अनुमानस्यापि प्रत्यक्षपूर्वकत्वेन तद्विषय एव प्रवृत्तिनियमापत्तेः । सापेक्षत्वे च शब्दस्य सम्बन्धस्यौत्पत्तिकत्वप्रयासोऽनर्थक एव । अप्रामाण्यस्य दुष्परिहरत्वात् । तदिदमापन्नं यल्लोके शून्यमनःकथासु श्रूयते--घोटारूढस्य भवतो विस्मृतो घोट इति । विस्मृतश्चित्तादपक्रान्तः । स्मरतेः कर्मकर्तृविषयस्येदं रूपम् । अभिप्रायानाभिज्ञस्येदं चोद्यम्--केवलानुमानागमगम्यता तावन्न संभवत्यनादौ वृद्धव्यवहारे प्रत्यर्थिनि । अस्यार्थः--[2]तौ तावदनुमानागमौ केवलौ प्रत्यक्षव्यापारनिरपेक्षौ; तद्गम्यता तावत्सम्बन्धुर्न भवति, यस्मात्कार्यतः कारणानुमानं केवलानुमानम्; शब्दाच्चार्थप्रतीतिः कार्यभूता; सा च नैकान्तेन सम्बन्धारमेवानुमापयितुमलम्, वृद्धव्यवहारानादितयाप्युपपत्तेः; तथागमोऽपि स्वतन्त्रस्तावन्न सम्बन्धृसत्त्वे प्रमाणम्, कार्यैकविषयत्वात् । यदि परं प्रत्यक्षानुमानपूर्वको वक्तव्यः; तत्रानुमानपूर्वकोऽप्यनादिवृद्धव्यवहारप्रतिपक्षसम्भवेन केवलानुमानाभावात् प्रत्यक्षानपेक्षो न संभवतीति । तस्मात्प्रत्यक्षं तत्पूर्वकं च प्रत्यक्षगृहीतविषयम[3]गमानुमानं

---

१. प्रमाणप्रत्यक्षे. ग.
२. यौ तावत् ग.
३. Omitted आगम. ग.

भाष्यम्

प्रत्यक्षस्याविषयो भवेदिदानीन्तनानाम्। न हि चिरवृत्तः सन्

बृहती

निरसनीयमिति । तस्मादुपपन्नमुत्तरम् । बहुवचनमिदानीं किमर्थम्—"इतरेषाम्" इति ? इतरयोरिति वक्तव्यम्, द्वयोराशङ्कनीयतोपन्यासात्। द्वयोराशङ्कनीयतोपन्यासः, असम्भवस्तु सर्वेषामित्युपपन्नं बहुवचनम् ।

"ननु चिरवृत्तत्वात्" इत्यसिद्धतामाह। कथमसिद्धता ? पूर्वजानां प्रत्यक्षविषयतोपपत्तेः । "न हि चिरवृत्तः सन् न स्मर्येत" इति । न पूर्वजानामपि प्रत्यक्षमत्र संभवतीत्यभिप्रायः। यदि स्यात् पाणिनिवत् स्मर्येत

पञ्जिका

निरसनीयमिति । तस्मादुपपन्नमुत्तरम् । बहुवचनमिदानीं किमर्थम्? "तत्पूर्वकत्वाच्चेतरेषाम्" इति। यदि सम्भवत्प्रमाणनिरसनं तदोपमानस्य निरासोऽनर्थकः, तस्य सादृश्यमात्रविषयत्वात्सम्बन्धारे[1] सम्भवाभावात्; अर्थापत्तेस्तु सम्बन्धकल्पनया विना कस्यचिदपि विरोधाभावादसम्भव एवेति । समाधिमाह[2]—द्वयोराशङ्कनीयतोपन्यासः, असम्भवस्तु सर्वेषामित्युपपन्नं बहुवचनम् । अस्यार्थः—अभावस्तावत्सर्वेषां प्रमाणानाम्, तेन युक्तमेवैवं वक्तुम्—इतरेषां चाभावात् सम्बन्धा नास्तीति । यत्र यत्राशङ्का नास्ति, तत्र सहेतुकं निराकरणं नोपन्यस्यते; यत्र तु सम्भावनास्ति, तत्र सहेतुकं निराकरणं क्रियत इति ।

ननु चिरवृत्तत्वादित्यसिद्धतामाह। अनेन "ननु चिरवृत्तत्वात्प्रत्यक्षस्यागोचरो भवेदिदानीन्तनानाम्" इति भाष्यस्य तात्पर्यमाह । अनेन भाष्येण भाष्यकारः प्रत्यक्षाभावस्यासिद्धतामाह । कथमसिद्धता ? पूर्वजानां[3] प्रत्यक्षविषयतोपपत्तेः । "न हि चिरवृत्तः सन् न स्मर्येत" इति न पूर्वजानामपि प्रत्यक्षमत्र संभवतीत्यभिप्रायः । यदि स्यात्प्रत्यक्षं पूर्वजानां पाणिनिवत् स्मर्येत;

---

१. सम्बन्ध- ग. -यत यत्र. ग.

२. Omitted. समाधि- ३. Omitted जानाम्. ग.

भाष्यम्

न स्मर्येत । न च हिमवदादिषु कूपारामादिवत् अस्मरणं भवितुमर्हति, पुरुषवियोगो हि तेषु भवति देशोत्सादेन कुलोत्सादेन वा ; न च शब्दार्थव्यवहारवियोगः पुरुषाणामस्ति । स्यादेतत्, सम्बन्धमात्रव्यवहारिणो निष्प्रयोजनं कर्तृस्मरणमनाद्रियमाणा विस्मरेयुः इति । तन्न ; यदि हि पुरुषः कृत्वा सम्बन्धं व्यवहारयेत्, व्यवहारकालेऽवश्यं स्मर्तव्यो भवति ; संप्रतिपत्तौ हि कर्तृव्यवहर्त्रोरर्थः सिध्यति, न विप्रतिपत्तौ । न हि वृद्धिशब्देन अपाणिनेर्व्यवहारतः आदैचः प्रतीयेरन्, पाणिनिकृतिमननुमन्यमानस्य वा ; तथा मकारेण अपिङ्गलस्य न सर्वगुरुस्त्रिकः प्रतीयेत, पिङ्गलकृतिमननुमन्यमानस्य वा । तेन कर्तृव्यवहर्तारौ संप्रतिपद्येते । तेन वेदे व्यवहरद्भिरवश्यं स्मरणीयः सम्बन्धस्य कर्ता स्यात् व्यवहारस्य च । न हि विस्मृते "वृद्धिरादैच्" इत्यस्य सूत्रस्य कर्तरि "वृद्धिर्यस्याचामादिः" इति किञ्चित् प्रतीयेत ।

बृहती

"न च हिमवदादिषु कूपारामादिवदस्मरणं भवितुमर्हति" । तत्रास्मरणे हेतुरुपपद्यते पुरुषवियोगादिः । न च पुरुषवियोगः शब्दानामस्ति

पञ्चिका

न च हिमवदादिषु कूपारामादिवत् अस्मरणं भवितुमर्हति । यस्मात् तत्रास्मरणे हेतुरुपपद्यते पुरुषवियोगादिः । आदिशब्देनानभियोगोऽपि ग्राह्यः । न च पुरुषवियोगः शब्दानामस्तीति । अनेन भाष्यमर्थतोऽनुभाष्याभिप्रायं पृच्छति––

भाष्यम्

तस्मात्कारणादवगच्छामः---न कृत्वा सम्बन्धं व्यवहारार्थं केनचिद्वेदाः प्रणीता इति । यद्यपि च विस्मरणमुपपद्येत, तथापि न प्रमाणमन्तरेण सम्बन्धारं प्रतिपद्येमहि ; यथा विद्यमानस्याप्यनुपलम्भनं भवतीति नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्येमहि । तस्मादपौरुषेयः शब्दस्यार्थेन

बृहती

इति—किमभिप्रेतम्? कृतकपक्षे हि तत्प्रामाण्यात् प्रामाण्यं स्यात्; न निष्प्रयोजनतया विच्छेदः स्मरणस्योपपद्यते—इत्यभिप्रायः । तच्च पाणिनिपिङ्गलोपन्यासेन प्रकटितम् । "यद्यपि च विस्मरणमुपपद्यते तथापि न प्रमाणमन्तरेण सम्बन्धारं प्रतिपद्येमहि ; यथा विद्यमानस्यानुपलम्भो भवतीति नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्येमहि" । "यद्यपि च विस्मरणमुपपद्येत" इति किं विषयमिदं विस्मरणमुपन्यस्तम्? यदि तावत्

पञ्चिका

किंमभिप्रेतमिति[1] । पृच्छतश्चायमभिप्रायः—यद्यपि सम्बन्धा दृष्टः, तथापि किमसाववश्यं स्मरणीय इति । इदानीमभिप्रायमाह—कृतकपक्षे हि तत्प्रामाण्यात्प्रामाण्यं स्यात् । तस्मात्[2] न निष्प्रयोजनतया विच्छेदः स्मरणस्योपपद्यत इत्यभिप्रायः । अस्यार्थः—यदा सम्बन्धा पुरुषः प्रत्यक्ष-समधिगम्यः स्यात्, तदा तत्सङ्केतृसंप्रतिपत्त्यार्थः प्रतिपत्तव्यः[3]; न हि सङ्केतृविप्रतिपत्तौ व्यवहारः स्यात् आर्यद्रमिलयोरिव कलिशब्दे ; तेन सङ्केतृ-संप्रतिपत्त्यर्थं पुरुषः स्मर्तव्यः स्यात् । यदेतदवश्यं स्मरणीयत्वम् तच्च पाणिनि पिङ्गलोपन्यासेन प्रकटितम् । उपन्यासो दृष्टान्तः । यद्यपि चेत्यादिभाष्यं पठित्वा क्षेप्तुमाह—"यद्यपि च विस्मरणमुपपद्येत" इति किंविषयमिदं विस्म-रणमुपन्यस्तम्? यदि तावत्साध्यसम्बन्धृविषयं तदा सम्बन्धुरास्तित्वे इदमेव

---

१. किमिदं तदिति. ग.
२. Omitted तस्मात्. ग.
३ Omitted पत्यर्थः—पत्यर्थम्, ग.

बृहती

साध्यविषयम् तदिदमेव प्रमाणम्—यदुत विस्मरणोपपत्तिः । उक्तं च—
"विस्मरणमुपपद्यते" इति—तदा न प्रमाणमन्तरेण सम्बन्धारं प्रतिपद्ये-
महीत्यहेतुः । यदप्युच्यते "विद्यमानस्याप्यनुपलम्भनं भवतीति नैतावता
विना प्रमाणेन शशविषाणं प्रतिपद्यामहे" इति, इदमप्ययुक्तम् ; यदि
विद्यमानस्यैव अनुपलब्धिः ; केन शक्यते वक्तुम्—शशविषाणं प्रति-
पद्यामहे, शशविषाणं नास्ति—इति ? अथायमभिप्रायः—यद्यप्यन्यत्र
विस्मरणोपपत्तिर्दृष्टा, नैतावतान्यत्रापि विस्मरणोपपत्तिः शक्यते वक्तुम्
—इति ? असदभिप्रायोऽयम् ; बाढमन्यत्र दृष्टमन्यत्र भवतीत्युच्यते ;
अयमेव हि सामान्यतो दृष्टस्य विषयः । अत्राभिधीयते —नैवेयं प्रमाण-

पञ्चिका

प्रमाणं यदुत विस्मरणोपपत्तिः ; विस्मरणं हि तदुच्यते यद्गृहीतस्यापि वस्तुनः
कुतश्चिन्निमित्तादस्मरणम् ; न पुनः स्मरणाभावमात्रम् अगृहीतेऽपि वस्तुनि ;
यत एव च विस्मरणसिद्धेः सिध्यति ग्रहणं सद्भावश्चेति, अतो भवति विस्मरणं
प्रमाणम् । उक्तं च स्मृत्यधिकरणे—"विस्मरणमप्युपपद्यते" इति । एतद्वेद-
वाक्यास्तित्वहेतुः । यदप्युच्यते—यथा विद्यमानस्याप्यनुपलम्भनं भवतीति
नैतावता विना प्रमाणेन शशविषाणमस्तीति, तदप्ययुक्तम् ; यदि हि विद्यमान-
स्यैव शशविषाणस्यानुपलम्भनम्, केन वा शक्यते वक्तुम 'शशविषाणं नास्ति'
इति ? 'विद्यमानत्वेन निश्चितस्येयमनुपलब्धिः' इति निश्चये विद्यमानत्वस्यापि
निश्चितत्वान्नाभावः शक्यते वक्तुम् । अथायमभिप्रायः—यद्यप्यन्यत्र हिमव-
त्कूपारामादिषु कर्तृविस्मरणोपपत्तिर्दृष्टा, नैतावतेहापि सम्बन्धुर्विस्मरणोपपत्तिः
शक्यते वक्तुमिति ? असदभिप्रायोऽयम् ; यतो बाढमतिशयेनान्यत्र दृष्टमन्यत्र
भवतीत्युच्यते । अयमेवान्यत्र दृष्टस्यान्यत्र सद्भावो हि यस्मात्सामान्यतो दृष्टस्य
विषयः । यदि पुनरेकत्र दृष्टमन्यत्र न भवतीति नियमः, सामान्यतो दृष्टमनुमानं तर्हि

---

१. Omitted भवतीत्युच्यते—भवतीति. ग.

## बृहती

तयोपन्यस्यते विस्मृतिरनुपलब्धिर्वा, किं तु उपलब्धस्यार्थस्य कारणदोषनिराकरणायेदमुपन्यस्यते । इह पुनर्भवतानुपलब्धावेवेदमुपन्यस्तमिति असम्बद्धमित्युक्तम् । यथा घटादेरुपलब्धस्यानुपलब्धिरस्तीति नैतावता शशविषाणस्यास्तित्वं शक्यते वक्तुम् । उपलब्धिविषयस्यानुपलब्धिः कारणान्तरमपेक्षते ; अनुपलब्धे पुनरनुपलब्धेरेवानुपलब्धिः । तस्मात् सूक्तमिदम् ।

## पञ्चिका

हतम् । अत्राभिधीयते—नैवेयं प्रमाणतयोपन्यस्यते विस्मृतिरनुपलब्धिर्वा, किं तु उपलब्धस्यार्थस्य कारणदोषनिराकरणायेदमुपन्यस्यते । अस्यार्थः—न क्वचिदस्माभिर्विस्मरणमनुपलब्धिर्वा वस्तुसद्भावे प्रमाणतयोपन्यस्यते; किन्तु यदन्यत एवोपलब्धं यथा स्मृत्यधिकरणे स्मरणान्यथानुपपत्त्या वेदवाक्यम्, तस्य यः कारणदोषः संभाव्यते—यदि वेदवाक्यमस्ति, स्मर्येतोपलभ्येतैव वा ; तस्मान्नेदमनुमानमदुष्टसामग्रीकम्—इति, स विस्मरणेनानुपलब्ध्या च निराक्रियते—"विस्मरणमप्युपपद्यते अनुपलब्धिरप्युपपद्यते" इति । इह पुनर्भवतानुपलब्धावेव सर्वैः प्रमाणैरनुपलब्ध एव सम्बन्धरि[1] इदं विस्मरणमुपन्यस्तमित्यसम्बद्धं कारणदोषनिराकरणेनापि न संबध्यत इत्युक्तम् । भाष्यार्थमाह—यथा घटादेरुपलब्धस्यानुपलब्धिरस्तीति नैतावता शशविषाणस्यास्तित्वं शक्यते वक्तुम् । कस्मान्न शक्यत इत्यत्राह—उपलब्धिविषयस्यानुपलब्धिः कारणान्तरमपेक्षते । यदि हि[2] तादृश्येव सामग्री, किमिति प्रागिव नोपलभ्यते ? तेन तत्रानुपलब्धौ कारणान्तरं वाच्यम् । अनुपलब्धे पुनः शशविषाणादौ अनुपलब्धेरेवानुपलब्धिः ; न तत्र कारणान्तरकल्पना । एवं च दृष्टान्तं व्याचक्षाणेन दार्ष्टान्तिकेऽप्येषा योजना दर्शिता । यद्यपि च विस्मरणमन्यत्रोपलब्धस्याप्यस्ति, नैतावता विना प्रमाणेन स्मरणाभावमात्रात् सम्बन्धारं प्रतिपद्येमहीति । तस्मात्सूक्तमिदम् ।

---

१. सम्बन्धुरिदम् . ग. २. Omitted हि. ग.

भाष्यम्

सम्बन्ध इति ।

ननु अर्थापत्त्या सम्बन्धारं प्रतिपद्येमहि , न

बृहती

"नन्वर्थापत्त्या" इति किमियं प्रमाणसंज्ञोपन्यस्ता? ओमित्युच्यते । किं पुनरत्र 'नोपपद्यते'—इत्यनया बुद्धया परिगृह्यते? ननु सम्बन्धस्य कर्ता । कथं पुनरसौ नोपपद्यते? प्रथमश्रवणेऽर्थानवगतेः । यदि प्रथमश्रवणेऽर्थं न प्रतिपद्यते, किमायातं सम्बन्धस्य कर्तुः? एवं तर्हि यदि गृहे देवदत्तो नोपलभ्यते, किमायातं बहिर्भावस्य? न ब्रूमः—बहिर्भावो नोपपद्यते—इति । किं तर्हि? विद्यमानता नोपपद्यते—इत्युक्तम् । सैवेयम्—बहिरस्ति

पञ्चिका

"नन्वर्थापत्त्या सम्बन्धारं प्रतिपद्येमहि" इति भाष्यम्, तदाक्षिपति—नन्वर्थापत्त्येति किमियं प्रमाणसंज्ञोपन्यस्ता? ओमित्युच्यते—इत्येकदेशी ब्रवीति । राद्धान्ती दूषयति--किं पुनरत्र 'नोपपद्यते' इत्यनया बुद्धया परिगृह्यते? अर्थापत्तौ यत् 'नोपपद्यते' इत्यनया बुद्धया परिगृह्यते, तदेव गम्यम्; तत्र यदीयमर्थापत्तिः, तदात्राप्यनुपपद्यमानतया गृह्यमाणेन प्रमेयेन भवितव्यम् । तत्र किं तदिति पृच्छति । एकदेश्येवाह—ननु सम्बन्धस्य कर्तेति । सिद्धान्त्याह—कथं पुनरसौ नोपपद्यत इति । एवं परिगृह्यते? पुनरप्येकदेश्येवाह—प्रथमश्रवणेऽर्थानवगतेरिति । सिद्धान्त्याह—यदि प्रथमश्रवणेऽर्थं न प्रतिपद्यते, किमायातं सम्बन्धस्य कर्तुः? न तस्यानुपपत्तिः कदाचिदस्तीति भावः । एकदेश्याह—एवं तर्हि प्रसिद्धार्थापत्त्युदाहरणेऽपि यदि गृहे देवदत्तो नोपलभ्यते, किमायातं बहिर्भावस्य? तत्रापि गम्यस्य बहिर्भावस्यानुपपद्यमानता नास्तीत्यर्थः । सिद्धान्ती विवेकमाह—न ब्रूमो बहिर्भावो बहिर्देशविशिष्टो भावो नोपपद्यत इति । किं तर्हि? विद्यमानता, या आगमतः प्रतिपन्ना 'जीवति देवदत्तः' इति, सा नोपपद्यत इत्युक्तमर्थापत्तिलक्षणे; विद्यमानतैव हि गृहादर्शने

भाष्यम्

ह्यकृतसम्बन्धाच्छब्दादर्थं प्रतिपद्यमानान् उपलभामहे। प्रति-

बृहती

—इति संवित्। इह पुनः प्रथमश्रवणेऽर्थानवगतेः सम्बन्धस्य कर्त्रा कः सम्बन्धो दृष्टः? अथेदं मनसि विपरिवर्तते—न प्रथमश्रवणात्प्रतिपद्यन्ते, प्रतिपद्यन्ते च द्वितीयादिश्रवणे; तस्मात् शब्दादन्यत् कारणान्तरं मृग्यमिति? कार्यतस्तर्हीदं कारणानुमानमुपन्यस्तम्। कथं तर्हि "अर्थापत्त्या" इति? अर्थादनुमानापत्तिरित्यर्थः। कस्मात्? कार्यादर्थात्--इत्युक्तम्। ननु चानुमानमपि नोपपद्यते, प्रथमश्रवणादप्रतीतेरनैकान्त्यात्, वेदवाक्यादेव प्रथम-

पञ्चिका

सत्यनुपपन्नतया गृह्यत इति व्यासेन विवृतमस्माभिः। सैवेयं विद्यमानता अनुपपद्यमानतया गृह्यमाणा बहिरस्तीति संवित्; तस्मात्तत्रानुपपद्यमानमेव प्रतीयते। **इह पुनः प्रथमश्रवणेऽर्थानवगतेः सम्बन्धस्य कर्त्रा कः सम्बन्धो दृष्टः?** तत्र हि गृहाभावदर्शनं देवदत्तसत्तासम्बन्ध्येव, तेन तदनुपपत्तिं सत्ताया वितनोति; इह पुनः प्रथमश्रवणेऽर्थानवगतेः सम्बन्धा सह कश्चिदपि सम्बन्धो नास्तीति न सा सम्बन्धुरनुपपत्तिमावहति। **अथेदं मनसि विपरिवर्तते—न प्रथमश्रवणात्प्रतिपद्यन्ते, प्रतिपद्यन्ते च द्वितीयादिश्रवणे; तस्माच्छब्दादन्यत्कारणं मृग्यमिति?** यदि हि शब्द एवात्र कारणं स्यात्, तदा प्रथमश्रवणेऽपि शब्दमात्रादवगतिर्भवेत्; न च भवति; तस्मादन्यदेवार्थावगतेः कारणमस्तीति। दूषयति— **कार्यतस्तर्हीदं कारणानुमानमुपन्यस्तम्।** संप्रति निरस्त एकदेश्याह— **कथं तर्हि "अर्थापत्त्या"** इति भाष्यं त्वत्पक्षेऽपि? सिद्धान्ती समर्थयते — **अर्थादनुमानापत्तिरित्यर्थः।** तेनार्थादापत्तिरर्थापत्तिरुक्ता; आपत्तिः कल्पना अनुमानं चासावापत्तिश्चेत्यनुमानापत्तिः। **कस्मात्? कार्यादर्थात्**[1]। अर्थावगतिलक्षणादित्युक्तं सम्बन्धाक्षेप एव। **ननु चानुमानमपि नोपपद्यते, प्रथमश्रवणादप्रतीतेरनैकान्त्यात्, वेदवाक्यात्प्रथमश्रुतादेवार्थावगतेः।** अत्र चानेकान्तशब्देन भागासिद्धो वेदितव्यः। वेदे

---

१. अर्थात् कार्यात्. क.

भाष्यम्

पद्येरंश्चेत्, प्रथमश्रवणेऽपि प्रतिपद्येरन्; तदनुपलम्भनाद-

बृहती

श्रुतादवगतेः। ननु च पदगतेयं चिन्ता। किमिदं पदं नाम? गवादयः—देवदत्त गामभ्याज—इत्येवमादिषु वाक्येषु। किं कार्यान्यतया प्रसिद्धाः, उत वाक्यार्थावगतिरेव कार्यम्? बाढं कार्यान्यतया प्रसिद्धाः। कस्मिन्? व्यवहारे। केन वृद्धा व्यवहरन्ति? 'देवदत्त गामभ्याज शुक्लाम्'—इत्या-

पञ्चिका

प्रथमश्रवणेऽर्थाप्रतीत्यसिद्धेः; न पुनः सव्यभिचारोऽनैकान्तिकोऽभिमतः। यदि साध्यसम्बन्धसद्भावव्यतिरेकेणापि वृत्तिः सिध्येत्, स्यात्सव्यभिचारता; न चास्ति,[1] वेदवाक्यस्यापि साध्यकोटिनिक्षेपात्। अत्रैकदेशी स्वमतेन परिहरति—ननु च पदगतेयं चिन्तेति। अस्यार्थः—पदपदार्थयोरौत्पत्तिकसम्बन्धचिन्तेयम्; तेन पदाभिप्रायेणेदमुच्यते—प्रथमश्रवणेऽर्थानवगमादिति। न च किञ्चन पदं प्रथमश्रवणेऽर्थमवगमयतीति नास्ति भागासिद्धतेति। सिद्धान्ती दूषयति—किमिदं पदं नाम? यद्विषया चिन्ता भवता क्रियते। एतदेवैक्याह[2]—प्रसिद्धा गवाश्वादयः शब्दाः 'देवदत्त गामभ्याज' इत्येवमादिषु वाक्येषु। सिद्धान्त्याह—किं कार्यान्यतया प्रसिद्धाः, उत वाक्यार्थावगतिरेव कार्यमिति? अयमाशयः—न पदानां वाक्यार्थावगतेरन्यत्कार्यमस्ति; या च सा वाक्यर्थावगतिः सा प्रथमश्रवणेऽपि भवति; वाक्याद्धि सा भवति, नैकस्मात्पदात्। न च वाक्यस्य द्वितीयश्रवणापेक्षा। एकदेश्याह—बाढं कार्यान्यतया प्रसिद्धाः। आवापोद्धाराभ्यां हि पदानां पदार्थमात्रावगम एव कार्यतयावसितः। राद्धान्ती पृच्छति—कस्मिन्? उत्तरम्—व्यवहारे। येन वृद्धा व्यवहरन्ति; व्यवह्रियतेऽनेनेति व्युत्पत्त्या वाक्यमेव व्यवहारशब्देनोच्यते। तेन यद्यपि वाक्येन व्यवहारः, तथापि न वाक्यार्थावगतिरेवावापोद्धाराभ्यां पदानां कार्यमिति भावः। पुनः पृच्छति—केन वृद्धा व्यवहरन्तीति। अस्यायमाशयः—वाक्येन वृद्धा व्यवहरन्ति, तत्र च

१. न च सास्ति. ग. २. एकदेश्याह ग.

बृहती

दिना। एवं तर्हि वाक्यार्थेन व्यवहारः। न हि व्यवहाराप्रसिद्धोऽर्थः कार्यान्तरतया शक्यतेऽवगन्तुम्। कथं तर्हि—"अथ गौरित्यस्य शब्दस्य कोऽर्थः? सास्नादिविशिष्टा आकृतिः"—इति चोत्तरमसति कार्यान्यत्वे? कथं वा वृद्धव्यवहारेणास्यौत्पत्तिकत्वाभिधानम्? तस्मात् प्रतिज्ञासाधनयोर्यथैकवाक्यता भवति, तथायं ग्रन्थो वर्णनीयः। स तु तद्भूताधिकरणे स्वयमेव भाष्यकारेण वर्ण्यते इत्युपरम्यते।

पञ्चिका

वाक्यार्थावगतिरेव कार्यं दृश्यते; न शुद्धपदार्थावगतिरिति। पुनरुत्तरं तेनैवाशयेन 'देवदत्त गामभ्याज शुक्लाम्' इत्यादिना। सिद्धान्त्यापादयति—**एवं तर्हि वाक्यार्थेन व्यवहारः; न हि व्यवहाराप्रसिद्धोऽर्थः कार्यान्तरतया शक्यतेऽवगन्तुम्**। अत्र चार्थे हिशब्दः, न चेत्यर्थः। यद्यप्यावापोद्वाराभ्यां पदानां शक्तिनिरूपणा, तथापि यथाव्यवहारमेव युक्ता; व्यवहारश्च वाक्यार्थविषय एव दृश्यते; तद्विषयैव च शब्दस्यापि शक्तिः कल्पयितुं युक्ता; तेन वाक्यार्थस्य प्रधानभूतस्यानेकार्थानुबन्धत्वात्तदनुबन्धभूतार्थावगतिकारकतैवावापोद्वाराभ्यामवसीयते; तेन नान्तरीयकी पदार्थावगतिः; कार्यं तु सर्वपदानामपि वाक्यार्थावगतिरेवेति। एकदेशी ग्रन्थविरोधमाह—**कथं तर्हि "अथ गौरित्यस्य शब्दस्य कोऽर्थः" इति, "सास्नादिविशिष्टा आकृतिः" इति चोत्तरमसति कार्यान्यत्वे?** यदि पदस्य पृथक्कार्यं नास्ति, कथमर्थविशेषावगतिलक्षणकार्यविषयः प्रश्नः, पदार्थावगतिलक्षणकार्यप्रदर्शनेन चोत्तरम्? राद्धान्त्येवाह—**कथं वा वृद्धव्यवहारेणास्यौत्पत्तिकताभिधानम्?** अस्यार्थः—यथायं ग्रन्थो मन्मते न घटत इति मन्यसे, तथा त्वन्मतेऽपि वृद्धव्यवहारेणास्य सम्बन्धस्यौत्पत्तिकतयाभिधानं न घटते; वृद्धव्यवहारे हि निरूप्यमाणे वाक्यार्थावगतिरेव कार्यतयावभाति, न पदार्थमात्रावगतिः; यत एवं दुःश्लिष्टता, **तस्मात्प्रतिज्ञासाधनयोर्यथैकवाक्यता भवति, तथायं ग्रन्थो वर्णनीयः**। प्रतिज्ञा सम्बन्धस्यौत्पत्तिकता, साधनं वृद्धव्यवहारस्यानादिता; तयोर्यथा साध्यसाधनभावेनैकवाक्यता भवति, तथायं

भाष्यम्

**वश्यं भवितव्यं सम्बन्धा, इति चेत्; न, सिद्धवदुपदेशात् ।**

बृहती

**कस्तर्ह्यनैकान्तिकपरिहारः ? निमित्ताभिप्रायं तदुच्यते, अप्रतिपन्ननिमित्तः प्रथमश्रुतान्न प्रतिपद्यते । तस्मात् शब्दादन्यन्निमित्तान्तरमस्तीत्यभिप्रायः । कः पुनर्वाचकनिमित्तयोर्भेदः? इदमर्थमेव हि तद्भूताधिकरणमारभ्यते इत्यलमतिप्रपञ्चेन । "न, सिद्धवदुपदेशात्" इति । किमिदम्— सिद्धवदुपदेशात्—इति? इदमिदम्—नात्र कर्ता शक्यते कल्पयितुम्, वृद्धव्यवहार-**

पञ्चिका

ग्रन्थो वर्णनीयः । स तु तद्भूताधिकरणे स्वयमेव भाष्यकारेणैव वर्णित "पदार्थप्रतिपत्तिद्वारेणैव पदानां वाक्यार्थप्रतिपादकत्वम्" इति वदता; तेन निमित्तभूताकृत्यर्थतोक्ता । एतच्चोत्तरत्रापि टीकाकारेणोक्तम् । संप्रति निराकृतपक्ष एकदेश्येव सिद्धान्तिनं पर्यनुयुङ्क्ते—**कस्तर्ह्यनैकान्तिकपरिहार** इति । उत्तरं ददाति—**निमित्ताभिप्रायं तदुच्यते; अप्रतिपन्ननिमित्तः प्रथमश्रुतान्न प्रतिपद्यते** । अस्यार्थः—निमित्तं वाक्यार्थप्रतिपादने पदार्थात्मकमभिप्रेत्योच्यते "प्रथमश्रुतः किं न प्रत्याययति" इति । एतदुक्तं भवति—प्रथमश्रुतं पदं निमित्तभूतं पदार्थं न प्रतिपादयति; अप्रतिपन्ननिमित्तश्च प्रथमश्रुतात्पदाद्वाक्यार्थमपि न प्रतिपद्यत इति सिद्धं वेदेऽपि प्रथमश्रुतस्याप्रतिपादकत्वम् । तस्माच्छब्दादन्यन्निमित्तान्तरं वाक्यार्थप्रतिपत्तेरित्यभिप्रायः । नन्वेवं यदि सर्वपदान्येव वाक्यार्थप्रतिपत्तौ निमित्तभूतानि तदा वैयाकरणदर्शनमङ्गीकृतम्— सर्वं पदजातं मिलित्वा वाक्यार्थं प्रतिपादयतीति, तत्र काल्पनिक एव विभाग इति । तदनेनाभिप्रायेणाह—**कः पुनर्वाचकनिमित्तयोर्भेद** इति । उत्तरम्—**इदमर्थमेव** हि भेदकथनार्थमेव हि तद्भूताधिकरणमारभ्यते । तत्रेदमुच्यते—निमित्तपक्षे पदानि स्वार्थेष्वन्वितेषु व्याप्रियमाणानि वाक्यार्थप्रतिपत्तिमुपजनयन्ति, न पुनः प्रत्यस्तमितपदविभागमनवयवमेव वाक्यार्थं वक्तीति । एवं च कथ्यमाने कथित एव वाचकनिमित्तयोर्भेद इत्यलं प्रपञ्चेन; तद्भूताधिकरण एव प्रपञ्चो भविष्यति ।

बृहती

**स्यानादित्वात्; अत औत्पत्तिकः सम्बन्ध इति सिद्धम् ।**

पञ्चिका

**"न, सिद्धवद्धुपदेशात्"** । अत्र च सूत्रे 'उपदेशः' इति प्रथमान्तं पञ्चम्यन्ततया विपरिणमय्य सिद्धवदिति चाध्याहृत्य भाष्यकारेणेदमुक्तम् । अस्यार्थः—सिद्धवदिदं सम्बन्धस्यापौरुषेयत्वं सिद्धमित्यर्थः । उपदेशात् वृद्धोपदेशात्, एकेन वृद्धेनापरस्मै वृद्धायानुष्ठानोपदेशे पार्श्वस्थस्य सम्बन्धग्रहणसंस्कारमात्रादेवार्थप्रतीत्युपपत्तेः सम्बन्धकृत्कल्पनानुपपत्तिः । तमिममस्यार्थमबुद्ध्वा पृच्छति—किमिदं सिद्धवदुपदेशादिति । इदमिदम्—नात्र सम्बन्धस्य कर्ता शक्यते कल्पयितुमिति, वृद्धव्यवहारस्यानादित्वात् । अत औत्पत्तिकः सम्बन्ध इति सिद्धम् । यदि वृद्धव्यवहारोऽनादिर्न स्यात्, तदा प्रथमवृद्धयोः सम्बन्धग्रहणोपायाभावाच्छब्दप्रयोगार्थप्रतीती न स्याताम्; तदभावाच्च वृद्धव्यवहाराप्रवृत्तावपरेषामपि सम्बन्धाग्रहणे तथैव प्रयोगप्रतीती विच्छिद्येयाताम्; अनादिस्तु वृद्धव्यवहारः, पुरुषान्तरपूर्वकत्वात्पुरुषान्तरोत्पत्तेः । यथा खल्वद्यतनाः पुरुषाः पुरुषान्तरपूर्वकाः तथा प्राच्या अपीति ।

अत्र केचिदर्थवादगतसृष्टिप्रलयश्रुत्युपनिपातमात्रोपजातश्रद्धातिशयविप्रलब्धबुद्धयः कणभक्षाक्षचरणमतप्रवणचेतसः सर्वस्य तनुभुवनादेरीश्वरकारणतामाचक्षाणाः प्रचक्षते—सर्वं सावयवमवयवसंयोगसमासादितात्मलाभमधुनातनमुदीक्षामहे ; सावयवं च तनुभुवनादिकम् ; अवयवसंयोगश्च द्व्यणुकपर्यन्तः; द्व्यणुकोऽप्यवयवी परमाणुद्वयसंयोगारम्भणीयः ; परमाण्वोश्च परस्परं कर्मजः संयोगः; कर्म चादृष्टवदात्मसंयोगादेव परमाणुषु प्रतिज्ञायते । तदुक्तम्—"अणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि" इति । अदृष्टं चाचेतनम्; न चाचेतनं चेतनानधिष्ठितं क्वचिदपि कार्ये पर्याप्नोति वास्यादिकमिव । न चेदमुचितम्—य एव ते क्षेत्रज्ञाः त एव तेषामदृष्टानामधिष्ठातारो भवेयुरिति, अज्ञत्वात् ; ज्ञाता हि पदार्थस्य पदार्थसामर्थ्यस्य चाधिष्ठातोपलभ्यते यथा तक्षा वास्याः । न च क्षेत्रज्ञाः स्वसमवायिनी अपि धर्माधर्मलक्षणे अदृष्टे स्वरूपतः शक्तितो वा वेदितुमलमिति तदतिरेकी चेतनः कल्प्यते । तेन चेतनाति-

पञ्चिका

शयोऽधिष्ठाता ; अदृष्टवशोपजातकर्मनिमित्तसंयोगपरमाण्वारब्धद्व्यणुकादिकार्यपरम्परासम्भूतं तनुभुवनादिकमादिमदवगम्यते, तदोत्पत्तिमच्च सकलं विनाशयोगीति साधितमिति कथमिदानीमनादिवृद्धव्यवहारपरम्परेति । तदिदं प्रतिपक्षकक्ष्यामपि नारोढुं क्षमते इत्युपेक्षितं भगवता भाष्यनिबन्धनकारेण । तथा हि— यद्यपि सिध्येदयं मनोरथः, तथापि कथमेकदैव सर्वेऽवयविनो विलीयन्त इति समधिगमनीयम् । अधुनेव किमिति कस्यचिदुदयः, कस्यचिद्विलय इति नाङ्गीक्रियते दृष्टानुगमादिति मन्यामहे । एवं च वृद्धव्यवहारपरम्परां कोऽपहरति ? अपि च यदि क्षेत्रज्ञा नाधिष्ठातारो ज्ञानाभावात्, अन्यस्तर्हि कथमधिष्ठाता, तस्यापि ज्ञानानुपपत्तेः ? आत्ममनःसंयोगादृष्टापेक्षाद्धि ज्ञानानामुत्पत्तेः तत्तदिन्द्रियार्थसंयोगसचिवात् । न चादृष्टेषु सामग्रीयमुपपद्यते । अथ तस्य कारणान्तरमस्तीति, तन्न; दृष्टकारणपरिहारेण अदृष्टकारणान्तरानुमानानुपपत्तेः । दृष्टानुसारि सर्वत्रानुमानम् । सामान्यतो दृष्टमपि न दृष्टोपमर्देन क्वचिद्वर्तते । नन्वेतदपि दृष्टम्—चेतनानधिष्ठितमचेतनं न प्रवर्तत इति । एतत्तर्हि परिहीणं भवति । सत्यम्, उभयत्र प्रहाणे किं परिहीयतामिति ; तत्र विशेषविषयत्वादस्मदीयमेव ज्ञानोदयकारणानुमानमादरणीयम्; न पुनरीश्वरवादिनामत्यन्तसामान्यविषयम्—अचेतनं चेतनाधिष्ठितमिति, विशेषानुमानस्य बलीयस्त्वात् । तदुक्तं भगवता वार्तिककारेण—

"प्रसिद्धावयवं यत्स्याद्विशेषे वा प्रतिष्ठितम् ।
तत्साध्यांशकसामान्यदृष्टाच्च बलवत्तरम् ॥
बाधः सामान्यशास्त्रस्य विशेषश्रुतिभिर्यथा ।
अनुमानान्तरैरेवमनुमानस्य बाधनम् ॥" इति ।

एतेनेदमपि निराकृतं भवति—नित्यैवेश्वरस्य बुद्धिरिति । यतो या या बुद्धिः सा सोत्पत्तिमती विनाशिनी च ; तेनेश्वरस्यापि धिया तथाविधयैव भवितव्यम् । किञ्च, अधिष्ठानार्थोऽपि वक्तव्यः ; यादृशं हि वास्यादिषु करसंयोगादिकमधिष्ठानं दृष्टम्, तादृशमेवादृष्टेष्वनुमातव्यम्; न च तत्संभवतीति । तथा प्रवृत्तिरपि कान्या स्वरूपलाभाददृष्टस्य यथा वास्याः क्रिया काष्ठादिसंयोगश्च ? आत्मलाभश्चादृष्टस्य यागाद्यनुष्ठानसिद्ध एव इति । तस्मादीश्वरवादोऽस्माभिरपि न निराकृतः ।

बृहती

किमिदमन्यथैव प्रक्रान्तमन्यथैवोपसंहृतम्—शब्दादेवार्थावगतिः इति प्रक्रान्तम् ; वृद्धव्यवहारात्—इत्युपसंहृतम् ; तदिदमन्यत्राहितमन्यत्रैव निपतितमकुशलस्येव धन्विनः शरनिकुरुम्बम्। वृद्धव्यवहारादप्यर्थेऽवगम्यमाने नैव शब्दादर्थोऽवगतो भवति हस्तसंज्ञादिभ्य इव। हस्तसंज्ञादयोऽपि वृद्धव्यवहारप्रसिद्धा एव, नार्थेन सम्बद्धा इति; व्युत्पत्तिरेव ह्यर्थावबोधकारणम्, न हस्तसंज्ञादयः; व्युत्पत्त्युपाधयो हिं ते। तस्मादुपाधिः शब्दः, नार्थावगतेः कारणं कशाङ्कुशप्रतोदाभिघातवत्।

पञ्चिका

अत्र चोदयति—किमिदमन्यथैव प्रक्रान्तमन्यथैवोपसंहृतम् ? शब्दादेवार्थावगतिरिति प्रक्रान्तम्; शब्दस्य प्रत्यायकत्वमर्थस्य प्रत्याय्यत्वमिति बदता प्रक्रान्तम् ; वृद्धव्यवहारापेक्षार्थावगतिरिति वदतान्वयव्यतिरेकाभ्यां व्यवहारादेवार्थावगतिरित्युपसंहृतम्। तदिदमन्यत्राहितमन्यत्रैव निपतितमकुशलस्येव धन्विनः शरनिकुरुम्बमिति। यस्माद् वृद्धव्यवहारादप्यर्थेऽवगम्यमाने नैव शब्दादर्थोऽवगतो भवति हस्तसंज्ञादिभ्य इव। दृष्टान्तं विवृणोति—हस्तसंज्ञादयोऽपि वृद्धव्यवहारप्रसिद्धा एव। वृद्ध एव हस्तसंज्ञामपि संकेतयति; न चार्थेन हस्तसंज्ञादयः सम्बद्धा अर्थप्रतिपादका [3]भवन्तीत्यभिप्रायः। व्युत्पत्तिरेव ह्यर्थावबोधकारणम्, न हस्तसंज्ञादयः; व्युत्पत्त्युपाधयो हि ते। अस्यार्थः—हस्तसंज्ञा ह्येवं सङ्केत्यते 'यदायमर्थो ममाभिप्रेतः, तदायं मया हस्तश्चालयितव्यः' इति। स यदा तथैव हस्तं पुनश्चालयति, तदा प्राचीनव्युत्पत्तिं स्मृत्वा हस्तसंज्ञातः पुनरभिप्रायविशेषमवसायार्थमवगच्छति; उपाधिमात्रं हस्तसंज्ञा। तस्मादुपाधिः शब्दो नार्थावगतेः कारणं कशाङ्कुशप्रतोदाभिघातवत्। कशाङ्कुशप्रतोदैरश्वेभवृषभाणामभिघातवत्।

---

१. निपतितं मदाकुलस्येव ग.
२. पदार्थे. ग.
३. न भवन्तीत्यर्थः. ग.

भाष्यम्

यदि सम्बन्धुरभावात् नियोगतो नार्था उपलभ्येरन् , ततोऽ-र्थापत्त्या सम्बन्धारमवगच्छामः । अस्ति तु अन्यः प्रकारः ; 'वृद्धानां स्वार्थेन संव्यवहरमाणानां उपशृण्वन्तो बालाः प्रत्यक्षमर्थं प्रतिपद्यमाना दृश्यन्ते ; तेऽपि वृद्धा यदा बाला

बृहती

अत एव च शब्दस्वभावज्ञैरुक्तम्—विवर्त एव वेदवादिभि-राश्रयणीयः—इति । अत्राभिधीयते—किमनेन विवर्तपक्षपातेन ? प्रत्युक्तोऽयमेकत्वानुपलब्धेः । यद्येवं प्रत्युक्तं तर्हि वेदस्य प्रामाण्यम् । अत्रोच्यते—वृद्धव्यवहारव्युत्पत्त्यावगम्यमानेऽर्थे शब्दादन्यत् कारणं किं वा मन्यते भवान् ? ननु व्युत्पत्तिमेव कारणतया मन्यामहे । मैवम् ; शब्दार्थसम्बन्धविषया हि व्युत्पत्तिः ; न व्युत्पत्तेः शब्दार्था-वगतिः ; व्युत्पत्तिरेव ह्यादिमती ; न पुनः शब्दार्थयोः सम्बन्धः, तस्य विषयत्वात् । तस्मात् "न ; सिद्धवदुपदेशात्"—इति सम्यगभिहितम् ।

पञ्चिका

प्रतोदः प्राजनम् । यत एव मीमांसकपक्षे शब्दार्थयोः सम्बन्धो न निर्वहति, अत एव शब्दस्वभावज्ञैर्वैयाकरणैरिदमुक्तम् 'विवर्त एव वेदवादि-भिराश्रयणीयः' इति । अत्र सिद्धान्ती परिहरति—किमनेन विवर्तपक्ष-पातेन ? प्रत्युक्तोऽयं शब्दानामर्थानां चैकत्वानुपलब्धेः । विवर्तवाद्याह—यद्येवम्, प्रत्युक्तं तर्हि वेदस्य प्रामाण्यम् । शब्दस्यार्थावगमकत्वाभावात् । अत्रोच्यते—वृद्धव्यवहारव्युत्पत्त्यावगम्यमानेऽर्थे शब्दादन्यत् किं वा कारणं मन्यते भवान् ? ननु व्युत्पत्तिमेव कारणतया मन्यामहे । मैवम् ; शब्दार्थसम्बन्धविषया हि व्युत्पत्तिः ; न व्युत्पत्तेः शब्दार्थावगतिः । अस्यार्थः[1]—वृद्धव्यवहारे हि 'अनेन शब्देनायमर्थः

१. Omitted. अस्यार्थः. ग.

भाष्यम्

आसन्, तदा अन्येभ्यो वृद्धेभ्यः तेऽप्यन्येभ्यः' ; इति नास्त्यादिः—इत्येवं वा भवेत् ; अथवा 'न कश्चिदेकोऽपि शब्दस्यार्थेन सम्बन्ध आसीत्, अथ केनचित् सम्बन्धाः प्रवर्तिताः'—इति ; अत्र वृद्धव्यवहारे सति नार्थादापद्येत सम्बन्धस्य कर्ता । अपि च व्यवहारवादिनः प्रत्यक्षमुपदिशन्ति, कल्पयन्ति इतरे सम्बन्धारम् ; न च प्रत्यक्षे प्रत्यर्थिनि कल्पना साध्वी । तस्मात् सम्बन्धुरभावः ।

बृहती

ननु च कार्येऽपि सम्बन्धे वृद्धव्यवहारव्युत्पत्तिर्बालानामनुगुणैव ; कथमियं प्रतिपक्षतयोपन्यस्यते ? सत्यम् ; प्रमाणान्तरपरिज्ञेये हि

पञ्चिका

प्रतिपाद्यते' इति शब्दार्थयोर्वाच्यवाचकसम्बन्धाध्यवसानमेव व्युत्पत्तिरित्युच्यते, न पुनरन्यत् ; ततश्च व्युत्पत्तिस्वरूपमेवेदृशं यदुत 'शब्दादर्थोऽवगम्यते' इति । तेन व्युत्पत्तिरेव सम्बन्धावगतिरूपा । सा आदिमती ; न पुनः शब्दार्थयोः सम्बन्धः, तस्य विषयत्वात् । यथा आत्मप्रतीतिरादिमती, नात्मापि । तस्मात् "न, सिद्धवदुपदेशात्" इति सम्यगभिहितम् ।

संप्रति यदुक्तं परैः "यज्जातीयो यतः सिद्धः" इति, तद्दूषयितुं पूर्वपक्षमारचयति—ननु च कार्येऽपि सम्बन्धे वृद्धव्यवहारव्युत्पत्तिरनुगुणैव बालानाम् ; कथमियं प्रतिपक्षतयोपन्यस्यते ? अस्यार्थः—यथा कृतकसम्बन्धेऽपि[1] देवदत्तादिपदे वृद्धव्यवहारे व्युत्पत्तिर्भवति, स एव[2] कृतकः तथा गवादिष्वपि भवत्विति । सत्यम् ; प्रमाणान्तरपरिज्ञेये हि कार्ये व्युत्पत्तिर्व्याकरणादिव्युत्पत्तिरिव, न विरोधः । केल्प्ये

१. अथ च. क. २. अथ च कृतकः कस्य. ग.

भाष्यम्

'अव्यतिरेकश्च'। यथा अस्मिन् देशे सास्नादिमति गोशब्दः, एवं सर्वेषु दुर्गमेष्वपि ; बहवः सम्बन्धारः कथं संगंस्यन्ते? एको न शक्नुयात्; अतो नास्ति सम्बन्धस्य कर्ता । अपर आह 'अव्यतिरेकश्च'। न हि सम्बन्धव्यतिरिक्तः कश्चित्कालोऽस्ति, यस्मिन् न कश्चिदपि शब्दः केनचिदर्थेन सम्बद्ध आसीत्। कथम्? सम्बन्धक्रियैव हि नोपपद्यते, अवश्यमनेन सम्बन्धं कुर्वता केनचिच्छब्देन कर्तव्यः; येन क्रियेत, तस्य केन कृतः? अथान्येन केनचित्कृतः, तस्य केन ?---इति नैवात्रतिष्ठते । तस्मादवश्यमनेन सम्बन्धं कुर्वता अकृतसम्बन्धाः केचन शब्दा वृद्धव्यवहारसिद्धा अभ्युपगन्तव्याः । अस्ति चेत् व्यवहारसिद्धिः, न नियोगतः सम्बन्धा भवितव्यमिति अर्थापत्तिरपि नास्ति ।

बृहती

कार्ये व्युत्पत्तिः व्याकरणादिव्युत्पत्तिरिव, न विरोध ; कल्प्ये पुनर्निरुणद्धि कल्पनाम् ; न चात्र प्रमाणान्तरमस्तीत्युक्तम्। किं च, कार्ये हि सम्बन्धे न कर्तुर्दुर्गमेषु देशेषु सम्बन्धकरणेन किञ्चन

पञ्चिका

पुनर्निरुणद्धि कल्पनामिति । अस्यार्थः—यत्र प्रमाणान्तरेण कार्य एव सम्बन्धोऽवगतः, तत्र भवतु कार्यता ; यत्र पुनः प्रमाणान्तरं कार्यत्वे नास्ति, तत्र कार्यत्वं कल्पयितव्यम् ; तच्चार्थप्रतीतिलक्षणात् कार्यात्; तच्चेत्कार्यं वृद्धव्यवहारव्युत्पत्तेरेव प्रत्यक्षभूताया उपपन्नम्, तर्हि न शक्यते कार्यतानुमानम् ; न हि प्रत्यक्षदृष्टे कारणान्तरे सति सर्वत्र तदेव कारण-

---

१. भूतार्थादुप. ग.

भाष्यम्

स्यादेतत्; अप्रसिद्धसम्बन्धा बालाः कथं वृद्धेभ्यः प्रतिपद्यन्ते? इति। नास्ति दृष्टेऽनुपपन्नं नाम; दृष्टा हि बाला वृद्धेभ्यः प्रतिपद्यमानाः; न च प्रतिपन्नसम्बन्धाः सम्बन्धस्य कर्तुः। तस्माद्वैषम्यम्।

बृहती

प्रयोजनमस्ति; संव्यवहारार्थं हि सम्बन्धकरणम्; न च दुर्गमस्थैः संव्यवहारोपपत्तिः। किं च, कार्यश्च सम्बन्धः सम्बन्धिशब्दादृते नोपपद्यते; यदि कार्यार्थः सम्बन्धोऽभ्युपगम्यते, कृतं कार्येण। ननु व्युत्पत्तिरपि

पञ्चिका

मनुमातुं शक्यते; तेनार्थप्रतिपत्तिकार्यबलेन तावन्न शक्यते सम्बन्धस्य पौरुषेयता वक्तुम्; यत्र पुनः साक्षादेव दृश्यते, तत्र तथैवाङ्गीक्रियते; न चात्र प्रमाणान्तरमस्तीत्युक्तम्। किञ्च कार्ये हि सम्बन्धे न कर्तुर्दुर्गमेषु देशेषु सम्बन्धकरणेन किञ्चन प्रयोजनमस्ति; संव्यवहारार्थं हि सम्बन्धकरणम्; न च दुर्गमस्थैः संव्यवहारोपपत्तिः। अस्यार्थः—यद्येक एव पुरुषः शब्दानामर्थैः सह सम्बन्धं कृत्वा वेदान् प्रणयेत, तदा तेन वेदव्यवहारिष्वेव संकेतः कार्यः; न दुर्गमदेशव्यवस्थितेषु म्लेच्छादिषु, तेषां वेदव्यवहाराभावात्; दृश्यते च म्लेच्छादिदेशेष्वपि सास्नादिमति गोशब्दप्रयोगः। न चेदमुपपन्नम्—वेदकारादन्य एव सम्बन्धकार इति, सम्बन्धकरणस्य निष्प्रयोजनत्वात्; व्यवहर्तुं हि पाणिनिपिङ्गलादयः सङ्केतं कुर्वन्ति; तस्मान्न कश्चिद्दोषः। अनेन "अव्यतिरेकश्च" इत्यस्य प्रथमा व्याख्या वर्णिता। द्वितीयां वर्णयति—कार्यश्च सम्बन्धः सम्बन्धिशब्दादृते नोपपद्यते; यदि कार्यार्थः सम्बन्धोऽभ्युपगम्यते, कृतं कार्येण। अस्यार्थः—'अनेन शब्देनायमर्थोऽत्र प्रतिपाद-

भाष्यम्

'अर्थेऽनुपलब्धे' । अनुपलब्धे च देवतादावर्थेऽनर्थकं संज्ञाकरणम्, अशक्यं च । विशेषान् प्रतिपत्तुं

बृहती

कार्यतामपेक्षत एव । कथम्? अयमस्य वाचकः—इत्येवमविज्ञातार्थस्य न शब्दादवगतिरुपपद्यते । न हि दृष्टेऽनुपपन्नं नाम ; व्यवहारमात्रादेव हि बालानामवगतिर्दृष्टा । तस्मात्प्रत्यक्षदृष्टे एवमुपपद्यमानेऽर्थे न कर्तुः कल्पनोपपद्यते ।

इदमपरं व्यवहारानौपयिकम्, कृतके हि सम्बन्धे यदुतादृश्यमानस्यार्थस्य देवतादेः सम्बन्धकरणम्; अशक्तिस्तूपवर्णितैव । तस्मा-

पञ्चिका

यितव्यः' इतीत्थं सम्बन्धः कर्तव्यः । स च न शक्यते कर्तुं यदि वृद्धव्यवहार एव व्युत्पन्नाः केचन शब्दा व्युत्पाद्यानां नाङ्गीक्रियन्ते ; हि पूर्वं शब्देऽव्युत्पन्ना न सम्बन्धकरणवाक्यार्थमपि बोद्धुमलम् । यदि वृद्धव्यवहारप्रसिद्धाः केचन व्युत्पाद्यानामङ्गीक्रियन्ते तदा किमपरं सम्बन्धकरणेन ? वृद्धव्यवहार एव व्युत्पत्त्युपायोऽस्त्विति । संप्रति स्थिते राद्धान्ते चोदयति—ननु व्युत्पत्तिरपि कार्यतामपेक्षत एव । कथमिति प्रश्नः । उत्तरम्—'अयमस्य वाचकः' इत्येवमविज्ञातार्थस्य न शब्दादर्थावगतिरुपपद्यत इति । एतच्च स्वपक्षतुल्यतापादानार्थं चोद्यम् । परिहारस्तु—न हि दृष्टेऽनुपपन्नं नाम । व्यवहारमात्रादेव हि बालानामवगतिर्दृष्टा । उपसंहरति —तस्मात्प्रत्यक्षदृष्टे शब्दार्थावगतिकारणे व्यवहाराख्य एवमुपपद्यमाने न कर्तुः कल्पनोपपद्यत इति पूर्वमेव व्याख्यातम् ।

"अर्थेऽनुपलब्धे" इत्यस्यार्थं व्याचष्टे—इदमपरं व्यवहारानौपयिकं कृतके सम्बन्धे यदुतादृश्यमानस्यार्थस्य देवतादेः संज्ञाकरणम्

१. Omitted. अर्थ. ग. २. देवदत्तादेः. क.

भाष्यम्

हि संज्ञाः क्रियन्ते विशेषांश्चोद्दिश्य; तद्विशेषेष्वज्ञायमानेषु उभयमप्यनवक्लृप्तम् । तस्मादपौरुषेयः शब्दस्यार्थेन सम्बन्धः । अतश्च 'तत् प्रमाणमनपेक्षत्वात्' । न चैवं सति पुरुषान्तरं प्रत्ययान्तरं चापेक्ष्यते । तस्माच्चोदनालक्षण एव धर्मो नान्यलक्षणः । बादरायणग्रहणमुक्तम् ।

अथ यदुक्तम्----अनिमित्तं शब्दः कर्मकाले

बृहती

दौत्पत्तिकत्वात् सम्बन्धस्य सिद्धमनपेक्षत्वम् ।

"अथ यदुक्तम्—अनिमित्तं शब्दः" इति किमिदं चोद्यते ? परिहृतमेतत् औत्पत्तिकत्वाभिधानेन सम्बन्धस्य । कस्य

पञ्चिका

अस्यार्थः—व्यवहारार्थं संज्ञा कार्या, यथा पुत्रस्य पित्रा 'चैत्रः' इति । न च देवताभिर्व्यवहारोऽस्ति । ननु किमिति प्रयोजनाभावमात्रं भाष्योक्तमुक्तम् ? 'देवतादीनां च प्रत्येतुमशक्तेः तेषु च सम्बन्धकरणमशक्यम्' इत्यपि भाष्यकारेणोक्तम्; तत्किमिति न व्याख्यायत इत्यत्राह—अशक्तिस्तूपवर्णितैव । भाष्ये । तेन न व्याख्यायते । तेन "संज्ञाकर्मत्वमस्मद्विशिष्टानां लिङ्गम्" इति निराकृतम्, देवतादिसंज्ञाकरणस्यैवासिद्धेः । तस्मादौत्पत्तिकत्वात्सम्बन्धस्य सिद्धमनपेक्षत्वमिति ।

॥ इति सम्बन्धपरिहारः ॥

अत्र भाष्यकारः "अथ यदुक्तमनिमित्तं शब्दः" इत्यनेन भाष्येणैवं चोदयति—अथ मीमांसक ! यदुक्तं पूर्वम् 'अनिमित्तं शब्दः' इत्यस्माभिः, तस्य कः परिहारः इति । तदाक्षिपति "अथ यदुक्तमनिमित्तं शब्दः" इति किमिदं चोद्यते ? यावता परिहृतमेवैतदनिमित्तत्वं सम्बन्धस्यौत्पत्तिकत्वाभिधानेन । अथोच्यते—औत्पत्तिकसम्बन्धाभिधानेनान्यदेव परिहृतम्; अत्राह—कस्य वान्यस्य परिहारोऽवगम्यते औत्पत्तिकत्वाभि-

भाष्यम्

फलादर्शनात् कालान्तरे च कर्माभावात् प्रमाणं नास्तीति ।

बृहती

वान्यस्य परिहारोऽवगम्यते औत्पत्तिकत्वाभिधानेन ? नैवान्यदुपन्यस्तम् । विद्यमानोपलम्भनतयैव हि विषयान्तराभावो नियोगस्य दर्शितः "चित्रया यजेत पशुकामः" इत्यादौ । सत्यम्, तस्यैवायमौत्पत्तिकत्वपरिहार उक्तः ; किन्त्वौत्पत्तिकेऽपि सम्बन्धे विषयान्तरविवेकोऽनुक्त इव प्रतिभाति ; तद्विवेकायेदं पुनरुपन्यस्यते । "कर्मकाले फलादर्शनात् कालान्तरे च कर्माभावात्" । ननु चानेन

पञ्चिका

धानेन ? किमिति ? नैवान्यदुपन्यस्तम्, यत्परिह्रियेत । विद्यमानोपलम्भनतयैव हि विषयान्तराभावो नियोगस्य दर्शितः "चित्रया यजेत पशुकामः" इत्यादौ । अस्यार्थः—विद्यमानोपलम्भनत्वात् भवत्येवेष्टेः पशूनां च साध्यसाधनभावस्य प्रमाणान्तरग्राह्यता ; अतः प्रमाणान्तरगम्यमेव साध्यसाधनपूर्वकं कार्यत्वं नियोगस्य लिङादेर्विषयः, न विषयान्तरमिति पूर्वं दर्शितम् । अतस्तस्यैवौत्पत्तिकत्वेन परिहारो दत्तः । किमपरमपरिह्रतमिवोपन्यस्यते ? अत्र समाधिः—सत्यं तस्यैवौत्पत्तिकत्वपरिहार उक्तः; किन्त्वौत्पत्तिकेऽपि सम्बन्धे विषयान्तरविवेकोऽनुक्त इव प्रतिभाति ; तद्विवेकायेदं पुनरुपन्यस्यते । अस्यार्थः—पौरुषेये हि सम्बन्धे सति बलादापद्यमानं वेदानां पौरुषेयत्वं सापेक्षत्वापादकमौत्पत्तिकसम्बन्धाभिधानेन निरस्तम् । लोके तु स्वातन्त्र्यादर्शनेन शब्दस्य या प्रमाणान्तरगोचरैकविषयत्वशङ्का, सा निराक्रियते । औत्पत्तिकेऽपि सम्बन्धे विषयान्तरं स्वतन्त्रं शब्दस्येत्ययं विवेकोऽनुक्त इव प्रतिभाति, तद्विवेकायेदं चोद्यं पुनरुपन्यस्यते । "कर्मकाले फलादर्शनात्कालान्तरे च कर्माभावात्" इत्यनेन भाष्यं पठित्वाक्षि-

बृहती

किम्? विषयान्तराभावात् प्रमाणान्तरविषयतया च सापेक्षत्वात् तदभावे चाप्रामाण्यं दर्शितम्; इहापि तदेव; किं पुनस्तत् यदनुक्तमिव प्रतिभाति? इदं तत्; प्रमाणान्तरविषयत्वे हि--अनेन इदम्—इत्यस्मिन् सति नियोगः। तत्र चानुपलब्धे स्फुटमेवाप्रामाण्यम्। न चास्मिन्नर्थे संभवति नियोगादेव नियोगसिद्धिरिति शक्यते कल्पयितुम्। तदिदानीं निराक्रियते—स्यादेतदेवम्, यद्यौत्पत्तिकता न स्यात्; साधिता चासौ। ततः किम्? इदं ततः—

पञ्चिका

पति। ननु चानेन विषयान्तरविवेकायोपन्यस्तेन भाष्येण किं प्रयोजनम्? यस्मात् विषयान्तराभावात् प्रमाणान्तरविषयतया च सापेक्षत्वात्तदभावे चाप्रामाण्यं दर्शितम्। शब्दस्य प्रमाणान्तरावेद्यविषयत्वाभावात्प्रमाणान्तरग्राह्यार्थविषयतया च प्रमाणान्तरसापेक्षत्वात्प्रमाणान्तराभावे चाप्रामाण्यं दर्शितं चित्राक्षेपे, इहापि तदेवानेन भाष्येणोक्तमिति। किं पुनस्तत् यदनुक्तमिव प्रतिभाति? यदनेन भाष्येणोच्यते। समाधत्ते—इदं तत्; प्रमाणान्तरविषयत्वे ह्यनेनेदमित्यस्मिन् सति नियोगः। तत्र चानुपलब्धे स्फुटमेवाप्रामाण्यम् इति प्रागुक्तमेव। न चास्मिन्नर्थे संभवति नियोगादेव नियोगसिद्धिरिति शक्यते कल्पयितुम्। इदं तदनुक्तमुक्तमनेन भाष्येणेति सम्बन्धः अस्यार्थः—यद्यपि कर्मानन्तरं फलं न सिध्यति, कालान्तरे च नास्ति कर्म, तथापि नियोगादेव कालान्तरे फलं भविष्यतीति; तदनेन परिह्रियते। यस्मादस्मिन्नर्थे प्रमाणान्तरविषयात्मके संभवति नियोगादेव फलसिद्धिरिति न शक्यते कल्पयितुम्, नियोगस्य तदानीमप्रमाणकत्वात्; नियोगो हि प्रमाणान्तरावेद्यस्वरूपः; कथं प्रमाणान्तरसापेक्षशब्दप्रमेयः स्यात्? तस्मात् कर्मानन्तरं फलादर्शनात् कालान्तरे च कर्माभावान्नास्ति प्रमाणं पशुफलेष्टिरिति। तस्मादनुपलब्धे स्फुटमप्रामाण्यं चोदनाया इति। तदिदानीं निराक्रियते—स्यादेतदेवं यद्यौत्पत्तिकता न स्यात्; साधिता चासौ। यद्यौत्पत्तिकः सम्बन्धः, ततः किम्? इदं

बृहती

न 'अनेनेदम्' इत्यमुमर्थमपेक्षते नियोगः ; प्रमाणान्तरसमधिगम्येऽपि हि लौकिकेऽर्थे नैव नियोगस्य साध्यसाधनसिद्ध्यपेक्षावसीयते । कारणदोष-

पञ्चिका

ततः । नानेन कर्मणेदं फलं सिध्यतीत्यमुमर्थमपेक्षते नियोगः । अस्याभिप्रायः—यदि हि पौरुषेयः सम्बन्धः स्यात्, तदा बलात्पौरुषेयता चोदनाया आपद्येत; तथा च सति प्रमाणान्तरविषयत्वापत्तेः साध्यसाधनभावापेक्ष एव नियोगार्थः स्यात्; साधिते त्वपौरुषेये सम्बन्धे स्वातन्त्र्याविरोधान्नाप्रामाण्यं शक्यते वदितुम् । यत्तूक्तम्—लोके स्वातन्त्र्यं न प्रतीयत इति, तत्राह—**प्रमाणान्तरसमधिगम्येऽपि हि लौकिकेऽर्थे नैव नियोगस्य साध्यसाधनसिध्यपेक्षावसीयते** । अस्यार्थः—प्रवृत्तिदर्शनेन लिङादीनां कार्यार्थप्रतिपादकत्वं तावदवगम्यते लोके ; तथा व्युत्पन्नास्ते स्वार्थाभिधाने न प्रमाणान्तरमपेक्षन्ते । अतो यद्यपि वक्ता प्रमाणान्तरप्रतीतामेव कार्यतां विवक्षति , तथापि शब्दः स्वसामर्थ्यैनैव तां प्रतिपादयति ; तेन वेदेऽपि न साध्यसाधनावगमपूर्वको लिङादिभिरर्थोऽभिधीयते । नियोगशब्देन चात्र लिङादिरभिप्रेतः । दर्शितं च भाष्ये—"आचार्यचोदितः करोमीति हि दृश्यते", न अनेनास्य सिद्धिरिति । एतदुक्तं भवति—यतः प्रतिपत्ता कार्यमेव प्रतिपद्यानुतिष्ठति, न पुनः साध्यसाधनभावम् ; अतः कुर्वाण आपृष्टः 'आचार्यचोदितोऽहमाचार्येण कार्यं बोधयित्वा प्रेरितः करोमि' इति व्यपदिशति, न साध्यसाधनभावागवमम् । यदि पौरुषेयेऽपि वाक्ये प्रतिपत्ता निरपेक्षमेव कार्यं बुध्यते, तदा किमिति तर्हि पुरुषापेक्षा सम्बन्धस्य निराक्रियते ? भवतु पौरुषेयः सम्बन्धो वेदाश्च पौरुषेयाः, तथापि निरपेक्षार्थप्रतिपादकतया प्रामाण्यं भविष्यति । अत्रोत्तरम्—**कारणदोषसम्भावनानिराकरणाय निराक्रियते, न पुनरात्मसंवित्तौ** । अस्यार्थः—यदि पौरुषेयत्वं न निराक्रियेत, तदोत्पन्नापि कार्यप्रतीतिः कारणदोषान्मिथ्या स्यात् ; प्रमाणप्रतीतं हि स्वयमर्थं पुरुषः परस्मै प्रतिपादयति । तत्र च पौरुषेयस्य वचनस्य कार्यस्य कारणा-

बृहती

संभावनानिराकरणाय निराक्रियते; न पुनरात्मसंवित्तौ। तस्मात् 'स्वातन्त्र्यं नियोगस्य' इत्यनेन विवेकः प्रदर्श्यते। पुरुषं हि नियुञ्जानः साध्यसिद्धिमवगमयतीति षष्ठे प्रतिपादयिष्यति। किमेवं सत्यनन्तरानुपलब्धिर्निरस्ता भवति? बाढं निरस्ता; न ह्येतस्मिन् पक्षे क्रियाशक्तिनिरूपणात् साध्यसिद्धिः। किं तर्हि? नियोगार्थवशात्। ततश्च 'अस्मादस्य सिद्धिः'

पञ्चिका

नुमापकता। यदि च वेदानां पौरुषेयता स्यात्, तदा प्रमाणान्तरेण वेदार्थं प्रतीत्य पुरुषेणोपदेशः कार्यः; न च प्रमाणान्तरमस्तीति कारणदोषादुत्पन्नापि प्रतीतिर्मिथ्या स्यात्; 'चैत्यं वन्देत स्वर्गकामः' 'सङ्घाय भक्तं दद्यात् स्वर्गकामः' इतिवत्; न पुनरात्मसंवित्तौ प्रमातुः स्वयं प्रतिपत्तौ सापेक्षता भवतीत्येवमर्थं निराक्रियते। उपसंहरति—तस्मात् स्वातन्त्र्यं नियोगस्येत्यनेन विवेकः प्रदर्श्यते। यदि स्वातन्त्र्यं नियोगस्य, न[1] तर्हि स्वर्गयागयोः साध्यसाधनभावावगमः प्रतीयते; विषयनियोज्यमात्रावच्छिन्नो हि नियोगः प्रतिपाद्येत नित्याधिकारवदित्यत्राह—पुरुषं हि नियुञ्जानः साध्यसिद्धिमवगमयति। एतच्च षष्ठे सयुक्तिकं वक्ष्यति। तदाह—इति षष्ठे प्रतिपादयिष्यतीति। यद्यपि स्वातन्त्र्येण कार्यं लिङादिरवगमयति; किमेवं सत्यनन्तरानुपलब्धिर्निरस्ता भवति? कामाधिकारे हि फलसिद्धिपर्यन्तो वाक्यार्थः; फलं चैतदनन्तरं न दृश्यते तदा प्रमाणान्तरविपर्ययादप्रामाण्यमापादयन्ती किमनन्तरानुपलब्धिर्निरस्ता भवति? बाढं निरस्ता। न प्रामाण्यमापादयितुं क्षमा। कस्मादित्याह—न ह्येतस्मिन् पक्षे क्रियाशक्तिनिरूपणात् साध्यसिद्धिः। किं तर्हि? नियोगार्थवशात्। अस्यार्थः—यदि हि क्रियाशक्तिनिरूपणात् साध्यसिद्धिः, तदानन्तरमेव फलेन भवितव्यमिति शास्त्रार्थः स्यात्; न चास्मिन् पक्षे स्वातन्त्र्येण कार्याभिधानपक्षे 'यस्मादियं क्रिया फलं साधयितुं शक्नोति, तस्मात्कार्यफलसिद्धिश्चातः' इत्येवं क्रियाशक्तिं निरूप्य साध्यसिद्धिः। किं तर्हि? यस्मात्कामी कार्यं बोध्यते, तस्मात्कार्यं फलमिति। न च क्षणभङ्गुरां क्रियां

---

१, Omitted न. क. ग.

बृहती

इत्येतावदवगम्यते, न 'अनन्तरं व्यवहितं वा' इति। तच्चानपेक्षत्वं यत्नतः प्रतिपादितम्। किमिदम् "यदि पञ्चैव प्रमाणान्यभविष्यन्" इति? इदमेवेदम्। ननु उक्तम् "अभावोऽपि प्रमाणाभावः" इति। किमतो यद्येवम्? एतदतो भवति—पञ्च प्रमाणानीति नोपपद्यते। शक्यते वा चतुर्भिर्नास्तीति वक्तुम्? प्रमाणं तर्ह्यभावः। प्रमाणं वा प्रमाणाभावः—इति शक्यते वक्तुम्? अभावस्य प्रामाण्ये प्रत्यक्षादि-

पञ्चिका

नियतदेहान्तरभोग्यस्वर्गसाधनाशक्तां स्वर्गकामः कार्यतया बोद्धुमलमित्यपूर्वं कालान्तरावस्थायिफलसिद्धिसमर्थं लिङादयः कार्यतया बोधयन्तीति तस्य स्थास्नुतया कालान्तरेऽपि फलसाधनत्वाविरोधात्; तस्माद्यागादस्यापूर्वसिद्धि-व्यवधानेन फलसिद्धिरित्येतावदवगम्यते; नानन्तरं व्यवहितं वेति। तच्चान-पेक्षत्वं यत्नतः प्रतिपादितम्। यत्तत्प्रामाण्यापादकम् 'अनेनेदं सिध्यति' इत्येत-दर्थानपेक्षत्वम्, तच्च यत्नतः साधितमपौरुषेयत्वप्रतिपादनेन। किमिदं "यदि पञ्चैव प्रमाण्यान्यभविष्यन्" इति? शब्दातिरेकिप्रमाणपञ्चकोपन्यासो न युक्तः, प्रमाणपञ्चकाङ्गीकारात्। इदमेवेदमिति। न पञ्चसंख्यापरिकीर्तन-मनुपपन्नम्। पुनराक्षेपक आह—ननूक्तमभावोऽपि प्रमाणाभाव इति। प्रमाणाभावोऽभाव इत्युक्तम्, तेन पञ्चप्रमाणनियमान्नेदमुपपन्नमिति। सावष्टम्भं समर्थयिताह—किमतो यद्येवम्? अक्षेप्तैवाह—एतदतो भवति—पञ्च प्रमाणानीति नोपपद्यते। समाधाताह—शक्यते वा चतुर्भिर्नास्तीति वक्तुम्? काक्का न शक्यत इत्याह। शब्दव्यतिरिक्तैश्चतुर्भिः प्रमाणैर्नास्तीति शब्दप्रयोगात्मको व्यवहारः प्रवर्तयितुं न शक्यते। आक्षेप्ताह—प्रमाणं तर्ह्यभावः। अत्र समाधाता ग्रन्थविरोधं तावदाह—प्रमाणं वा प्रमाणा-भाव इति शक्यते वक्तुम्? अत्रापि काक्का न शक्यत इत्युक्तम्। यदि प्रमाणान्तरमभावः स्यात्, प्रमाणाभाव इति कथं भाष्यकारेणोच्यते? युक्त्याप्यभावस्य प्रमाणान्तरत्वं नास्तीत्याह—अभावस्य प्रामाण्ये प्रत्यक्षादि-

बृहती

**विषयापेक्षिता विषये । अतः प्रमाणान्तरप्रमितविषयावच्छेदकतयैवास्य लक्षणाभिधानम् । व्यवहारान्यत्वं तु संप्रतिपन्नमेव । व्यवहारसिद्ध्यर्थश्चायमुपन्यासः, न प्रमाणस्वरूपसिद्ध्यर्थः । प्रमाणान्तराभ्युपगमे को दोषः ? न खलु कश्चिद्दोषः ; किं त्वप्रमाणं प्रमाणमित्युक्तं भवति ;**

पञ्चिका

**विषयापेक्षिता विषये** । अस्यार्थः—यद्यभावः प्रमाणं तदा प्रत्यक्षादिपरिच्छिन्नातिरिक्तविषयान्तरानुपपत्तेः सापेक्षता अभावस्य स्यात् । तथा हि—न तावत् प्रत्यक्षेण भूतलं घटादिसद्भावे सातिरेकि स्वरूपमेव गम्यं 'नास्ति' इति प्रत्येतव्यम् ; किन्तु दृश्येऽपि घटादौ स्वरूपमात्रेणोपलब्धमिति ; तेन सापेक्षता विषये परिच्छेद्येऽभावस्य तदतिरिक्तविषयान्तराभवात् । यच्च स्वातन्त्र्येण विषयं नोपस्थापयति, न तत्प्रमाणान्तरम् । **अतः प्रमाणान्तरप्रमितविषयावच्छेदकतयैवास्य लक्षणाभिधानम्** । प्रमाणानां प्रत्यक्षादीनां विषयस्यावच्छेदकतया 'अयमेव' इत्येवं निश्चायकतयास्य लक्षणम्, न पुनः प्रमाणान्तरतया । अनेन लक्षणग्रन्थविरोधः परिहृतः । संप्रत्याक्षेपं परिहरति—**व्यवहारान्यत्वं तु संप्रतिपन्नमेव** । नास्तीति व्यपदेशस्य निःशङ्कगमनादिलक्षणस्य व्यवहारस्यान्यत्वं संप्रतिपन्नमेव संमतमेव । **व्यवहारसिद्ध्यर्थश्चायमुपन्यासः, न प्रमाणस्वरूपसिद्ध्यर्थः** । शब्देनापि व्यवहारः कर्तव्य इत्येवमर्थमुपन्यस्तम्—स्यादेतदेवम् यदि पञ्चैव प्रमाणान्यभविष्यन्निति । तेनायमर्थो भवति—यदि पञ्चैव प्रमाणव्यवहारसाधनान्यभविष्यन्, यावता शब्दोऽपि प्रमाणव्यवहारसाधनमिति । न पुनः प्रमाणस्वरूपमेवात्र साध्यते, येन पञ्चशब्दात्प्रमाणान्तरमापद्येत । नन्वेवं किमिति व्याख्यायते ? यावता प्रमाणशब्दः प्रमाणस्वरूपपर एवास्तु ; प्रमाणव्यवहारसाधनाभिप्रायेण मा व्याख्यायि; अभावश्च प्रमाणन्तरमभ्युपगम्यताम् ; तदाह—**प्रमाणान्तराभ्युपगमे को दोष इति** । परिहरति—**न खलु कश्चित्** ब्रह्महत्यादिः; **किन्त्वप्रमाणं** यत् प्रमाणमेव न भवति, **तत्प्रमाणमित्युक्तं भवति** ; उक्तेन न्यायेनाभावस्य

भाष्यम्

तदुच्यते—न स्यात्प्रमाणम्, यदि पञ्चैव प्रमाणान्यभविष्यन्; येन येन हि प्रमीयते तत्तत्प्रमाणम्; शब्देनापि प्रमीयते, ततः शब्दोऽपि प्रमाणं यथैव प्रत्यक्षम्। न च

बृहती

लक्षणग्रन्थश्चानादृतो भवति ; अनपेक्षत्वं च सर्वप्रमाणानां निरस्तं भवति। तस्मात् सिद्धं विषयान्तरं शब्दस्य। तत्सिद्धौ च प्रामाण्यसिद्धिः। किमर्थं तर्हि पञ्चग्रहणम् ? व्यवहारपञ्चकप्रदर्शनार्थम्। पञ्चग्रहणे ह्यक्रियमाणे व्यवहारान्तरं प्रदर्शितं न स्यात्। अत एव 'अफलवती शाखा' इति प्रत्यक्षजमेव व्यवहारं मन्यन्ते। प्रमाणविषयावच्छेदजश्चायं व्यवहारः।

पञ्चिका

प्रमाणता नास्तीति तस्य प्रामाण्यमुक्तं स्यादित्यसदङ्गीकार एव दोष इति। लक्षणग्रन्थश्च भाष्यकारीयोऽनादृतो भवति—प्रमाणाभावोऽभावः—इत्येवंरूपः। अनपेक्षत्वं च सर्वप्रमाणानां निरस्तं भवति। अभावस्य प्रत्यक्षादिसापेक्षस्यापि प्रमाणत्वोपगमे अपरमपि प्रमाणं सापेक्षमित्याशङ्क्येत। तस्मात् प्रमाणान्तराभावात् व्यवहारसाधनाभिप्राय एवायं पञ्चशब्दः कृतः। उपसंहरति—तस्मात्सिद्धं विषयान्तरं शब्दस्य। प्रत्यक्षादिविषयाद्विषयान्तरं शब्दस्य सिद्धम्, निरपेक्षकार्यप्रतिपादकत्वात्। तत्सिद्धौ च प्रामाण्यसिद्धिः। यदि शब्दप्रामाण्यसिद्धिरेवात्र प्रकृता कर्तव्या, तदा किमर्थं तर्हि पञ्चग्रहणम्? एवं वक्तव्यम्—यदि चत्वारीति। यदि व्यवहारसाधनतामात्रं शब्दस्य साध्यं स्यात्, तदा तावदिदं युक्तम्; यदा तु प्रामाण्यमपि साध्यमेव, तदा पञ्चग्रहणेन किम्? परिहरति—व्यवहारपञ्चकप्रदर्शनार्थम्। शब्दव्यवहारातिरिक्तव्यवहारपञ्चकं दर्शयितुं पञ्चग्रहणम्। पञ्चग्रहणे ह्यक्रियमाणे व्यवहारान्तरं प्रदर्शितं न स्यात्। यत एव व्यवहारान्तरबुद्धिः प्रयत्नसाध्या न सुखेन संभवति, अत एवाफलवती शाखेति प्रत्यक्षजमेव व्यवहारं मन्यन्ते। नैयायिकाः। ननु यदि मन्यन्ते, मन्यन्तां तर्हि; तत्राह—प्रमाणविषया-

भाष्यम्

प्रमाणेनावगतं प्रमाणान्तरेणानवगतम्---इत्येतावता अनवगतं भवति । न चैवं श्रूयते----कृते कर्मणि तावतैव फलं भवतीति, किन्तु कर्मणः फलं प्राप्यते----इति । यच्च कालान्तरे फलस्यान्यत्प्रत्यक्षं कारणमस्ति----इति, नैष दोषः ; तच्चैव हि तत्र कारणम् , शब्दश्चेति ॥

बृहती

न च प्रमाणविषयावच्छेदो विषयान्तरतया शक्यते वक्तुम् । न च विषयमात्रावगमात् पूर्वप्रमाणानामवच्छेदादृते 'नास्ति' इति व्यवहारोऽवकल्पते । तस्मात् सिद्धं व्यवहारान्यत्वम् । अत एव व्यवहार-

पञ्चिका

वच्छेदजश्चायं व्यवहारः । 'अयमेव' इति प्रमाणविषयमवच्छिद्य साध्वत्रधारणज्ञानेन निश्चित्याभावव्यवहारः प्रवर्तते । नन्वेवं तर्ह्यवच्छेदकत्वे प्रमाणान्तरमापद्येत, तत्राह—न च प्रमाणविषयावच्छेदो विषयान्तरतया शक्यते वक्तुम् । यदा दृश्येऽपि वस्त्वन्तरे स्वरूपमात्रोपलब्धिर्भवति, तदा वस्त्वन्तरस्य नास्तित्वमिति प्रमाणस्वरूपविमर्श एवावच्छेदः ; न पुनर्वस्तुतः स्वरूपान्तरम् । अतो न प्रमाणान्तरापत्तिः । कथं पुनः प्रमाणविषयावच्छेदजोऽयं व्यवहारः विषयस्वरूपावगमादेव किमिति न भवति ? तत्राह—न च विषयमात्रावगमात्पूर्वप्रमाणानामवच्छेदादृते नास्तीति व्यवहारोऽवकल्पते । 'नास्ति' इति शब्दप्रयोगात्मको निश्शङ्कगमनलक्षणश्च व्यवहारो न स्वरूपमात्रावगमादेव भवति । तस्मात् सिद्धं व्यवहारान्यत्वम् । पञ्च व्यवहाराः स्वरूपावगमनिबन्धनाः ; एको व्यवहारोऽवच्छेदनिबन्धनः । यत एव व्यवहारमात्रपरिज्ञानायेदमुक्तम्, न पुनरभावाख्यप्रमाणस्वरूपनिरूपणाय, अत एव व्यवहारान्तरसिध्यर्थं व्यवहारकाल एव पञ्चसङ्ख्योपन्यासः; न प्रमाणस्वरूपाभिधानकाले षट्संख्यो-

भाष्यम्

यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तम् "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति"----इति प्रत्यक्षं शरीरकं व्यपदिशति---इति । तदुच्यते, शरीरसम्बन्धात् । यस्य तच्छरीरम्, सोऽपि तैर्यज्ञायुधैः 'यज्ञायुधी'

बृहती

काल एव पञ्चसंख्योपन्यासः ; न प्रमाणस्वरूपाभिधानकाले षट्संख्योपन्यासः । तस्मादत्रैव पञ्चसङ्ख्योपन्यासादवैतु भवान्--अभावव्यवहारस्य भेदिकेयं पञ्चसङ्ख्या, न स्वरूपस्य । प्रसिद्धिस्तु दत्तोत्तरा ॥

"यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तम्—"स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति"—इति प्रत्यक्षं शरीरकं व्यपदिशति इति," अत्रापि शरीरकमित्यसिद्धम् । कस्तर्हि व्यपदिश्यते ? यस्यैतच्छरीरम् । ननु "एषः" इति व्यपदेशः, न 'यस्यैषः' इति । अभेदोपचार-

पञ्चिका

पन्यासः । तस्मादत्रैव पञ्चसङ्ख्योपन्यासादवैतु भवान्—अभावव्यवहारस्येयं भेदिका पञ्चसङ्ख्या, न स्वरूपस्य । यदि हि स्वरूपस्य भेदोऽभिमतः स्यात्, प्रमाणाभिधानकाल एव षट्संख्योपन्यस्येत; तेन व्यवहारकाले पञ्चसंख्योपादानादवगच्छ—व्यवहारमात्र एव भेद इति । प्रसिद्धिस्तु दत्तोत्तरा । वटयक्षप्रसिद्धितुल्यताभिधानेन षट्प्रमाणप्रसिद्धिर्निर्मूलेत्युक्तम् ॥

इति चित्रादिपरिहारः

"यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तम्—"स एष यज्ञायुधी यजमानः" इति प्रत्यक्षं शरीरकं व्यपदिशति इति"—अत्रापि शरीरकमित्यसिद्धम् । कस्तर्हि व्यपदिश्यते ? यस्यैतच्छरीरम् । स व्यपदिश्यत आत्मा । ननु "एषः" इति व्यपदेशः, न 'यस्यैषः' इति यदि हि 'यस्यैष कायः, स यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति' इति व्यपदेशः, तदा यावदात्माभि-

भाष्यम्

इत्युच्यते । आह--कोऽसावन्यः ? नैनमुपलभामहे । प्राणादिभिरेनमुपलभामहे----योऽसौ प्राणिति अपानिति उच्छ्वसिति निमिषति इत्यादिचेष्टितवान्, सोऽत्र शरीरे 'यज्ञायुधी' इति । ननु शरीरमेव प्राणिति अपानिति

बृहती

निबन्धनोऽयं व्यपदेशः—मञ्चाः क्रोशन्ति इतिवत् । किमित्यौपचारिकः शब्दार्थो गृह्यते ? तथावगतेः ; उक्ता ह्यर्थवादपदानामन्यपरत्वात् गौण्येवावगतिः । ननु चान्यत्वोपलब्धौ सत्यां गोर्वाहीकस्य च गौणो निर्देश उपपद्यते 'गौर्वाहीकः' इति ; न चात्र शरीरादन्यमुपलभामहे । नोपलभामहे—इति कोऽभिप्रायः ? अयमेवाभिप्रायः—नोपलभामहे इति । ननु कार्यभूतैः प्राणादिभिरुपलभामहे । ननु शरीरमेव प्राणित्यपानिति

पञ्चिका

प्रायेणापि यज्ञायुधीव्यपदेशो घटेत; यदा तु 'एषः' इति यज्ञायुधिन एव सामानाधिकरण्येन व्यपदेशः, तदात्मनोऽन्यपुरुषाप्रत्यक्षत्वान्नोपपन्नमिदमात्माभिप्रायेणापि; तत्र एषशब्दानुगुण्याद्यज्ञायुधीति शरीरकमेव वाच्यम्, तत्र स्पष्टः प्रत्यक्षविरोधः । उत्तरम्—अभेदोपचारनिबन्धनोऽयं व्यपदेशः—मञ्चाः क्रोशन्तीतिवत् । अस्यार्थः—एतच्छब्देन वक्तृप्रत्यक्षोऽर्थोऽभिधीयते; यच्च प्रत्यक्षं तदपि स्पष्टसत्त्वम्, आत्मा अस्पष्टसद्भाव इति स गौण्या वृत्त्योच्यते 'एषः' इति । अभेदोपचारशब्देन गौणी वृत्तिरुक्ता । परशब्देन परो व्यपदिश्यत इत्यत्र दृष्टान्तो मञ्चाः क्रोशन्तीति । लक्षणा त्वेषा तात्स्थ्येन । किमित्यौपचारिकः शब्दार्थो गृह्यते ? उत्तरम्—तथावगतेः । अन्विताभिधानव्युत्पत्तेरन्वययोग्यार्थोपस्थापकतया तथावगतेः गौणत्वावगतेः; न हि शरीरं स्वर्गगमनयोग्यम् । उक्तमर्थवादपदानामन्यपरत्वात् गौण्येवावगतिः । इति शब्दश्चात्र द्रष्टव्यः । ननु चान्यत्वोपलब्धौ सत्यां गोर्वाहीकस्य च गौणो निर्देशः उपपद्यते

भाष्यम्

च । न, प्राणादयः शरीरगुणविधर्माणः । यावच्छरीरं तावदस्य गुणा रूपादयः । प्राणादयस्तु सत्यपि शरीरे न भवन्ति ; सुखादयश्च स्वयमुपलभ्यन्ते न रूपादय इव शरीरगुणाः परेणापीति । तस्माच्छरीरगुणवैधर्म्यादन्यः शरीरात् यज्ञायुधीति ।

बृहती

च" इति । शरीरं नाम किमभिप्रेतमायुष्मतः ? योऽयं चातुर्भौतिकः सङ्घातः । न तर्हि शरीरकार्याण्येतानि, अयावच्छरीरभावित्वात् । अयाव-

पञ्चिका

गोवाहीकयोर्भेदोपलब्धौ सत्यां मुख्यत्वानुपपत्त्या गौणो निर्देश उपपद्यते 'गौर्वाहीकः' इति । न चात्र शरीरादन्यमुपलभामहे । यो गौण्या वृत्त्या व्यपदिश्यते । नोपलभामह इति कोऽभिप्रायः ? उपलभ्यत एवेति मत्वा पृच्छति । उत्तरम्—अयमेवाभिप्रायो नोपलभामह इति । ननु च कार्यभूतैः प्राणादिभिरेनमुपलभामहे[1] । कादाचित्कं कार्यं समवायिकारणमनुमापयति; तेनानुमानेनात्मा प्रतीयते । ननु शरीरमेव प्राणित्यपानिति च । प्रत्यक्षशरीरकारणसद्भावे न कारणान्तरानुमानमुपपद्यत इति भावः । परिहरति—शरीरं नाम किमभिप्रेतमायुष्मत इति । अनेन शरीरकार्यता प्राणादीनां न सम्भवतीति मन्वानः शरीरस्वरूपं पृच्छति । प्रतिवचनम्—योऽयं चातुर्भौतिकः सङ्घातः । चतुर्णां भूतानां समूहः । एषा त्वत्र पदार्थविदां स्थितिः—चतुर्णां भूतानां समाहारमात्रं शरीरम्, न चतुर्भूतारब्धम्; किन्तु पार्थिवमेव शरीरम्, परतन्त्राण्याप्यानि तैजसानि वायवीयानि च द्रव्याणि संयोगीनि । तदुक्तं परैः—"संयोगस्त्वविप्रतिषिद्धो मिथः पञ्चानाम्" इति । तथा हि—शरीरमिदं न पञ्चभूतारब्धं चतुर्भूतारब्धं वा, चाक्षुषाचाक्षुषद्रव्यारब्धस्याचाक्षुषत्वापत्तेः, वायुवनस्पतिसंयोगवत् । तदाहुर्योगा

---

१. रेव तमु—ग.

भाष्यम्

आह—कुत एष संप्रत्ययः सुखादिभ्योऽन्यस्तद्वान् अस्तीति ? न हि सुखादिप्रत्याख्यानेन तस्य स्वरूपमुपलभामहे । तस्मात् शशविषाणवत् असौ नास्ति । अथोच्यते—तेन विना कस्य सुखादयः ? इति । न कस्य-

पञ्चिका

एव—"प्रत्यक्षाप्रत्यक्षाणामप्रत्यक्षत्वात् संयोगस्य पञ्चात्मकं न विद्यते" इति । न च पृथिव्यप्तेजोभिरपि चाक्षुषैर्यथाक्रममनुष्णाशीतशीतोष्णस्पर्शभाग्भिरारभ्यते, एतत्त्रयस्पर्शविलक्षणस्पर्शापत्तेः, यथा सितासिततन्त्वारब्धः पटो विलक्षणचित्ररूपो भवति, तथेदमपि शरीरं विलक्षणस्पर्शं स्यात् ; अनुष्णाशीतस्पर्शं चेदम् ; अतः केवलपार्थिवावयवारब्धम् । तदुक्तं तैरेव—"गुणान्तरप्रादुर्भावाच्च त्र्यात्मकमपि न" इति । एतेन हेतुना द्व्यात्मकमपि न भवति, एकपार्थिवाणुगतस्य चैकान्तिनो[१] गन्धस्य गन्धान्तरारम्भकत्वानुपपत्तेरगन्धं शरीरमापद्येत; गन्धवच्चेदमिति पार्थिवमेव शरीरम् ; तत्संयोगिनः परतन्त्राः परे भूतान्तरारब्धाः कार्यविशेषाश्चक्षुरादय इति तन्त्रान्तरादनुसरणीयम् ; दिङ्मात्रं तूक्तम् । तेन चातुर्भौतिकः सङ्घातः । अत्रोच्यते—**न तर्हि शरीरकार्याण्येतानि, अयावच्छरीरभावित्वात्** । अनेन—"यावदस्य शरीरम्" इत्यादेर्भाष्यस्य यथाश्रुतोऽर्थो दर्शितः । स चायं नैकान्तेन शरीरकार्यताया असम्भवं साधयितुं क्षमते, वैगुण्येनापि यावच्छरीरं कार्याभावसम्भवात् ; मृतशरीरे च वैगुण्यमविवादम् ; तस्मादन्यथा व्याख्यायते—**अयावद्भूतभावित्वादित्यर्थः** । यदि भूतारब्धद्रव्यसमवायीन्येतानि स्युः, तदा कार्यद्रव्यसमवायित्वात्कारणद्रव्येऽपि तदापत्तिः स्यात् ; कारणगुणपूर्वको हि कार्यद्रव्ये वैशेषिकगुणारम्भः, यथा घटे रूपाद्यारम्भः ; वैशेषिकगुणाश्च बुद्ध्यादयः । ननु [२]द्रवद्रव्याणामप्यपां कठिनो विकारो दृश्यते करकादि, अचेतनाच्च गोमयाच्चेतनो वृश्चिको जायत इति । तदिदमाकाशभ्रान्तम् ; काठिन्यं नाम न गुणान्तरम् ; अपि त्ववयवानामविरलसंयोगः, न च संयोगो वैशेषिकगुणः । अचेतनाच्चेतनोत्पत्तिरस्ति

---

१. चैकाकिनः. ग. १. Omitted द्रव. ग.

बृहती

द्भूतभावित्वादित्यर्थः । सत्यपि भूतत्वेऽनुपात्तानां न रूपादय इवोपलभ्यन्ते । किञ्च, सुखादयश्च न भूतधर्माः शक्यन्ते वक्तुम्; परेन्द्रियग्राह्या हि भूतधर्मा रूपादयो भूतवदेव, न सुखादयः । मा भूवन् भूतधर्माः सुखादयः; तद्व्यतिरिक्तस्यान्यस्येति किमत्र प्रमाणम्? ननु च कार्यमेतत् कारणादृते नोपपद्यते—इतीदमेवात्र प्रमाणम् । निरस्ता च भूतानां समवायि-

पञ्चिका

नास्तीति विवादास्पदीभूतमिदानीम् । तत्र यदि कारणद्रव्येऽपि बुद्ध्यादयः स्युः तदा तदारब्धानि घटादीनि बुद्ध्यादिभाञ्जि भवेयुः ; न च तथास्ति । तदाह-- सत्यपि भूतत्वेऽनुपात्तानां शरीरत्वेनास्वीकृतानां न रूपादय इव वैशेषिकगुणाः प्राणादय उपलभ्यन्ते । तदाह भगवान् काश्यपः—"कारणाज्ञानात्कार्याज्ञानम्" "कार्याज्ञानात्कारणाज्ञानम्" इति । कारणभूतस्य पृथिव्यादेरज्ञानात् ज्ञानाभावात्तदारब्धस्य शरीरस्याज्ञानं ज्ञानाभावः कारणस्य त्वज्ञानं कार्यान्तरस्य घटादेरज्ञानात्—इत्यस्य सूत्रद्वयस्यार्थः । किञ्च सुखादयश्च न भूतधर्माः शक्यन्ते वक्तुम्; परेन्द्रियग्राह्या हि भूतधर्मा रूपादयो भूतवदेव, न सुखादयः । ये ये भूतधर्मास्ते ते परेन्द्रियग्राह्या दृष्टाः यथा रूपादयो भूतानामिवेति । षष्ठ्यर्थे वतिः । न च सुखादयः परेन्द्रियग्राह्याः ; तस्मान्न भूतधर्माः । गुणिनि चागृह्यमाणे गृह्यमाणस्य तद्गुणतेति दुर्भणम् । ये हि गुणाः प्रत्यक्षाः, प्रत्यक्षस्य द्रव्यस्य ते, सह द्रव्येण गृह्यन्ते, यथा रूपादयः ; न च सुखादयः प्रत्यक्षा अपि द्रव्यविशेषाश्रिता गृह्यन्ते । तेन [1]मन्यामहे—नूनमप्रत्यक्षद्रव्यस्य गुणा एत इति । शरीरं च प्रत्यक्षम् ; अतोऽन्यस्य गुणा एत इति । तस्माद्यस्येदं[2] कार्यम्, सोऽयं गौण्या वृत्त्या व्यपदिश्यते—"स एष यज्ञायुधी" इति । मा भूवन् भूतधर्माः सुखादयः ; तद्व्यतिरिक्तस्यान्यस्येति किमत्र प्रमाणमिति । अनेन बौद्धदृष्ट्यानुमानिकात्मवादिनं वैशेषिकं भूतचैतन्यवाद्येव दूषयति । इदं दूषणं भूतधर्मत्वासम्भवमभ्युपगम्य दीयते । परमार्थतस्तु भूतधर्मतैवेषामिति हृदि स्थितम् । अत एव चान्ते भूतचैतन्यमेवोपसंहरिष्यति वेदोपन्यासमुखेन—"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति ; न प्रेत्य

१. न मन्यामहे–नूनं प्र ग. २. Omitted इदम् . ग.

भाष्यम्

चिदपि--इति वक्ष्यामः। न हि यो य उपलभ्यते, तस्य तस्य सम्बन्धिना भवितव्यमिति शक्यते वक्तुम् । यस्य सम्बन्धोऽप्युपलभ्यते, सम्बन्धी च 'तस्यायं सम्बन्धी'----इति गम्यते । न हि चन्द्रमसम् आदित्यं वा उपलभ्य सम्बन्धान्वेषणा भवति ----कस्यायमिति न कस्यचिदपि-----इत्यवधार्यते । तस्मान्न सुखादिभ्योऽन्यः तद्वान् अस्तीति । अथ उपलब्धस्या-

बृहती

कारणतेति सिद्धमन्यधर्मत्वम् । नैवं सिध्यति, परस्परकार्यतयाप्युपपत्तेः । "न हि यो य उपलभ्यते तस्य तस्य सम्बन्धिना भवितव्यमिति शक्यते वक्तुम्" इति यदुक्तम्, तदयुक्तमिव प्रतिभाति ; यदुत्पत्तिमद्दृष्टम्, तत् कथं सम्बन्ध्यन्तरं नावगमयति ? हेतुमती व्युत्पत्तिरिति स्थितम् । विसभागहेत्वभिप्रायमेतत् ; न पुनरुत्पत्तिरहेतुकैवोक्ता । कथं पुनरिदमवगम्यते—विसभागहेत्वभिप्रायमेतदिति ? "न हि

पञ्चिका

संज्ञास्ति" इति । तदिदं सर्वमाकूतं टीकाकारो वक्ष्यति । मा भूवन्निति चाभ्युपगम्य वादः । ननु च कार्यमेतत्कारणादृते नोपपद्यते—इतीदमेवात्र प्रमाणम् । कार्यानुमानमेवात्र प्रमाणम् । निरस्ता च भूतानां समवायिकारणतेति सिद्धमन्यधर्मत्वम् । भूतचैतन्यवादी दूषयति---नैवं सिध्यति परस्परकार्यतयाप्युपपत्तेः । अत्र भाष्यम्---"न हि यो य उपलभ्यते, तस्य तस्य सम्बन्धिना भवितव्यमिति शक्यते वक्तुम्" इति, तदाक्षिपति—तदयुक्तमिव प्रतिभाति ; उत्पत्तिमद्धि प्राणादि दृष्टम्, तत् कथं सम्बन्ध्यन्तरं नावगमयति ? कस्मादवगमयतीत्यत्राह---हेतुमती व्युत्पत्तिरिति स्थितम् । या योत्पत्तिः सा सा हेतुमती यथा घटादीनाम् । परिहरति--

१. व्युत्पत्तेः. ग.

भाष्यम्

वश्यं कल्पयितव्यः सम्बन्धी भवति, तत आत्मानमप्यनेन प्रकारेणोपलभ्य कस्यायम्—इति सम्बन्ध्यन्तरमन्विच्छेम, तमपि कल्पयित्वान्यम् अन्यमपि कल्पयित्वान्यम् इत्यव्यवस्थैव स्यात्। अथ कञ्चित् कल्पयित्वा न सम्बन्ध्यन्तरमपि कल्पयिष्यसि, तावत्येव विरंस्यसि, तावता च परितुष्यसि ; ततो विज्ञाने एव परितुष्य तावत्येव विरन्तुमर्हसि ।

अत्रोच्यते—यदि विज्ञानादन्यो नास्ति, कस्तर्हि 'जानाति' इत्युच्यते ? ज्ञानस्य कर्तुरभिधानं शब्देनोपलभ्यते । तदेष शब्दोऽर्थवान् कर्तव्य इति ज्ञानाद्व्यतिरिक्तमात्मानं कल्पयिष्याम इति ।

बृहती

चन्द्रमसमादित्यं वा" इत्यत्र "सम्बन्ध्यन्तरम्" इति अन्तरशब्दश्रवणात् । नन्वन्यत्वेऽप्यन्तरशब्द उपपद्यत एव । सत्यमुपपद्यते, न तु—कार्यमकारणम्—इति शक्यतेऽवगन्तुम् । भवतु

पञ्चिका

विसभागहेत्वभिप्रायमेतत् , न पुनरुत्पत्तिरहेतुकैवोक्ता । अस्यार्थः—विसदृशकारणाभिप्रायेणेदमुक्तम्, न सम्बन्ध्यन्तरेण भवितव्यमिति ; समानजातीयं तु भवत्येव हेत्वन्तरम् ; तेन बुद्ध्यादयः परस्परं कार्यकारणभूताः । कथं पुनरिदमवगम्यते—विसभागहेत्वभिप्रायमेतदिति ? न हि चन्द्रमस-

भाष्यम्

आह---वेदा एनं शब्दमर्थवन्तं कल्पयिष्यन्ति, यदि कल्पयितव्यं प्रमंस्यन्ते। बहवः खल्विह जनाः 'अस्ति आत्मा, अस्ति आत्मा' इत्यात्मसत्तावादिन एव शब्दस्य प्रत्यक्षवक्तारो भवन्ति ; तथापि नात्मसत्तां कल्पयितुं घटन्ते। किमङ्ग पुनः 'जानाति' इति परोक्षशब्ददर्शनात् ? तस्मात् असदेतत् ॥

बृहती

दुष्टता ग्रन्थस्य ; न पुनर्दोष एवार्थान्तरावगमे हेतुः। न, सन्ताना-भ्युपगमात् ; सन्ततिर्हि हेतुहेतुमद्भावनिबन्धना । तस्मात् विसभाग-

पञ्चिका

मादित्यं वेत्यत्र सम्बन्ध्यन्तरमित्यन्तरशब्दश्रवणात् । अन्तरशब्दश्रवणे हि विलक्षणसम्बन्धी कारणभूतः प्रतीयते ; स एव च प्रतिषिध्यते । नन्वन्यत्वेऽप्यन्तरशब्द उपपद्यत एव । समानजातीयानामपि[1] यदन्यत्वमस्ति, तदभिप्रायेणाप्यन्तरशब्द उपपद्यत एव। तेन विजातीयत्वे नेदं लिङ्गम्। सत्यमुपपद्यते, न तु कार्यमकारणमिति शक्यतेऽवगन्तुम्[2] । तेन कार्यस्य कारणमवश्यं भावीति सम्बन्ध्यन्तरनिराकरणे कार्यादन्यस्य कारणस्य निराकरण-मशक्यम्, अपि तु भिन्नजातीयस्य। भवतु दुष्टता ग्रन्थस्य, न पुनर्दोष एवार्थान्तरावगमे हेतुः। यदि कारणमात्रनिषेधोऽनुपपन्नो भवति, अनुपपन्नार्थ-तयैव ग्रन्थोऽप्ययं दुष्टो भवतु ; न पुनरन्तरशब्दोच्चारणमात्राद्विजातीयसम्बन्ध्य-न्तरावगमो युक्तः । न, सन्तानाभ्युपगमात् । समानायां सन्ततावित्यनेन ग्रन्थेन सन्तानोऽभ्युपगतः। ततः किमित्यत्राह—सन्ततिर्हि हेतुहेतुमद्भाव-निबन्धना । हेतुहेतुमद्भावावस्थितानि वस्तूनि निरन्तरोत्पन्नानि सन्ततिशब्दा-भिधेयानि ; तदभ्युपगमे हेत्वङ्गीकारस्तावदस्ति ; तदङ्गीकारे च सर्वथा

---

१. जातीयमपि. ग. २. वक्तुम्. ग.

भाष्यम्

उच्यते—इच्छया आत्मानमुपलभामहे। कथमिति ? उपलब्धपूर्वे हि अभिप्रेते भवतीच्छा यथा मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि, न तानि प्रति अस्माकमिच्छा भवति। नो खल्वन्येन पुरुषेणोपलब्धेऽपि विषयेऽन्यस्य उपलब्धुरिच्छा भवति ; भवति च अन्येद्युरुपलब्धे अन्येद्युरिच्छा। तेन उपलम्भनेन 'समानकर्तृका सा' इत्यवगच्छामः। यदि विज्ञानमात्रमेवेदमुपलम्भकमभविष्यत्, प्रत्यस्ते तस्मिन्

बृहती

हेत्वभिप्रायमेतदित्यवेहि। अतः सभागसन्ततिहेतुकमेवेदं कार्यजालम् ; नात्र विसदृशोपलब्धौ प्रमाणमस्ति—इत्युपसंहृतम्। यदि च विसभागादृते नोत्पत्तिः स्यात्, अव्यवस्थैव स्यात्। अनयैव युक्त्या कर्तृशब्दार्थे इच्छा स्मृतिश्च प्रत्युक्ता, अन्यस्यादर्शनादिति ; न ह्यदृष्टेऽन्यस्मिन् विसभागे स्मृत्यादयो नोपपद्यन्त इति शक्यते वक्तुम् ;

पञ्चिका

हेतुनिषेधो न घटते। तस्माद्विजातीयहेत्वभिप्रायेण निषेधः। तदाह—तस्माद्विसभागहेत्वभिप्रायमेतदित्यवेहि। उपसंहरति—अतः सभागसन्ततिहेतुकमेवेदं कार्यजालम्; नात्र विसदृशोपलब्धौ प्रमाणमस्तीत्युपसंहृतम् भाष्यकारेण—'सभागानां प्रत्यक्षसिद्धानां कारणत्वोपपत्तौ नात्यन्तापरिदृष्टकारणानुमानमुपपद्यते' इति। अत्र सभागविसभागशब्दौ बौद्धानां स्वनिकायप्रसिद्ध्या सजातीयविजातीययोर्वर्तेते। यदि च विसभागादृते नोपपत्तिः स्यात्, अव्यवस्थैव स्यात्। अयमभिप्रायः—योऽसावात्मानुमेयः सोऽपि

भाष्यम्

कस्यापरेद्युरिच्छा अभविष्यत् ? अथ तु विज्ञानादन्यो विज्ञाता नित्यः, तत एकस्मिन्नहनि य एव उपलब्धा परेद्युरपि स एवैषिष्यतीति ; इतरथा हीच्छा नोपपन्ना स्यात्। अत्रोच्यते—अनुपपन्नमिति नः क्व संप्रत्ययः ?

बृहती

न हि दृष्टेऽनुपपन्नं नाम । तदिदमुक्तम्—"अनुपपन्नमिति नः क्व संप्रत्ययः ?" इति । किं पुनः कारणं सर्व एवामी आत्मप्रतीतिहेतव उपन्यस्य निरस्यन्ते भाष्यकारेण ? एभिरनात्मन्यात्मबुद्धिः प्राप्नोति ; सर्वप्रकारं चाज्ञानं निरसनीयम् । कथं पुनरमी हेतवोऽनात्मन्यात्मबुद्धि-

पञ्चिका

क्षणिक एव युक्तः, कार्यगम्यस्य कार्यात्प्राक् भावमात्रे प्रमाणसम्भवात् ; तस्यापि कार्यभूतस्य विजातीयकारणान्तरं क्षणिकमेव, तस्याप्यन्यत्तादृशमित्यव्यवस्था । सजातीयकारणकल्पनायां पुनः परस्परकारणतेति नानुपपन्नं किञ्चित् । अनयैव युक्त्या बुद्ध्यादिभ्योऽन्यस्यानुपलब्धेः परस्परकारणतया चोपपत्तेर्जानातीति कर्तृशब्दार्थ इच्छा स्मृतिश्च प्रत्युक्ता, अन्यस्य ज्ञानातिरिक्तस्यादर्शनात्, न ह्यदृष्टेऽन्यस्मिन् विसभागे 'स्मृत्यादयो नोपपद्यन्ते' इति शक्यते वक्तुम्; न हि दृष्टेऽनुपपन्नं नाम । यदि ज्ञानादन्यस्य दर्शनं स्यात्तदा तत्कारणत्वादेषां तदभावेऽनुपपत्तिरवगम्येत; अन्यस्य पुनरदर्शने न काचिदनुपपत्तिः, तद्व्यतिरेकेणैव दर्शनात् । ननु प्राणादिलिङ्गनिराकरणं भाष्यकारस्य निरर्थकम् ; यदि प्राणादीन्यात्मानमवगमयितुमीशते, ततस्तेभ्योऽप्यात्मप्रतीतिरस्तु ; अथ न, तदा अनादर एव युक्तः, किमर्थमेषां निराकरणमिति ? तदाह—किं पुनः कारणं सर्व एवामी आत्मप्रतीतिहेतव उपन्यस्य निरस्यन्ते भाष्यकारेणेति । प्रयोजनमाह—एभिरनात्मन्यात्मबुद्धिः प्राप्नोति ; सर्वप्रकारं चाज्ञानं निरसनीयमिति । अस्यार्थः—यद्येते हेतवो न निराक्रि-

भाष्यम्

यन्न प्रमाणेनावगतम् , तन्नास्त्येव ; विज्ञानात्तावदन्यं नोपलभामहे, यन्नोपलभामहे, तत् शशविषाणवदेव नास्ति—इत्यवगच्छामः । न च तस्मिन्नसति विज्ञानसद्भावोऽनुपपन्नः, प्रत्यक्षावगतत्वात् । क्षणिकत्वं च अस्य प्रत्यक्षपूर्वकमेव ।

बृहती

मुत्पादयन्ति ? यत्तावदिदमुक्तम्—"प्राणादिभिरेनमुपलभामहे"—इति, किमत्रायुक्तम् ? भूतगुणा ह्यमी न भवन्ति, अयावद्भूतभावित्वात् घटादिष्वदर्शनात् इति निरस्ते च भूतधर्मत्वे आश्रयित्वाच्चान्यसम्बन्धितायामवगतायां चित्तचेत्यानां स्वयमाश्रितत्वात् आत्मगुणा ह्येते इति युक्तमेवोक्तम् । कथमनेनानात्मन्यात्मबुद्धिः शक्यते वक्तुम् ? तत् सुखादयोऽप्याश्रिततयोपलभ्यमाना अयावद्भूतभावितया

पञ्चिका

येरन् , तदा शिष्याणामेष्वपि वैशेषिकादिदर्शनश्रवणविप्रलब्धबुद्धीनां समीचीनात्महेत्वभिमानः स्यात् ; हेत्वापत्तौ च हेतुमद्व्यवस्थेति हेतुसामर्थ्यानुसारेण भूतसङ्घात एवात्मेत्यनात्मन्येवात्माभिमानः स्यात् । सर्वप्रकारं चाज्ञानं शिष्याणामपनेयमित्येषां निराकरणम् । कथं पुनरमी हेतवोऽनात्मन्यात्मबुद्धिमुत्पादयन्ति ? एकग्रन्थेनाह—यत्तावदिदमुक्तम्—"प्राणादिभिरेनमुपलभामहे" इति, किमत्रायुक्तम् ? भूतगुणा ह्यमी न भवन्ति ; अयावद्भूतभावित्वात् घटादिष्वदर्शनात्[1] इति निरस्ते च भूतधर्मत्वे उत्पत्तिमत्तया च समवायिकारणशून्यानामनुत्पादादन्यसम्बन्धितायामवगतायां चित्तस्य ज्ञानस्य चेत्यस्य[2] सुखादेश्च स्वयमुत्पत्तिमत्तयाश्रितत्वादाश्रयान्तरापेक्षत्वात् आश्रयान्तरकल्पनायां स्थितायामनाश्रितनित्यात्मगुणा ह्येत इति युक्तमेवोक्तम् । कथमनेन हेतुना

१. Added एतच्च प्राग्विवृतम्. ग. २. चैतन्यस्य. ग.

भाष्यम्

न च ज्ञातरि ज्ञानादन्यस्मिन् असति, ज्ञाने चानित्ये अपरेद्युरिच्छा अनुपपन्ना, प्रत्यक्षावगतत्वादेव। नो खल्वप्येतत् दृष्टम् 'य एवान्येद्युरुपलब्धा स एवान्येद्युरेषिता' इति। इदं तु दृष्टम् 'यत् क्वचित् अन्येन दृष्टमन्य इच्छति,

बृहती

च सम्यगात्मगुणतयोक्ताः । अत्रोच्यते—प्राणादयस्तावदयावद्भूतभावितया नैवं शक्यन्ते वक्तुम् । चलनात्मका ह्यमी ; वायोश्चायं धर्मः; सर्वत्र हि श्वसनादिषु चलनात्मकतैवोपलभ्यते । तस्मादयावद्भूतभावित्वमसिद्धम् । सेयमनात्मन्यात्मबुद्धिः । येऽपि सुखादय उपन्यस्ताः, तेऽपि भूतविकारहेतुत्वात् भूतगुणा एवेति शक्यन्ते वक्तुम् ; न ह्यगुणो गुणिनं विकर्तुमुत्सहते । अवस्था हि विकारः ; अवस्था चावस्थावतोऽवस्थान्तरो-

पञ्चिका

नात्मन्यात्मबुद्धिः शक्यते वक्तुम् । तस्मात्सुखादयोऽप्याश्रिततयोपलभ्यमाना अयावद्भूतभावितया च निरस्तभूताश्रयभावाः सम्यगेवात्मगुणतयोक्ता वैशेषिकादिभिः । अत्रोच्यते—प्राणादयस्तावदयावद्भूतभावितया नैवं शक्यन्ते वक्तुम्। किमिति ? उत्तरम्—चलनात्मका ह्यमी। प्राणादयः। वायोश्चायं धर्मः। चलनं नाम। न च श्वसनादिषु प्राणादीनामचलनात्मकता ; तदाह—सर्वत्र हि श्वसनादिषु चलनात्मकतैवोपलभ्यते । तस्मादयावद्भूतभावित्वमसिद्धम् प्राणादीनाम्। सेयमनात्मनि भूते आत्मबुद्धिः । येऽपि सुखादय उपन्यस्ताः, तेऽपि भूतविकारहेतुत्वात् भूतगुणा एवेति शक्यन्ते वक्तुम्। कुतः ? न ह्यगुणो गुणिनं विकर्तुमुत्सहते। यो यस्य गुणो न भवति

---

१. -कत्वात्. ग.
२. -त्वासिद्धेः ग.
३ भूतविकल्प- ग.

भाष्यम्

क्वचिन्नेति । समानायां सन्ततावन्य इच्छति, सन्तत्यन्तरे नेच्छतीति । तस्मात् न सुखादिव्यतिरिक्तोऽन्योऽस्तीति । अत्रोच्यते—न हि 'अस्मर्तार इच्छन्ति' इत्युपपद्यते ; न वा अदृष्टपूर्वे स्मृतिर्भवति । तस्मात् क्षणिके विज्ञानस्कन्धमात्रे स्मृतिरनुपपन्नेति ।

बृहती

त्पत्तौ हेतुः ; न चावस्थावस्थावतोऽन्येति सिद्धं भूतगुणत्वम् । ननु चैवमेव वक्तव्यम् । किमित्युक्तम्—कामं सुखादय एवं स्युः—इति ? अभ्युपगम्यायमर्थो न सिध्यतीत्यभिप्रायः, कामाभिधानात् । किं पुनरभ्युपगमे कारणम् ? इदमस्ति कारणम्—अत्र केचित् प्रज्ञाभिमानिनो

पञ्चिका

न स तं गुणिनं विकर्तुमुत्सहते । कुतः तत्राह—**अवस्था हि विकारः ; अवस्था चावस्थावतोऽवस्थान्तरोत्पत्तौ हेतुः**। समवायिकारणप्रत्यासन्नं ह्यसमवायिकारणं भवति। यथा तन्तुसंयोगस्तन्तुसमवेतस्य[1] पटस्योत्पत्तौ निमित्तम्, तेन सुखादयोऽपि भूतेषु समवायिषु नयनादिषु प्रसन्नतादिविकारं प्रत्यसमवायिकारणभूतत्वात् भूतसमवायिन एवेति; तदाह—**न चावस्थावस्थावतोऽन्येति**। अन्यता चात्र अत्यन्तासम्बन्धताभिप्रेतेति **सिद्धं भूतगुणत्वं** सुखादीनाम्। **ननु चैवमेव वक्तव्यम्** । प्राणादिभिरनात्मन्यात्मबुद्धिर्भवति—इत्येव वक्तव्यम् । **किमित्युक्तम्—कामं सुखादय एवं स्युः—इति ?** परिहरति—अभ्युपगम्याप्यभूतधर्मत्वमयमर्थ आत्मधर्मो न सिध्यतीत्यभिप्रायः । कथमभिप्रायोऽवगम्यत इत्यत्राह—**कामाभिधानात्** । तावता च परितोष्यसीति कामाभिधानम् । **किं पुनरभ्युपगमे कारणम् ?** भूतधर्मा न भवन्तीत्यभ्युपगमे किं कारणम्, निर्बीजोऽभ्युपगमो न भवतीति ? **इदमस्ति कारणम्—**

---

१. Omitted तन्तुसंयोग. ग.

भाष्यम्

अत्राह—स्मृतिरपि इच्छावत् पूर्वज्ञानसदृशं विज्ञानं पूर्वविज्ञानविषयं वा स्मृतिरित्युच्यते ; तच्च द्रष्टरि

बृहती

विप्रतिपन्नाः—केयमाश्रयाश्रयिता नाम ? सङ्घातमात्रमेवेदमुपलभ्यते, न ह्येकत्रोपलब्ध्याश्रयाश्रयिता भवति भूतानामिव परस्परम् । तस्मात् तेऽपि सुखादयः स्वतन्त्रा वा आश्रयिणो वा—इत्यभ्युपगमात् प्रदर्शितम् ।

अत्रापरे ब्रह्मविदः—कर्त्रभिधानात् स्मृतेरिच्छातश्च महदादिभूतपर्यन्तात् शरीरात् अतिरिक्तमात्मानमुपलभामहे—इति प्रतिपन्नाः । कथं

पञ्चिका

अत्र केचित्प्रज्ञाभिमानिनो बौद्धा विप्रतिपन्नाः—केयमाश्रयाश्रयिता नाम ? क्षणिकत्वात्सर्वपदार्थानां समवायिकारणं न भवतीति कारणस्य कार्येण सह संगमाभावात्तयोरयौगपद्यात् । सङ्घातमात्रमेवेदमुपलभ्यते ; न ह्येकत्रोपलब्ध्याश्रयाश्रयिता भवति भूतानामिव परस्परम् । तेन स्वतन्त्रा भवन्तीत्यभ्युपगमः । तस्मादित्युपसंहरति—तेऽपि सुखादयः स्वतन्त्रा भवन्त्वाश्रयिणो वा सर्वथा आत्मसाधका न भवन्तीत्यभ्युपगमात् प्रदर्शितम् ।

एवं तावदभ्युपगम्यापि प्राणादिसुखादीनामभूतधर्मत्वं नात्मसाधकत्वमित्युपसंहृतम्; संप्रति प्राणादिषु सुखादिषु च निराकृतेषु केन विशेषेण 'जानाति' इति शब्दप्रयोगः, इच्छा, स्मृतिश्चोपन्यस्ता इतीमामाशङ्कामपनेतुमाह—अत्रापरे ब्रह्मविदः—कर्त्रभिधानात्स्मृतेरिच्छातश्च महदादिभूतपर्यन्ताच्छरीरादतिरिक्तमात्मानमुपलभामहे—इति प्रतिपन्नाः । एषा हि साङ्ख्यानां प्रक्रिया—प्रकृतिर्महदादिरूपेण विपरिणमते । तथा हि—प्रकृतिर्महच्छब्दवाच्यबुद्धिरूपतया[1] विपरिणमते ; महतोऽप्यहङ्कारो विपरिणामः ; अहङ्कारस्य च पञ्चतन्मात्राणि गन्धरसरूपस्पर्शशब्दात्मकानि ; तथैकादशेन्द्रियाणि—पञ्च ज्ञानेन्द्रियाणि चक्षुस्त्वग्रसनश्रवणनासिकात्मकानि, कर्मेन्द्रियाणि च उत्सर्गा-

---

१. -वाच्या ग.

भाष्यम्

विनष्टेऽपि अपरेद्युरुत्पद्यमानं नानुपपन्नम्, प्रत्यक्षावगतत्वादेव । यत्स्कन्धजेनान्येन यज्ज्ञातम्, तत् तत्सन्तति-

बृहती

पुनरभिधानादेर्हेतुतोक्ता तैः? ज्ञानात्मकं ह्यन्तःकरणं महदादि, ज्ञेयं च कार्यम्; अतः कार्यकरणव्यतिरिक्तो 'जानाति' इति शक्यते वक्तुम्; ज्ञानेन किमपि भावयेदिति हि प्रत्ययः । तस्मात् सिद्ध आत्मा कर्तृभूतः । नन्वसौ निष्क्रिय इत्युक्तम्; प्रत्ययस्य हि कर्तरि 'जानाति'

पञ्चिका

नन्दादानगत्यालापकारणानि पायूपस्थहस्तपादवाग्रूपाणि, साधारणं च मनः; तन्मात्राणां च पृथिव्यादीनि भूतानि यथाक्रमं पञ्चानामपि पृथिवी, चतुर्णामापः, त्रयाणां तेजः, द्वयोर्वायुः, एकस्य गगनमिति । सुखदुःखमोहात्मिका प्रकृतिरेवंविधविपरिणामा; तद्व्यतिरिक्तः पुरुषः । तदाहुः—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥" इति ।

शरीरशब्देन प्राकृतः सर्वोऽयं प्रपञ्च उक्तः । कथं पुनरभिधानादेर्हेतुतोक्ता तैः? एवमुक्ता—ज्ञानात्मकं ह्यन्तःकरणं महदादि । महदहङ्कारमनांसि त्रीण्यन्तर्व्यवस्थितानि[1] ज्ञानशब्दवाच्यानि ज्ञायतेऽनेनेति व्युत्पत्त्या करणानि । ज्ञेयं च कार्यम् । कर्मैवेत्यर्थः । अतः कार्यकरणव्यतिरिक्तः कर्ता जानातीति शक्यते वक्तुम्; 'ज्ञानेन करणेन किमपि ज्ञेयं भावयेत्' इति हि प्रत्ययः यस्माज्जानातिशब्दादुत्पद्यते, अतः करणकर्मव्यतिरिक्तकर्तृसिद्धिः । तस्मात्सिद्ध आत्मा कर्तृभूतः । नन्वसौ निष्क्रिय इत्युक्तम्; प्रत्ययस्य हि कर्तरि जानातीति प्रत्ययः । उत्तरम्—येषां ताव-

---

१. प्राण्यन्त- ग.

भाष्यम्

**जेनान्येन स्मर्यते, नातत्सन्ततिजेन । तस्माच्छून्याः स्कन्धा**

बृहती

इत्ययं प्रत्ययः । येषां तावदात्मनि ज्ञानं समवैति, तेषां तत्कारणत्वात् प्रत्ययकर्तृतापि सिद्धैव । येषां पुनः बुद्धिधर्मतयैव प्रसिद्धा ज्ञानादयः, तेषामपि भोक्तृतयायं हेतुः । कथमिच्छात उपलब्धिरुक्ता ? एवमुक्ता— भुक्तपूर्वविषयो ह्यभिलाष इच्छा ; न च क्षणिकेषु स्कन्धेषु भुक्तपूर्वताभिमान उपपद्यते । ननु न हि दृष्टेऽनुपपन्नं नाम । दृष्टे ह्यनुपपत्तिर्नास्ति, न पुनः

पञ्चिका

१येषां वैशेषिकाणामात्मनि ज्ञानं समवैति समवायसम्बन्धेन संबध्यत इति दर्शनम् , तेषां समवायिकारणत्वात् समवायिनो ज्ञानस्य कार्यस्य कारणत्वादात्मनः प्रत्ययकर्तृता सिद्धैव । येषां पुनः साङ्ख्यानां बुद्धिधर्मतयैव ज्ञानादयो ज्ञानधर्मवैराग्यादयः प्रसिद्धाः, तेषां यद्यपि साक्षादात्मनो ज्ञानोत्पत्तौ कारणता नास्ति, तथापि भोक्तृतयायं हेतुः ; आत्मनो हि भोक्तृतया बुद्धिर्ज्ञानरूपेण भोग्यतया विपरिणमते । तदाहुः—

"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं प्रवर्तते तद्वदव्यक्तम् ॥" इति ।

तेन ज्ञानोत्पत्तौ निमित्ताभावादस्ति तत्रात्मनः कर्तृत्वमिति । **कथमिच्छात उपलब्धिरुक्ता ?** यावता विषयज्ञानादेव कार्यभूतेच्छोपपद्यत इति ज्ञानव्यतिरिक्तं स्वकारणमिच्छावगमयितुं न शक्नोति । उत्तरम्—**एवमुक्ता, भुक्तपूर्वविषयो ह्यभिलाष इच्छा** । पूर्वं भुक्तो भुक्तपूर्वः यो विषयः तद्विषयो ह्यभिलाषः इच्छोच्यते । भवत्वेवम् , तथापि किमित्याह—**न च क्षणिकेषु स्कन्धेषु भुक्तपूर्वताभिमान उपपद्यते** । यस्य बौद्धस्य दर्शने समवायिकारणं नाम नास्ति, न तस्य क्षणिकेषु स्कन्धेषु विज्ञानरूपवेदना संज्ञा ; संस्कारसंज्ञकेषु भुक्तपूर्वा बुद्धिरुपपद्यते, पूर्वभोक्तुरधुनातनभोक्तुश्चान्यत्वात् । तस्मादस्ति पूर्वोत्तरकालवर्ती भोगयोगी स्कन्धातिरेकी पुरुष इति । **ननु न हि दृष्टेऽनुपपन्नं नाम ।**

---

१. Omitted सम...........कारणत्वात् . ग.

भाष्यम्

इति । अथापि ब्राह्मणं भवति---"विज्ञानघन एवैतेभ्यो

बृहती

दृष्टस्यान्यथाभावो दृष्टत्वान्नानुपपन्न इति शक्यते वक्तुम् ; दृष्टस्याय-मन्यथाभावः । तस्मादिच्छया कार्यकरणादन्यमुपलभामहे इत्युक्तम् । तथा स्मृतेः; स्मृतिरप्यनुभूतविषयैव । न च क्षणिकेऽर्थेऽयमनुभूतानुभव उपपद्यते ; न हि दृष्टेऽनुपपन्नं नाम—इति । कथं तर्हि भाष्य-कारेण "अनुपपन्नमिति नः क संप्रत्ययः" इत्युक्तम् ? श्रूयतां यथोक्तम् । किमनुभवस्यानुपपन्नत्वम् ? अनुभव एव यस्यानुभूयते,

पञ्चिका

तेन क्षणिकेष्वपि स्कन्धेषु नानुपपत्तिः, तत्राह—दृष्टे ह्यनुपपत्तिर्नास्ति, न पुनर्दृष्टस्यान्यथाभावो दृष्टत्वान्नानुपपन्न इति शक्यते वक्तुम् । अस्यार्थः —न वयमिच्छालक्षणकार्यान्यथा[1]नुपपत्त्या आत्मानं कल्पयामः; किन्तूभयभोग-सम्बन्ध्यनुभूयत एवेति वदामः । यत्तु खलु दृष्टं तत्रानुपपन्नं नास्ति; दृष्टस्य पुनरुभयभोगसम्बन्धिनोऽन्यथाभावः क्षणिकत्वमभिधीयमानं दृष्टत्वेनानुपपन्नं न भवतीति न[2] शक्यते वक्तुम् । तस्मादिच्छया कार्यकरणादन्यमुपलभामह इति । तथा स्मृतेरप्यात्मसिद्धिः; स्मृतिरप्यनुभूतविषयैव; न चानुभवितारि क्षणिकेऽनुभूतानुभव उपपद्यत इति । ननु नेदमुपपद्यते—अनुभूतं पुनरनु-भवति कश्चिदिति, क्षणिकत्वादनुभवितुः; तत्राह—न हि दृष्टेऽनुपपन्नं नाम । दृष्टेऽनुभवानु[3]भवितर्यनुपपन्नता नास्ति । नावश्यं सर्वेण क्षणिकेन भवितव्यमिति यावत् । कथं तर्हि भाष्यकारेण "अनुपपन्नमिति नः क संप्रत्ययः" इत्युक्तम् ? यदि यथोक्तेन न्यायेन कार्यकरणव्यतिरिक्तेन स्थिरेणात्मना विनानुपपत्तिः, तदा कथं भाष्यकारेण "अनुपपन्नमिति नः क

---

१. Omitted अन्यथा दृष्टत्वेन. ग.

२. Omitted न. ग.

३. अनुभूता– क.

भाष्यम्

भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति'' इति ।

बृहती

का तस्यानुभूयमानापेक्षा ? तस्मात् सुष्ठूच्यते ''अनुपपन्नमिति नः क संप्रत्ययः'' इति । तस्माच्छून्याः स्कन्धा इत्युपसंहृतम् । तथा च ब्राह्मणमप्यमुमेवार्थमनुवदति ''विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति; न प्रेत्य संज्ञास्ति'' इति । तस्मादनात्मन्यात्म-बुद्धिहेतवोऽमी निराकरणीयतयोपन्यस्ता भगवता भाष्यकारेण ।

पञ्चिका

संप्रत्ययः'' इत्यदिना ग्रन्थेनानुपपन्नता नास्तीत्युक्तम् ? श्रूयतां यथोक्तम्—किमनुभवस्यानुपपन्नत्वम् , विनापि स्थिरेणात्मना ? नन्वनुभूयमानेन स्थिरेणार्थेन विना स्थिरानुभव एव यथा नोपपद्यते, तथा कर्म विना कर्त्रनुभवः; तत्राह—अनुभव एव यस्यानुभूयते, बौद्धस्य दर्शने का तस्यानुभूयमानापेक्षा ? विज्ञानवादे हि संविदेव तेन तेन रूपेणानुभूयते, न व्यतिरिक्तं किञ्चित् । तस्मात्सुष्ठु शोभनमुच्यते ''अनुपपन्नमिति नः क संप्रत्ययः'' इति । तस्माच्छून्याः स्कन्धा इत्युपसंहृतम् । यस्मादेभिर्हेतुभिरात्मा न सिध्यति, तस्मादात्मना शून्या स्कन्धा इत्युपसंहृतम् । तथा च ब्राह्मणमप्यमुमेवार्थमनुवदति—''विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति ; न प्रेत्य संज्ञास्ति'' इति । यस्माद्विज्ञानचैतन्यमनन्तरोक्तं परित्यज्य भूतचैतन्यमुपसंह्रियते, तस्मादनात्मन्यात्म[1]बुद्धिहेतवोऽमी निराकरणीयतयोपन्यस्ता भगवता भाष्यकारेणाभ्युपगम्य वादेनेति ज्ञायते, अत एव भाष्याल्लिङ्गात् । ''अत्रोच्यते—नैतदेवम्'' इत्यादि भाष्यमाक्षेप्तुं पठितम् ; आक्षिपति—किं पुनः कारणमत्रात्मसिद्धौ परकीयानुमाननिराकरणे ?

१. Omitted बुद्धि. ग.

भाष्यम्

अत्रोच्यते—नैतदेवम् ; अन्येद्युर्दृष्टेऽपरेद्युः 'अहमिदमदर्शम्' इति भवति प्रत्ययः ; प्रत्यगात्मनि चैतद्भवति, न परत्र ; परो ह्यसौ योऽन्येद्युर्दृष्टवान्। तस्मात् तद्व्यतिरिक्तोऽन्योऽस्ति, यत्रायमहंशब्दः।

बृहती

"अत्रोच्यते—नैतदेवम् ; अन्येद्युर्दृष्टेऽपरेद्युः 'अहमिदमदर्शम्' इति भवति प्रत्ययः ; प्रत्यगात्मनि चैतद्भवति, न परत्र ; परो ह्यसौ, योऽन्येद्युर्दृष्टवान् । तस्मात्तद्व्यतिरिक्तोऽन्योऽस्ति, यत्रायमहंशब्दः" । किं पुनः कारणमत्रानुमाननिराकरणे ? असम्भवादिति ब्रूमः । 'प्रत्यक्ष-दृष्टेऽर्थेऽनुमानं न संभवति' इति साहसमिदम् । स्वयमेव च वक्ष्यति "नूनमसावनित्यान्नित्यं पश्यति" इति । तस्मान्नात्रासम्भवाभिप्रायो वर्णयितुं शक्यते । अथैतन्मनसि विपरिवर्तते 'परोक्तमनुमानं न संभवति'

पञ्चिका

असम्भवादिति ब्रूमः । प्रत्यक्षेण प्रतीतेऽर्थेऽनुमानं न संभवतीत्यनुमानं निरस्यति । दूषयति—प्रत्यक्षदृष्टेऽर्थेऽनुमानं न संभवतीति साहसमिदम् । प्रत्यक्षदृष्टेऽप्यर्थेऽनुमानसम्भवोऽनुमानवादस्थान एवोक्तः सम्बन्धग्रहणसमयाव-गतेऽप्यनुमानदर्शनात् । स्वयमेव च वक्ष्यति "नूनमसावनित्यान्नित्यं पश्यति" इति । तेनानुमानं स्वयमेव भाष्यकारो वक्ष्यति । तस्मान्नात्रानुमाना-सम्भवाभिप्रायो वर्णयितुं शक्यते । अथैतन्मनसि भाष्यकारस्य विपरिवर्तते —परोक्तमनुमनं न संभवति । पूर्वोक्ताद्दोषात् ; तेन तन्निराकृतम् इति,

भाष्यम्

आह---परत्राप्यहंशब्दो भक्त्या दृश्यते ; तद्यथा 'अहमेव पुत्रः, अहमेवासौ देवदत्तः, अहमेव गच्छामि' इति।

बृहती

इति । प्रत्यक्षोपन्यासस्तर्हि किमर्थः ? न ह्यसति प्रत्यक्षेऽनुमानमुपपद्यते इति चेत्, किमिदम् 'असति प्रत्यक्षे' इति ? अस्ति चानुमानं प्रत्यक्षव्यापारनिरपेक्षम् । न ब्रूमः 'अनुमानं सर्वत्र प्रत्यक्षव्यापारनिरपेक्षमेव नास्ति' इति । किं तर्हि ? 'स्वयमात्मानं प्रत्यक्षेणानुपलभ्य नेदमनुमानं प्रवर्तते' इति । उपलब्धश्चेत् स्वयम्, किमनुमानेन ? स्वपरिज्ञानशुद्धिर्हि

पञ्चिका

प्रत्यक्षोपन्यासस्तर्हि किमर्थः ? स्वकीयं तर्ह्यनुमानमदुष्टमित्येतदेव[1] वक्तव्यम् ; किमिति प्रत्यक्षमुपन्यस्तम्? प्रत्यक्षोपन्यासप्रयोजनमाशङ्कते---न ह्यसति प्रत्यक्षेऽनुमानमुपपद्यत इति चेदिति । अनुमानसामग्रीभूतत्वेन प्रत्यक्षमुपन्यस्तमिति । निराकरोति---किमिदम् 'असति प्रत्यक्षे' इति ? अस्ति चानुमानं प्रत्यक्षव्यापारनिपेक्षम् । क्रियादिषु । अस्ति चेति चशब्दो यस्मादर्थे । पुनराशङ्कते---न ब्रूमः 'अनुमानं सर्वत्र प्रत्यक्षव्यापारनिरपेक्षमेव नास्ति' इति । किं तर्हि ? 'स्वयमात्मानं प्रत्यक्षेणानुपलभ्य नेदमनुमानं प्रवर्तते' इति । स्वात्मनि हि स्थिरात्मनि विशिष्टचेष्टादर्शनेन परत्रापि तच्चेष्टादर्शनात् स्थिरात्मानुमानोत्पत्तिः ; नान्यथा, सम्बन्धग्रहणाभावादिति सम्बन्धग्राहकतया प्रत्यक्षोपन्यासः । निराकरोति---उपलब्धश्चेत् स्वयं[2] प्रत्यक्षेण, किमनुमानेन परात्मविषयेण ? यस्मात्स्वस्यात्मनः परिज्ञानं यत्तस्यैव शुद्धिः प्रामाणिकत्वं श्रेयसे; स्वात्मानं स्थिरं ज्ञात्वा धर्मानुष्ठाने यतमानो धर्मादेव श्रेयो लभते । तदाहुः स्मृतिकाराः---

---

१. इति तदेव. ग. २. Omitted. स्वयम्. ग.

भाष्यम्

अत्रोच्यते——न वयं 'अहम्' इतीमं शब्दं प्रयुज्यमानमस्मिन्नर्थे हेतुत्वेन व्यपदिशामः ; किं तर्हि ? शब्दाद्व्यति-

बृहती

श्रेयसे; तदर्थश्चायमारम्भः । अथायमुपदेशः परार्थ एव प्रवृत्तः, आत्मसंविद इदानीं क उपयोगः ? अथ परस्यापि प्रतिपत्तौ प्रत्यक्षमेव प्रमाणम्——इति मतम्, अनुमानोपन्यासोऽनर्थकः । यदप्युच्यते——"यत्रायं अहंशब्दः" इति, पुनश्चापह्नूयते——"न वयं 'अहम्' इतीमं शब्दं प्रयुज्यमानमस्मिन्नर्थे हेतुत्वेन व्यपदिशामः" इति, तदप्यबुद्धिमत इवाभिधानमिति प्रतिभाति ; किमपह्नवनीयस्याहंशब्दस्योपन्यासे प्रयोजनम् ? इदमपरमयुक्तम्——"यदि विज्ञानादन्यदस्ति

पञ्चिका

"सत्यं यज्ञस्तपो दानमेतद्धर्मस्य शासनम् ।
धर्मात्सुखं च ज्ञानं च धर्मान्मोक्षोऽधिगम्यते ॥" इति ।

तदर्थश्चायं श्रेयोऽर्थश्चायमारम्भः । अथायमुपदेशः परार्थ एव प्रवृत्तः । पर एवात्मसत्तां बोधयितव्यः इति, आत्मसंविद इदानीं क उपयोगः ? प्रत्यक्षं तर्ह्यात्मसंविदर्थमनुपन्यसनीयम् । अथ परस्यापि प्रतिपत्तौ प्रत्यक्षमेव प्रमाणमिति मतम्, तेन प्रत्यक्षोपन्यासः तर्हि अनुमानोपन्यासोऽनर्थकः । यदप्युच्यते ——"यत्रायमहंशब्दः" इति, पुनश्चापह्नूयते ——"न वयमहामितीमं शब्दं प्रयुज्यमानमस्मिन्नर्थे हेतुत्वेन व्यपदिशामः" इति, तदप्यबुद्धिमत इवाभिधानमिति प्रतिभाति । किमपह्नवनीयस्याहंशब्दस्योपन्यासे प्रयोजनम् ? इदमपरं नोपपद्यते——"आह, यदि विज्ञानादन्यदस्ति विज्ञातृ विज्ञानमपास्य तन्निदर्श्यतामिदं तदीदृशं चेति" प्रत्यभिज्ञानेन स्थिरस्यात्मनः क्षणिकज्ञान-

१. साधनम्. ग. २. Omitted अथायम्. ग.
३. Added अयम्. ग.

भाष्यम्

रिक्तं प्रत्ययं प्रतीमो वयम्, 'इममर्थं वयमेवान्येद्युरुपलभामहे, वयमेवाद्य स्मरामः' इति। तस्माद्वयमिममर्थमवगच्छामः,

बृहती

विज्ञातृ विज्ञानमपास्य तन्निदर्श्यताम् 'इदं तदीदृशं च' इति" इति। पृष्टे "अत्रोच्यते"—इत्येवमाद्युत्तरं नोपपद्यते; अत्र विज्ञानाग्रहणे तद्ग्रहणं नास्ति—इति चोदितम्; स्वसंवेद्यतया कथमस्य निराकरणम्? न हि स्वसंवेद्यत्वनिबन्धनं विज्ञानग्रहणपूर्वकं ग्रहणं वस्तुनः। अथायमभिप्रायः—स्वसंविन्नो न पृथक्तया व्यपदेष्टुं शक्यते परस्मै —इति, अत्यल्पमिदमुच्यते; अपृथक्तया वा कथं परेणासंविन्नोऽर्थो व्यपदेष्टुं शक्यते परस्मै? तस्मादिदमप्यनालोचनपूर्वमिव प्रतिभाति। प्रत्युक्तस्य चोपन्यासे किं प्रयोजनमिति नैव ज्ञायते।

पञ्चिका

व्यतिरेकिणः सिद्धत्वात्। अस्यापि चोद्यस्य "अत्रोच्यते" इत्याद्युत्तरं नोपपद्यते। कथं नोपपद्यते? अत्र हि विज्ञानाग्रहणे सत्यात्मनो ग्रहणं नास्तीति चोदितम्; **स्वसंवेद्यतया कथमस्य निराकरणम्?** यदि स्वसंवेद्य आत्मा किमेतावता चोद्यमिदं निराकृतं भवति? अथायमभिप्रायः—विज्ञानाग्रहणे यदात्मनोऽग्रहणम्, तत्तादात्म्यनिबन्धनं न[1] भवति; किन्तु स्वसंवेद्यत्वनिबन्धनमित्यन्यथासिद्धिमुद्भावयितुं स्व[2]संवेद्यत्वमुक्तमिति, तन्न; न हि स्वसंवेद्यत्वनिबन्धनं विज्ञानग्रहणपूर्वकं ग्रहणं कस्यचिद्वस्तुनो दृष्टम्, येनान्यथासिद्धिः स्यात्। अथायमभिप्रायः—विज्ञानव्यतिरिक्त एवात्मा प्रतीयते, किन्तु स्वसंवेद्यतया स्वसंविन्नो न पृथक्तया व्यपदेष्टुं शक्यते परस्मै—इति, अत्यल्पमिदमुच्यते; अपृथक्तया वा परेणासंविन्नोऽर्थो व्यपदेष्टुं परस्मै कथं शक्यते? तस्मादिदमप्यनालोचनापूर्वकमिव

---

१. Omitted न. ग. २. Omitted स्व. ग.

भाष्यम्

—'वयमेव ह्यः, वयमेवाद्य' इति । येऽपि चैव ह्यः, अद्यतनाश्च न ते विनष्टाः । अथाप्यस्मिन्नर्थे ब्राह्मणं भवति—

बृहती

न चायमर्थः परित्यक्त एव, विज्ञानग्रहणोपसंहारात् । अथायमभिप्रायः—विज्ञानग्रहणपक्षेऽप्यात्मनः प्रत्यक्षत्वं न शक्यतेऽपह्नोतुम् इति, "रूपान्तरं नोपलभामहे" इत्यनिराकृतैवेयं युक्तिः । न च कश्चिद्विशेषोऽभिहितः । उपमानमपि नैयायिकोक्तमभिदधता स्वल-

पञ्चिका

प्रतिभाति । प्रत्युक्तस्य चोपन्यासे किं प्रयोजनमिति नैव ज्ञायते । प्रत्युक्तोऽयमर्थः विज्ञानमगृहीत्वा विज्ञेयं नैव ग्रहीतुं शक्यत इति ; तेन विज्ञानाग्रहण एवात्मा न गृह्यत इति विज्ञानवादनिराकरणपर्वण्येतदुक्तमेव घटादिवत् । न चायमर्थः परित्यक्त एव । विज्ञानग्रहणपुरःसरो विज्ञेयबोध इति सिद्धान्तेऽप्ययमर्थो न परित्यक्तः, विज्ञानग्रहणेनोपसंहारात् । "तस्माद्विज्ञानं प्रत्याख्याय न कस्यचिद्रूपं दर्शयितुं[1] शक्यम्" इत्यनेन भाष्येण विज्ञानग्रहणेनोपसंहारः कृतः । अतो नायमर्थो निराकृतः सिद्धान्तेऽपि । अथाभ्युपगम्यवादोऽयम् ; यद्यपि विज्ञानं प्रत्यक्षग्राह्यम्, तथापि तद्व्यतिरिक्तात्मसिद्धिरुच्यते ; तदाह—अथायमभिप्रायः—विज्ञानग्रहणपक्षेऽप्यात्मनः प्रत्यक्षत्वं न शक्यतेऽपह्नोतुमिति, तदयुक्तम् ; "रूपान्तरं[2] नोपलभामहे" इत्यनिराकृतैवेयं युक्तिः । यदि विज्ञान[3]विज्ञानमपि प्रत्यक्षं स्यात्, तदा तस्यापि रूपेण भवितव्यम् ; एकं चेदं रूपमुपलभ्यते इति विज्ञानमेव साकारं स्यात् । अनुमेये तु विज्ञाने रूपान्तराभावो न दोषः । प्रत्यक्षज्ञानाभ्युपगमे तु ज्ञेयाकारापह्नवो वारयितुं न शक्यते । न च कश्चिद्विशेषोऽभिहित इति[4] । येन प्रत्यक्षज्ञानपक्षेऽपि बाह्यार्थसिद्धिः स्यात् । "उपमानाद्वोपदिश्यते" इत्यत्र भाष्ये उपमानमपि

१. Omitted दर्शयितुम्. ग. २. रूपान्तरेणोप. ग.
३. Omitted विज्ञान. ग. ४. Omitted इति. ग.

भाष्यम्

"स वा अयमात्मा" इति प्रकृत्य आमनन्ति—"अशीर्यो न हि शीर्यते" इति । तथा—"अविनाशी वा अरे अय-

बृहती

क्षणाभिधानविरुद्धमुक्तम् । न च 'अहं गच्छामि' इति चोद्य-स्यापि स्पष्टं किञ्चिदुत्तरमुपलभ्यते । ब्रह्मविद्भिरुद्धं त्वेतत् यदुताहं-प्रत्ययमेयतात्मनः । मूर्धाभिषिक्तमिदमनात्मन्यात्मज्ञानम् इत्युदा-हृतम्—यदुताहंकृतिर्ममकारश्च—इति । निर्मुक्ताहंकारममकारमात्म-ज्ञानमित्यात्मविदो मन्यन्ते । तस्मादनात्मज्ञानविलसितमिदम्—अहंप्रत्यय-

पञ्चिका

नैयायिकोक्तमभिदधता "यादृशं भवान् स्वयमात्मानं पश्यति, अनेनोपमानेनाव-गच्छ, अहमपि तादृशमेव पश्यामि" इत्यनेन ग्रन्थेन स्वलक्षणाभिधान-विरुद्धमुक्तम् । अत्र भाष्ये वाक्यजमेव ज्ञानमुपमानमुक्तम् ; तच्च नैयायि-कानां संमतम्, न भाष्यकारस्य । न च 'अहं गच्छामि' इति गन्तृ-शरीरालम्बन एवाहंप्रत्यय इत्यस्य चोद्य[1]स्य स्फुटमुत्तरं किञ्चिदुपलभ्यते । भूतचैतन्यनिराकरणमपि न कृतमित्यर्थः । ब्रह्मविद्भिरुद्धं त्वेतत्, यदुताहं-प्रत्ययप्रमेयतात्मनः । मूर्धाभिषिक्तमिदं प्रधानमिदमनात्मन्यात्मज्ञानम् इत्युदाहृतं ब्रह्मविद्भिः । अनात्मभूतशरीरविषय एवाहंप्रत्यय इत्यर्थः यदुताहङ्कृतिर्ममकारश्च । निर्मुक्ताहंकारममकारं ह्यात्मज्ञानमित्यात्मविदो मन्यन्ते । तस्मादनात्म-ज्ञानविलसितमिदम्—अहंप्रत्ययप्रमेय आत्मेति । इदानीं समाधत्ते—अत्रोच्यते—"अन्येद्युर्दृष्टेऽपरेद्युः 'अहमिदमदर्शम्' इति भवति प्रत्ययः ; प्रत्यगात्मनि चैतद्भवति, न परत्रेति" । समाधातुं भाष्ये पठित एव पुनरपि गलग्रहणेनापेक्षः—किमिदम् 'अहमिदमदर्शम्' इति ? यदि तावत्प्रत्यभिज्ञा,

---

१. Omitted चोद्यस्य. ग

भाष्यम्

मात्मा अनुच्छित्तिधर्मा" इति। विनश्वरं च विज्ञानम्।

बृहती

प्रमेय आत्मा—इति। अत्रोच्यते—"अन्येद्युर्दृष्टेऽपरेद्युः 'अहमिदमदर्शम्' इति भवति प्रत्ययः; प्रत्यगात्मनि चैतद्भवति, न परत्र" किमिदम् 'अहमिदमदर्शम्' इति? यदि तावत् प्रत्यभिज्ञा, क्षणिकत्वस्यैव तदुत्तरम्, न नैरात्म्यस्य। न चात्र क्षणिकत्वनिराकरणमभिप्रेतम्। किं तर्हि? बुद्धीन्द्रियशरीरव्यतिरिक्तस्यात्मनः सद्भावप्रतिपत्तिः। न च क्षणिकतया नैरात्म्यमुक्तं परैः। किं तर्हि? स्कन्धातिरिक्तानुपलब्धेः; नित्यताया हि क्षणिकत्वं विरोधि, नात्मसद्भावस्य। तस्य चात्र सद्भावः परैराक्षिप्तः प्रतिपाद्यते, न पुनरात्मनो विद्यमानस्य नित्यताया आक्षेपं प्रति

पञ्चिका

'पूर्वं दृष्टं संप्रति प्रत्यभिज्ञायते' इति यदि तावदनेन ग्रन्थेनोच्यते, क्षणिकत्वस्येदमुत्तरम्; न नैरात्म्यस्य। तेनाहंप्रत्ययमात्रमेवोपन्यसनीयं प्रत्यभिज्ञानम्। न चात्र क्षणिकत्वनिराकरणमभिप्रेतम्। किं तर्हि? बुद्धीन्द्रियशरीरव्यतिरिक्तस्यात्मनः सद्भावप्रतिपत्तिरभिप्रेता। ननु च क्षणिकात् ज्ञनात् ज्ञातुः स्थिरतत्वेनैवं[1] भेदसिद्धिरिति युक्तः प्रत्यभिज्ञोपन्यासः। मैवम्, असम्भिन्नेदंप्रत्ययाहंप्रत्ययविषयत्वेनापि भेदसिद्धेः; अन्यथा अस्थिराच्छरीरतः कथं भेदसिद्धिः? अथ सिद्धोऽपि बुद्धीन्द्रियशरीरव्यतिरेक्यात्मा[2] परैः क्षणिकत्वेन निराक्रियत इत्यात्मसिद्ध्यर्थः स्थैर्योपन्यासः? तत्राह—न च क्षणिकतया नैरात्म्यं परैरुक्तम्। किं तर्हि? स्कन्धातिरिक्तानुपलब्धेः। क्षणिकत्वं नित्यताया विरोधि नात्मसद्भावस्य[3]। ननु किमित्यत्र[4] नित्यतैवात्मनो न प्रतिपाद्यत इत्यत्राह—आत्मनश्च

१. स्थिरत्वेनैवं. ग. २. व्यतिरिक्तात्मा. ग.
३. नात्मभावस्य. ग. ४. किमन्यत्र. ग.

भाष्यम्

तस्माद्विनश्वराद्विज्ञानादन्य आत्मेत्यवगच्छामः । न च शक्यमवगन्तुम्—यथोपलभ्यन्ते अर्थाः, न तथा भवन्तीति, यथा च खलु नोपलभ्यन्ते तथा भवन्तीति । तथा हि सति

बृहती

समाधिः । न च—अन्य उपलब्धा ह्यः, अद्य चान्यः—इत्येतावता नैरात्म्यम् । तस्मात् 'अहंप्रत्ययग्राह्यः कार्यकरणव्यतिरिक्तोऽस्ति' इत्येतावद्वक्तव्यम्, 'ह्योऽद्य' चेत्यतिरिच्यते । अथेयं बुद्धिः—साधितेऽप्यस्तित्वे क्षणिकत्वादात्मतैव हीयत—इति, कथं मुक्तिः ? स्कन्धानां स्कन्धता किमिति न हीयते ? भोक्तृत्वं ह्यात्मनः स्वरूपम्,

पञ्चिका

सद्भावः परैराक्षिप्तोऽत्र प्रतिपाद्यते, न पुनरात्मनो विद्यमानस्य नित्यताक्षेपं प्रति समाधिः प्रतिपाद्यते । ननु यद्यन्यो ह्योऽन्योऽद्य चोपलब्धा स्यात्, तदा तयोः परस्परं परत्वादात्मत्वानुपपत्तेर्नैरात्म्यमेव स्यादित्यन्यत्वनिराकरणाय प्रत्यभिज्ञोपन्यासः ; तत्राह—न चान्य उपलब्धा ह्योऽद्य चान्य इत्येतावता नैरात्म्यम् । यद्यपि परापेक्षया नात्मता, तथापि सर्वस्योपलब्धुः स्वापेक्षयात्मतैव । तस्मात् 'अहं प्रत्ययग्राह्यः कार्यकरणव्यतिरिक्तोऽस्ति' इत्येतावद्वक्तव्यम् ; ह्योऽद्य चेत्यतिरिच्यते । अथेयं बुद्धिः—साधितेऽप्यस्तित्वे क्षणिकत्वादात्मतैव हीयत इति । भोक्तृता ह्यात्मता, सा भोक्तृतैव क्षणिकस्य हीयत इति कथं मुक्तिः ? क्षणिकत्वं नाम यदि चेयं मुक्तिः स्यात्, तदा स्कन्धानां क्षणिकानां स्कन्धतैव भोग्यत्वरूपा किमिति न हीयत इति । तदिदं विवृणोति—भोक्तृत्वं ह्यात्मनः स्वरूपं भोग्यता च

---

१. Omitted. अन्यात्मनः क्षणिकस्यातो—युक्तिः. (मुक्तिः) ग.

भाष्यम्

शशो नास्ति, शशस्य विषाणमस्तीत्येव तत्त्वमित्यवगम्येत ।

बृहती

भोग्यता च स्कन्धानाम्; यथा च क्षणिकत्वेऽपि भोग्यता नापनेतुं शक्यते स्कन्धानाम्, तथा भोक्तृत्वमप्यात्मनः । तदिदं क्षपाप्रयाणकम् । अनात्मज्ञो भवान्, यस्यैवंविधानि चोद्यानि । वेत्सि किमिति क्षणिकता स्कन्धानामुक्तेति ? किमिति वोक्ता ? भोक्तुरभावात् । भोक्तुरभावे क्षणिकता स्कन्धानाम्—इति किमियं राजाज्ञा ? नेयं राजाज्ञा; नयाज्ञा ह्येषा । कथम् ? भोक्तृसद्भावे कार्यकरणं क्षणिकम्—इति नास्ति नः

पञ्चिका

स्कन्धानाम्; यथा क्षणिकत्वेऽपि भोग्यतापनेतुं न शक्यते स्कन्धानाम्, तथा भोक्तृत्वमप्यात्मनः । एवमाक्षिप्योपसंहरति—तदिदं भाष्यं क्षपाप्रयाणकम्, व्यामोहजनकत्वात् । समाधानमुपक्रमते—अनात्मज्ञो भवान्, यस्यैवंविधानि चोद्यानि । यो हि जानात्यात्मस्वरूपम्—भोक्ता कर्ता चात्मा इति, स एवं न चोदयति; तस्मात्प्रत्यभिज्ञानेन सिद्धे स्थिरात्मनि कादाचित्क-कार्यान्यथानुपपत्त्या क्रियानुमीयते; सक्रियस्य च कर्तृत्वं भोक्तृत्वं च स्यान्न निष्क्रियस्य । तदिदं दर्शयितुमाह—वेत्सि भोश्चोदक त्वं किमिति क्षणिकता स्कन्धानामुक्तेति ? किमिति कथमित्यर्थः । किमिति वोक्तेति चोदकः पृच्छति । समाधानवाद्याह—भोक्तुरभावादिति । पुनः पृच्छति—भोक्तुरभावे क्षणिकत्वमिति किमियं राजाज्ञेति । समर्थयिताह—नेयं राजाज्ञा, नयाज्ञा ह्येषेति । कथमिति पुनरपि पृच्छति । उत्तरमाह[1]—भोक्तृसद्भावे ह्यङ्गीक्रियमाणे कार्यकरणं क्षणिकमिति नास्ति नः प्रमाणम् । यदि यावद्भोक्ताङ्गीक्रियते, तदा स्थिरं द्रव्यमङ्गीकरणीयम्; स्थिरद्रव्याङ्गीकारे च

---

१. Omitted आह. ग.

भाष्यम्

न च अहंप्रत्ययो व्यामोहः इति शक्यते वक्तुम्, बाधक-

बृहती

प्रमाणम्। कस्मात्? अनुमेयं हि कारणं कार्यतः; अतश्च क्रियासिद्धिः। क्रियापलापनिबन्धनोऽयं क्षणिकत्ववादः। लुप्तक्रियस्य च कर्तृत्व-भोक्तृत्वाक्षेपः। तदाक्षेपे चात्माक्षेपः। परिणतिस्वभावमात्रमिदं

पञ्चिका

क्षणिकत्वे प्रमाणं नास्ति। कस्मात्पुनरेवमिति पृच्छति—**कस्मादिति**। उत्तरम्—**अनुमेयं हि कारणं कार्यतः; अतश्च क्रियासिद्धिरिति**। अस्यार्थः—यो हि भोक्तारमभ्युपगच्छति, [1]अभ्युपगच्छत्यसौ भुक्तिरूपां क्रियाम्; तस्य कादाचित्ककार्योदयाच्च कारणानुमाने प्रसृते ततोऽनुमानात् क्रियासिद्धिर्भवति। क्रिया च क्षणिकस्य स्यादाफलनिष्पत्तेरित्यनुपपन्नम्। तस्माद्भोक्तारमभ्युपगच्छद्भिर्भुक्तिरूपां क्रियामङ्गीकुर्वाणैः स्थिरं द्रव्यमङ्गीकरणीयम्; स्थिरद्रव्याङ्गीकारे च क्षणिकत्वे नास्ति प्रमाणम्। कुतः? तत्राह—**क्रियापलापनिबन्धनोऽयं क्षणिकत्ववादः**। क्रियायां ह्यसत्यां कादाचित्कं कार्यमागन्तुकस्वभावं कारणमनुमापयत् द्रव्यमेव क्षणिकतां नयति; क्रियायां त्वङ्गीकृतायां तत एव कादाचित्ककार्यस्योपपन्नत्वात् क्षणिकता द्रव्याणामवगन्तुं न शक्यते। अथ क्रियाङ्गीकार एव न क्रियते, तदा कर्तृत्वं भोक्तृत्वं च न सिध्यति; तदाह—**लुप्तक्रियस्य च कर्तृत्वभोक्तृत्वाक्षेपः, तदाक्षेपे चात्माक्षेपः। परिणतिस्वभावमात्रमिदं कार्यकरणमिति**, कल्पनेयं कर्ता भोक्तेति च। अतो भोक्तारमिच्छतावश्याङ्गीकरणीया क्रिया; सा च स्थिरद्रव्याङ्गीकारनिबन्धना; स्थेमा च द्रव्यस्य प्रत्यभिज्ञानाधीन इति मन्वानो भाष्यकारः सप्रत्यभिज्ञं प्रत्यक्षमुपदर्शितवानिति। तदिदमुपसंहरन्नाह—

---

१. Added तदा. ग

भाष्यम्

प्रत्ययाभावात् । तस्मात् सुखादिभ्यो व्यतिरिक्तोऽस्तीति ।

बृहती

कार्यकारणमिति, कल्पनेयं कर्ता भोक्ता इति च । तस्मादहंप्रत्ययालम्बनमात्रसिद्धौ सिद्धेऽपि बुद्धीन्द्रियशरीरव्यतिरेकिणि कर्तृत्वभोक्तृत्वे न स्तः ; तदात्मकता चात्मन आत्मता । तस्मात् अविनाशितापुरस्सरैव भोक्तृता—इति मन्वानः सप्रत्यभिज्ञं प्रत्यक्षमुपन्यस्तवान् भाष्यकारः । अत एव च नैरात्म्यवादिनो मुहुर्मुहुः क्षणिकतामकिञ्चित्करतां चापादयन्त्यात्मनः—"चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः" इति । तस्माद्भोक्तृतैवात्मेति । युक्तम्—भोक्तृतैवात्मा इति ; कर्तृत्वोपन्यासस्तु विरुध्यते, निष्क्रियत्वादात्मनः ; सर्वगतत्वाच्च निष्क्रियत्वम् ; प्रतिपन्नं च सर्वगतत्वम्, सर्वत्र सुखोपलम्भात् । न ह्यसत्यागमने किंचिद्विरुध्यते ।

पञ्चिका

तस्मादहंप्रत्ययालम्बनमात्रसिद्धौ सिद्धेऽपि बुद्धीन्द्रियशरीरव्यतिरेकिणि कर्तृत्वभोक्तृत्वे न स्तः ; तदात्मकता चात्मन आत्मता । तस्मादविनाशितापुरःसरैव कर्तृत्वभोक्तृत्वे इति मन्वानो भाष्यकारः सप्रत्यभिज्ञं प्रत्यक्षमुपन्यस्तवान् । यत एव क्षणिकस्य क्रियानुपपत्त्या भोक्तृताया अभावेनात्मतैव हीयते, अत एव च नैरात्म्यवादिनो मुहुर्मुहुः क्षणिकतामकिञ्चित्करतां चापादयन्त्यात्मनः—"चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः" इति । अन्यथा क्षणिकत्वाकिञ्चित्करत्वप्रतिपादनमनुपयोगि स्यात् । तस्मात्सर्वेषां संम्मत्या[1] भोक्तृतैवात्मेत्यात्मज्ञा व्यवस्थिताः ; भोक्तृतायां सत्यामात्मव्यपदेशादुपचारेण भोक्तृतैवात्मेत्युक्तम् । युक्तम्—भोक्तृतैवात्मेति ; कर्तृत्वोपन्यासस्तु विरुध्यते, निष्क्रियत्वादात्मनः ; सर्वगतत्वाच्च निष्क्रियत्वम् ; प्रतिपन्नं च सर्वगतत्वम्, सर्वत्र सुखोपलम्भात् । न चैवं वाच्यम्—आगतस्यैव धर्मोपलम्भः इति; न ह्यसत्यागमने किञ्चिद्विरुध्यत

---

१. सम्भूत्या. क, सत्या. ग.

भाष्यम्

एवं चेत्, स एव 'यज्ञायुधी' इति व्यपदिश्यते ।

बृहती

चलनात्मिकां क्रियामङ्गीकृत्य निष्क्रियतोक्ता, न पुनर्भोगोत्पत्तावपि । तस्मात् सुष्ठूच्यते—कर्तृभोक्तृतैवात्मा इति । तस्मादुपपन्नोऽयं ग्रन्थः "अहमिदमदर्शम्" इति । विषयप्रत्यभिज्ञा चैतन्निबन्धना—इति शब्दाधिकरणे उपन्यस्यते । "प्रत्यगात्मनि

पञ्चिका

इति । सत्ता तावदात्मनः सर्वत्र सुखोपलम्भेन सिद्धा; सेदानीं गमनपूर्विकेति नास्ति प्रमाणम्; विनापि गमनेन[१] न कस्याचिदनुपपत्तिः । शरीरागमने तु या सुखाद्युपलब्धिः सा प्रादेशिकत्वेन सुखादीनामुपपन्ना । प्रादेशिकत्वं च सुखादीनामात्मनः सन्निकर्षजत्वान्मनसश्च प्रादेशिकत्वात् । आत्मैव यत् शरीरशून्ये देशे नोपलभ्यते, तत्रापि प्रादेशिकतैव ज्ञानस्य हेतुः—यत्रैव ज्ञानं तत्रैवोपलभ्यत इति । परिहरति—चलनात्मिकां क्रियामङ्गीकृत्य निष्क्रियतोक्ता, न पुनर्भोगोत्पत्तावपि । भोगोऽनुभवः संवेदनम्, तदुत्पत्तावपि निष्क्रियता नास्ति । संवेदनमपि क्रिया, धातुवाच्यत्वात् । धातुवाच्या क्रियेति लौकिकाः । अन्यथा धातुसंज्ञैव न स्यादिति । यस्मादात्मनः कर्तृत्वं भोक्तृत्वं च युक्त्या संगच्छते, तस्मात्सुष्ठु शोभनमुच्यते—कर्तृत्वभोक्तृत्वे एवात्मेति । कर्तृत्वभोक्तृत्वनिबन्धना आत्मशब्दवाच्यतेति । कार्यकारणयोरभेदोपचारादिदमुच्यते कर्तृत्वभोक्तृत्वे एवात्मेति । यस्मात्कर्तृत्वभोक्तृत्वस्वरूप आत्मा सिद्धः तस्मादात्मस्वरूपसिद्धये प्रत्यभिज्ञोपन्यासपर उपपन्नोऽयं ग्रन्थः—"अहमिदमदर्शम्" इति । अपरमप्यात्मविषयप्रत्यभिज्ञोपन्यासप्रयोजनमाह—विषयप्रत्यभिज्ञा चैतन्निबन्धनेति शब्दाधिकरणे उपन्यस्यते । स एवायं

---

१. गमने. ग.

## बृहती

चैतद्भवति''—इति कस्यार्थस्य सिद्धये ? भोक्तृत्वस्यैव । कथम् ? प्रत्यगात्मनि भोगदर्शनात् । यदि परोऽप्यहंप्रत्ययस्य विषयतामापद्येत, तदा भोक्तृत्वहानं प्राप्नोति ; भोक्तृता चात्मेत्युक्तम् । "न परत्र, परो ह्यसौ, योऽन्येद्युर्दृष्टवान्'' इति प्रत्यभिज्ञानुपपत्तिः । "यत्रायमहंशब्दः'' इति अहंशब्दोपन्यासस्तर्हि किमर्थः ? परापह्नवाय ? नापह्नवाय; परप्रतिपत्तये । किमिति तर्ह्यपह्नवः ? साक्षाद्धेतुत्वशङ्कानिराकरणाय । साक्षाद्धेतुत्वं मन्वानेन 'अनात्मन्यप्यहंशब्दोऽस्ति' इति प्रदर्शितम्—

## पञ्चिका

गकार इति येयं प्रत्यभिज्ञा सा पूर्वापरानुभवावस्थानुवर्तिस्थिरानुभवितृप्रत्यभिज्ञानिमित्तेति शब्दाधिकरणसमीपे प्रत्यभिज्ञेयमुपन्यस्यते, स्थिरेऽनुभवितरि सिद्धे विषयप्रत्यभिज्ञा यथा स्यादिति ।

ननु च 'अहमिदमदर्शम्' इत्येतावतैव देहादिव्यतिरिक्तात्मसत्ता सिद्धा ; किमिदमुच्यते---प्रत्यगात्मनि चैतत् 'अहम्' इति ज्ञानं भवतीति । तदाह—प्रत्यगात्मनि चैतद्भवतीति कस्यार्थस्य सिद्धय इति । उत्तरम्—भोक्तृत्वस्यैव । कथम् ? प्रत्यगात्मनि भोगदर्शनात् । 'अहमिदमनुभवामि' इति प्रत्यगात्मनि भोगो दृश्यते ; प्रत्यगात्मविषयश्चाहंप्रत्ययः । तस्माद्भोक्तृविषयत्वात् भोक्तारं साधयति । यदि परोऽप्यहंप्रत्ययविषयतामापद्येत, तदा भोक्तृत्वहानं प्राप्नोति । न हि तदानीमहंप्रत्ययाद्भोक्तृत्वसिद्धिः । भोक्तृता चात्मेत्युक्तम् । तस्माद्युक्तमात्मसिद्ध्यर्थं "प्रत्यगात्मनि चैतद्भवति'' इति भाष्यम् । अत्रापरं भाष्यं "न परत्र'' इति । तस्यार्थः—न परत्र 'अहमिदमदर्शम्' इति प्रत्यभिज्ञा भवतीति । "परो ह्यसौ, योऽन्येद्युर्दृष्टवान्'' इति परत्वे प्रत्यभिज्ञानुपपत्तिरित्याह । "यत्रायमहंशब्द इत्यहंशब्दोपन्यासः तर्हि किमर्थः ? यत्रायमहंप्रत्यय इत्येवं प्रथममेव वक्तव्यमिति यावत् ; यदि परमपह्नवायैव "न वयमहमितीमं शब्दं प्रयुज्यमानमस्मिन्नर्थे हेतुत्वेन व्यपदिशामः'' इत्येवमपह्नवमेव कर्तुमहंशब्द उपन्यस्तः । उत्तरम्—नापह्नवाय, किन्तु परप्रत्ययायैव । परो हि शब्दप्रयोगेण व्यवहारेण

बृहती

"परत्राप्यहंशब्दो भक्त्या दृश्यते" इत्येवमादिना । "न वयम्" इति न साक्षाद्धेतुतयेदमुपन्यस्तम् इति प्रकटितम् । हेत्वर्थप्रदर्शनार्थस्तु शब्दप्रयोगः । ननु च "अहं गच्छामि" इति न हेत्वर्थ-प्रदर्शनमात्रतया शक्यते परिहर्तुम् ; अत्र हि अहंप्रत्ययोऽपि व्यभिचार्येवोपलभ्यते, अचलात्मकत्वादात्मनः । तस्मात् स्कन्धा एवालम्बनतामापद्यन्ते इत्याशङ्कनीयमिदम् ; किमिति निराशङ्कैरेव गम्यते ? किमत्राशङ्कनीयम् ? इदंप्रत्ययग्राह्यं हि कार्यकरणम् ; प्रत्ययान्तरग्राह्ये च वस्तुनि विरुद्धप्रत्ययान्तरालम्बनता नोपपद्यते 'गौर्वाहीकः' इति यथा । गौण उपपद्यते इति चेत्.

पञ्चिका

प्रतिपद्यते । किमिति तर्ह्यपह्नवः ? साक्षाद्धेतुत्वाशङ्कानिराकरणाय । तदेवाह—परेण हि साक्षाद्धेतुत्वं मन्वानेनानात्मन्यप्यहंशब्दोऽस्तीति प्रदर्शितम् "परत्राप्यहंशब्दो भक्त्या दृश्यते" इत्येवमादिना ग्रन्थेन । "न वयम्" इति न साक्षाद्धेतुततयेदमुपन्यस्तमिति हृदि स्थितं वस्तु प्रकटीकृतम् । यस्तु प्रत्ययो हेत्वर्थः हेतुरूपोऽर्थः, तस्य प्रदर्शनार्थः शब्दप्रयोगः ; प्रत्यय एव तु साक्षाद्धेतुः । ननु च "अहं गच्छामि" इति न हेत्वर्थप्रदर्शनमात्रतया शक्यते परिहर्तुम् ; अत्र हि अहंप्रत्ययोऽपि व्यभिचार्येवोपलभ्यते, अचलात्मकत्वादात्मनः । एतस्य च प्रत्ययस्य गन्तृविषयत्वान्नात्मालम्बनता शक्यते वक्तुम् । तस्मात्—स्कन्धा एवालम्बनतामापद्यन्ते इत्याशङ्कनीय-मिदम् ; किमिति निराशङ्कैरेव गम्यते ? उत्तरम्—किमत्राशङ्कनीयम् ? नास्त्येवात्राशङ्केति नाशङ्कितं भाष्ये । कस्मादित्याह—इदंप्रत्ययग्राह्यं हि कार्यकरणम् । ज्ञेयं ज्ञानं चेत्यर्थः । ज्ञेयज्ञानरूपाः स्कन्धाः, तस्मात्तेऽहं-प्रत्ययविरुद्धेदंप्रत्ययग्राह्याः । प्रत्ययान्तरग्राह्ये च वस्तुनि विरुद्धप्रत्ययालम्ब-नता नोपपद्यते 'गौर्वाहीकः' इति यथा । न कदाचिदपि वाहीको गोप्रत्ययविषयतामापद्यते । ननु सर्वथैवानुपपत्तिरिति नैवास्ति ; किन्तु मुख्य-

---

१. उपेक्षितम्. ग.

बृहती

परिहृतमेतत्त्वयैव । तस्मादसंभिन्नेदंप्रत्यय एव अहंप्रत्यय आत्मन आलम्बनम् । ब्राह्मणमप्यमुमेवार्थमनुवदति—"अशीर्यो न हि शीर्यते" इत्यशीर्यतया भोक्तृत्वमात्मनः । "विनश्वरं च विज्ञानम्" इति तद्व्यतिरिक्तालम्बनतामापादयति । तस्मात् व्यामोहोऽयमहंकारग्रन्थिरिति न शक्यते वक्तुम्, "यस्य च दुष्टं करणम्, यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययः ; नान्यः"—इति सिद्धत्वादस्यार्थस्य । यदि परं ब्रह्मविदामेष निश्चयः—यदुपलभ्यते, तदसत् ; यन्नोपलभ्यते, तत्तत्त्वम्—इति, नमस्तेभ्यः ; विदुषि नोत्तरं वाच्यम्—इत्यत्र परिहारः । तस्माद्यथार्थोऽयमर्थवादः—"स एष यज्ञायुधी यजमानः" इति ।

पञ्चिका

प्रत्ययालम्बनता नास्ति । गौण उपपद्यते प्रत्यय इति चेत्, परिहृतमेतत्त्वयैव । गौणे हि शब्दप्रयोगमात्रं भवति, न पुनः प्रत्यय एव भवति ; न हि वाहीको गवाकारप्रत्ययग्राह्यतामश्नुते । उपसंहरति—तस्मादसंभिन्नेदंप्रत्यय एवाहंप्रत्यय आत्मन आलम्बनम् । असंभिन्नोऽमिश्रीकृत इदंप्रत्ययो येनाहंप्रत्ययेन स एवात्मन आलम्बनं व्यवस्थितौ कारणमित्यर्थः । इदंप्रत्ययविषयेषु स्कन्धेष्ववगतत्वादेकान्ततोऽयमात्मव्यवस्थितावहेतुरिति यावत् । ब्राह्मणमप्यमुमेवार्थमनुवदति—अशीर्यतया भोक्तृतामात्मनः, या भोक्तृता आत्मन आत्मता अमुमेवार्थं भोक्तृतामात्मनो ब्राह्मणमप्यनुवदति "अशीर्यो न हि शीर्यते" इति स्थिरताप्रदर्शनेन । "विनश्वरं च विज्ञानम्" इति तद्व्यतिरिक्तालम्बनतामापादयति । स्थिरविषयो ह्यहंप्रत्ययः, क्षणिकं च विज्ञानम् । अतो विज्ञानव्यतिरिक्तालम्बनोऽहंप्रत्यय इत्यापादयति । तस्माद्व्यामोहोऽयमहंकारग्रन्थिरिति न शक्यते वक्तुम्, "यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्यः" इति सिद्धत्वादस्यार्थस्य । यदि परं ब्रह्मविदामेष निश्चयः—यदुपलभ्यते भोक्तृत्वं तदसत्, यन्नोपलभ्यते कैवल्यं तत्तत्त्वमिति ; नमस्तेभ्यो विदुषि नोत्तरं वाच्यमित्यत्र परिहारः । तस्मान्नायथार्थोऽयमर्थवादः "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति" इति ।

भाष्यम्

आह—यदि विज्ञानादन्यदस्ति विज्ञातृ विज्ञानमपास्य, तन्निदर्श्यताम्—'इदं तत्, ईदृशं च'—इति। न

बृहती

"आह—यदि विज्ञानादन्यदस्ति विज्ञातृ विज्ञानमपास्य, तन्निदर्श्यताम् 'इदं तदीदृश च' इति" इति किमिदं चोद्यते ? इदमेव चोद्यते। तदेव न ज्ञायते। कथं न ज्ञायते ? इत्थं न ज्ञायते—किं वा सविज्ञानस्यात्मनोऽहंप्रत्ययः प्रमाणतयोपन्यस्तः, येनेदमुच्यते—विज्ञानमपास्य तन्निदर्शयितव्यम् इति ? अनेकवस्त्वालम्बनं हि यत्र ज्ञानम्, तत्रेदं युज्यते वक्तुम्—इदमपास्येदं निदर्शय इति ; इह त्वेकात्मरूपैव संवित्। तस्मात् इदं व्युदसनीयम् इति तमसि पदम्। अत्रोच्यते—अयमस्याभिप्रायः ; ज्ञेयत्वे ह्यात्मनो ज्ञानज्ञातृणी व्यतिरिक्ते न शक्येते वक्तुम् ; न चापास्यैव ते संविदस्तीति सिद्धम्।

पञ्चिका

"आह—यदि विज्ञानादन्यदस्ति विज्ञातृ विज्ञानमपास्य, तन्निदर्श्यताम् 'इदं तदीदृशं च' इति" इति किमिदं चोद्यते ? इदमेव चोद्यते। तदेव न ज्ञायते। कथं न ज्ञायते ? इत्थं न ज्ञायते—किं वा सविज्ञानस्यात्मनोऽहंप्रत्ययः प्रमाणतयोपन्यस्तः, येनेदमुच्यते—विज्ञानमपास्य तन्निदर्शयितव्यमिति। अनेकवस्त्वालम्बनं हि यत्र ज्ञानं तत्रेदं युज्यते वक्तुम्—इदमपास्येदं निदर्शयेति ; इह त्वेकात्मरूपैवाहमिति संवित्। अत आत्मैवात्र केवलोऽवभाति न पुनर्विज्ञानमपि। तेन ज्ञानमपास्यैव प्रतीयते। अतश्चोद्यमिदं न घटते—विज्ञानमपास्यैतन्निदर्शयितव्यमिति। तस्मादिदं व्युदसनीयमिति तमसि पदम्। असमीक्ष्य प्रवृत्तमित्यर्थः। अत्रोच्यते—अयमस्याभिप्रायः ; ज्ञेयत्वे ह्यात्मनो ज्ञानज्ञातृणी व्यतिरिक्ते न शक्येते वक्तुम् ; न चापास्यैव ते संविदस्तीति सिद्धम्। अस्यार्थः—

भाष्यम्

च तन्निदर्श्यते । तस्मान्न ततोऽन्यदस्ति इति । अत्रोच्यते —स्वसंवेद्यः स भवति; नासावन्येन शक्यते द्रष्टुम्;

बृहती

तस्मात् ज्ञानज्ञातृणी व्युदस्य पृथक् प्रमेयतया निदर्श्यताम् । "अत्रोच्यते—स्वसंवेद्यः स भवति ; नासावन्येन शक्यते द्रष्टुम्" इति । किमिदमस्योत्तरमुपपद्यते ? किमिति नोपपद्यते ? एवं नोपपद्यते —सैवेयं पूर्वोक्तैकालम्बनानेकाकारता प्रत्ययस्याभ्युपगता भवति । अविवेकापराधोऽयम्, नात्रायुष्मतो दोषः । ननु च अहंप्रत्ययोऽयम्

पञ्चिका

यो ह्यहंप्रत्ययप्रमेय आत्मेति वदति तेनात्मनो ज्ञेयभूतस्यान्यत् ज्ञानं करणरूपम्, ज्ञाता चान्यो वक्तव्यः कर्तृरूपः । न च शक्यते तदुभयं वक्तुम् । न च करणकर्तृशून्यं कर्म भवति । तस्मात्त्वया व्यतिरिक्तकर्तृ-करणाभ्युपगमविमुखेन ज्ञेयतां चात्मन इच्छतैवमङ्गीकरणीयं विज्ञानं करणमप्यपास्यात्मा[१] दृश्यत इति । एवं चेदस्माकमपि तर्हि विज्ञानमपास्यैव निदर्शयितव्यमिदं तदीदृशं चेति । तदाह—तस्मात् ज्ञानज्ञातृणी व्युदस्य पृथक्प्रमेयतया दर्शयितव्यमिति चोद्यार्थः । "अत्रोच्यते—स्वसंवेद्यः स भवति ; नासावन्येन शक्यते द्रष्टुम्" इति । किमिदमस्योत्तरमुपपद्यते ? किमिति नोपपद्यते ? एवं नोपपद्यते—सैवेयं पूर्वोक्तैकालम्बनानेकाकारता प्रत्ययस्याभ्युपगता भवति । अस्यार्थः—"स्वसंवेद्यः स भवति" इति वदता एक एवात्माहंप्रत्ययेन कर्तृकर्मरूपतया आलम्ब्यत इत्यभ्युपगतं भवति । यदुक्तं वृत्तिकारग्रन्थे पूर्वपक्षदशायामेकालम्बनमनेकाकारं संवेदनं विकल्पमात्रमुदीयत इति । अविवेकापराधोऽयम्, नात्रायुष्मतो दोषः । एकग्रन्थेनाह—ननु चाहंप्रत्ययोऽयम् "अहमिदमदर्शम्" इत्युपन्यस्तः, न

---

१. -मपास्याप्यात्मा. ग.

भाष्यम्

कथमसौ निदर्श्येत इति । यथा च कश्चित् चक्षुष्मान् स्वयं रूपं पश्यति; न च शक्नोत्यन्यस्मै जात्यन्धाय तन्निदर्शयितुम् ; न च तन्न शक्यते निदर्शयितु-

बृहती

"अहमिदमदर्शम्" इत्युपन्यस्तः, न 'अहमदर्शम्' इति । एवं च सति केयमनेकाकारता ? "अविवेकः परमापदां पदम्" । यदि ह्यात्म-शब्दवाच्यतया ज्ञेयतोपन्यस्ता स्यात्, प्रमेयान्तरशून्यता वा, तदैतच्चोद्य-

पञ्चिका

'अहमदर्शम्' इति । एवं च सति केयमनेकाकारता ? तस्मात् "अविवेकः परमापदां पदम्" इति । इदमत्राकूतम् । अर्थान्तरमनुभवन्नात्मा भासते, न पुनः केवलः । एवं तत्रार्थान्तरविषयं यत् ज्ञानं तत्रात्मा कर्तैव, अर्थान्तरमेव तु कर्म । तदेव तु ज्ञानं अर्थान्तरविषयं संवेदनं जनयदात्मानमपि प्रकाशयति । सेयं विषयविषयिणोरेका प्रकाशावस्था । न हि ज्ञातृशून्यं कदाचिदपि ज्ञेयमवभाति । न हि तदैवं स्यात् 'मयेदं विदितम्' इति ; 'इदं विदितम्' इत्येवं स्यात् । तदा च स्वपरवेद्ययो-रनतिशयः स्यात् । तैथा ज्ञाता विज्ञेयाप्रतिपत्तौ सुषुप्तिमदमूर्च्छादिषु न प्रकाशते । तेन नियतसहोपलम्भौ विषयविषयिणौ । तत्र सत्यपि ज्ञानजन्यप्रकाशलक्षणक्रियाफलयोगित्वे[3] आत्मा न कर्मतया अनुभूतः संयोग-फलयोगिगन्तेव ; यथा च तत्र परस्थक्रियाजन्यफलभागितया देश एव कर्म, तथेहाप्यर्थान्तरं कर्मेति । तदिदमाविष्करोति—यदि ह्यात्म-शब्दवाच्यतया ज्ञेयतोप्युपन्यस्ता स्यात् । यदि हि कर्तृशब्दवाच्यः कर्मभूत इत्युक्तं स्यात् । वस्तुवृत्तेन प्रमेयान्तरशून्यता वा, तदैतच्चोद्यमभाविष्यत् । प्रमेयान्तरशून्यत्वे हि कर्मान्तराभावादात्मैव कर्म

१. अहमहमदर्शम्. ग. ३. Added. अपि. ग.
२. यदा ज्ञातापि ज्ञेया. ग. ४. Omitted. अपि. क.

भाष्यम्

मित्येतावता 'नास्ति' इत्यवगम्यते ; एवमसौ पुरुषः स्वयमात्मानमुपलभते ; न चान्यस्मै शक्नोति दर्शयितुम्, अन्यस्य द्रष्टुस्तं पुरुषं प्रति दर्शनशक्त्यभावात्।

बृहती

मभविष्यत् ; इह तु सर्वज्ञेयप्रमातृतयैव संविदुपन्यस्ता ; तस्मात् प्रतिपक्षोपन्यास एवायं कथं तेनैव बाध्यते ? न हि यद्यस्य बाध्यम्, तत्तस्यैव बाधकं भवितुमर्हति । तस्मात् सम्यगुत्तरम् । "यथा कश्चिच्चक्षुष्मान्" इत्यनेनापि निदर्शनेन कर्तृकरणान्तरनिषेध एव स्थिरीकृतः । ननु चात्र कर्त्रन्तरं करणान्तरं भिन्नं मेयात् ; तत् किमिदं निदर्शनम् ? कर्त्रन्तराभावसामान्यात् । तस्मात् कारणदोषरहिता अविपरीता

पञ्चिका

स्यात् । इह तु सर्वज्ञेयप्रमातृतयैव संविदुपन्यस्ता । सर्वं ज्ञेयं प्रमिण्वन्नात्मा कर्तृतयैव प्रकाशत इति नास्ति[1] कर्मकर्तृभावः, किं तु कर्तृतैव केवला[2] । तस्मादेकालम्बनानेकाकारसंवेदनपक्षप्रतिपक्षोपन्यास एवायम् ; कथं तेनैव तद्बाध्यते ? न हि यद्यस्य बाध्यं तत्तस्य बाधकं भवितुमर्हति । तस्मात्सम्यगुत्तरम् । स्वसंवेद्यः स भवतीति । अनेकाकारैकालम्बनता ह्यात्मनः कर्मकर्तृत्वाभ्युपगमे भवति । यदा तु विषयाननुभवन्नात्मा प्रतिभात्येव केवलं न तदा स्वात्मनि क्रियावृत्तिविरोध इति । यथा कश्चिच्चक्षुष्मानित्यनेनापि-निदर्शनेन कर्तृकरणान्तरनिषेध एव स्थिरीकृतः । ननु चात्र कर्त्रन्तरं पुरुषः, करणान्तरं चक्षुः, [3]उभयं भिन्नमेव प्रमेयाद्रूपात् । अतः कथमिदं निदर्शनम् ? उत्तरमाह—कर्त्रन्तराभावसामान्यात् । निदर्शनम् । यथा चक्षुष्मति पुरुषे स्वयं रूपमुपलभमाने न कर्त्रन्तरमस्ति,[4] एतावता सामान्येन दृष्टान्तः । उपसंहरति—तस्मात्कारणदोषरहिता अविपरीता

---

१. नास्ति तत्. ग.
२. केवलः. ग.
३. Omitted. उभयम्. ग.
४. -मस्तीत्येतावता. ग.

भाष्यम्

सोऽप्यन्यः पुरुषः स्वयमात्मानमुपलभते, न च परात्मानम् । तेन सर्वे स्वेन स्वेनात्मना आत्मानमुपलभमानाः सन्त्येव ; यद्यपि परपुरुषं नोपलभन्ते इति । अथास्मिन्नर्थे ब्राह्मणं भवति "शान्तायां वाचि किम् ? ज्योतिरे-

बृहती

च संवित् आत्मास्तित्वे हेतुः । भवतु वा कर्त्रन्तरं मा वा । उक्तं च—यथा अवगम्यन्तेऽर्थाः, तथा भवन्ति ; यथा नावगम्यन्तेऽर्थाः, तथा न भवन्ति इति । अत्रापि ब्राह्मणं भवति "शान्तायां वाचि" । आत्मनि व्यापृतेऽन्यत्र कर्तृतया कथं कर्तृकरणान्तराभावो गृह्यते—इति प्रश्नः । वाग्ग्रहणं च करणान्तराभावनिदर्शनार्थम् । "आत्मज्योतिः सम्राडिति होवाच" इत्ययमर्थः पूर्वोत्तरपक्षभङ्ग्या प्रदर्शितः । एवं च "अगृह्यो न हि गृह्यते" इति

पञ्चिका

च संविदात्मास्तित्वे[1] हेतुः । भवतु वा कर्त्रन्तरं मा वा । अस्ति चात्मन्यपि संवित् ; अतोऽस्त्यात्मा , यद्यपि कर्त्रन्तरं नास्तीति भावः । उक्तं च—यथावगम्यन्तेऽर्थास्तथा भवन्ति, यथा नावगम्यन्तेऽर्थाः तथा न भवन्तीति । अत्रापि कर्त्रन्तरकरणान्तराभावे ब्राह्मणं भवति "शान्तायां वाचि" इति । इममेव स्वाभिमतप्रामाणिकार्थानुगुणतया व्याचष्टे—आत्मनि व्यापृतेऽप्यन्यत्र बाह्ये रूपादौ कर्तृतया कर्त्रन्तरकरणान्तराभावः कथं गृह्यत इति प्रश्नः । वाग्ग्रहणं च ब्राह्मणे शान्तशब्दान्वितं करणान्तराभावनिदर्शनार्थम्, वाक्शान्त्या करणान्तराभावोऽभिहित इति यावत् । "आत्मज्योतिः सम्राडिति होवाच" इत्ययमेवार्थः स्वसंवेद्यरूपः पूर्वोत्तरपक्षभङ्ग्या प्रद्योतितो ब्राह्मणवाक्येनेत्यर्थः । यदात्मा परेण न गृह्यते एवं च कृत्वा "अगृह्यो न हि गृह्यते" इत्येतदपि ब्राह्मणमुपपन्नम् । ननु चात्राग्राह्यतैव

---

१. Added. च. ग.

भाष्यम्

वायं पुरुष आत्मज्योतिः सम्राडिति होवाच" इति । 'परेण नोपलभ्यते' इत्यत्रापि ब्राह्मणम् "अगृह्यो न हि गृह्यते" इति । 'परेण न गृह्यते' इत्येतदभिप्रायमेतत् ।

बृहती

ब्राह्मणमुपपन्नम् । ननु चात्राग्राह्यतैवोपन्यस्ता । ननु न श्रुतं भवता "आत्मज्योतिः सम्राट्" इति ? इदमपि किं न श्रुतम् ? द्वयोः श्रुत्योस्तदनुरोधेनास्याग्रहणश्रुतिरापेक्षिकी, न पुनरात्मग्रहणमन्यथा व्याख्यायते—इति का युक्तिः ? स्वयंज्योतिर्ग्रहणे गुणवादस्यासम्भवात् अग्राह्यत्वे चापेक्षिकतयोपपत्तेः, 'आत्मा ज्ञातव्यो मन्तव्यः' इति चाविरोधात् । एवं च स्वयंज्योतिष्ट्वमुपपद्यत इति ।

ननु चैवं सति कथं परस्मै प्रतिपादयितुं शक्यते ? परप्रत्य-

पञ्चिका

सर्वथोपन्यस्ता, न पुनः परपुरुषमात्राग्राह्यता । उत्तरमाह—ननु न श्रुतं भवता "आत्मज्योतिः सम्राट्" इति । अत्र हि ब्राह्मणे स्वयंज्योतिष्ट्वमुक्तम् ; तदनुरोधेनापेक्षितं पराग्राह्यत्वमेवोपन्यस्तमिति भावः । अत्र चोदयति—इदमपि किं न श्रुतम् ? अग्राह्यत्वं नाम । द्वयोः श्रुत्योर्मध्ये तदनुरोधेन स्वयंज्योतिष्ट्वानुरोधेनास्यात्मनोऽग्रहणश्रुतिरापेक्षिकी परपुरुषाभिप्रायेण व्याख्यायत इति, न पुनरात्मग्रहणमन्यथा व्याख्यायत इति का युक्तिः ? समाधत्ते—स्वयंज्योतिर्ग्रहणे गुणवादस्यासम्भवात् । न गौण्या वृत्त्या स्वयंज्योतिष्ट्वं व्याख्यातुं शक्यते । अग्राह्यत्वे चापेक्षिकतयोपपत्तेः । अग्राह्यता हि परपुरुषाभिप्रायेणापि वर्णयितुं शक्या । 'आत्मा ज्ञातव्यो मन्तव्यः' इति चाविरोधात् । यदि ह्यग्राह्यता आपेक्षिकी न स्यात्, तदा ज्ञातव्य इत्येतद्विरुध्यते । एवं चापेक्षिकेऽग्राह्यत्वे सति स्वयंज्योतिष्ट्वमपि प्रदेशान्तरोक्तमुपपद्यते ।

यद्यात्मा स्वसंवेद्य एव, ननु चैवं सति कथं परस्मै प्रतिपादयितुं शक्यते ? परप्रत्ययार्थश्चायमारम्भः शास्त्रकाराणां श्रुतीनां च । न हि

भाष्यम्

कुतः ? स्वयंज्योतिष्ट्ववचनात् । अथापि ब्राह्मणं भवति —"अत्रायं पुरुषः स्वयंज्योतिर्भवति" इति । केन पुनरुपायेनायमन्यस्मै कथ्यत इति । तत्राप्युपाये

बृहती

यार्थश्चायमारम्भः शास्त्रकाराणां श्रुतीनां च । स्वसंविदेवात्राभ्युपायतां प्रतिपद्यते—आत्मना संवेद्येते न परेणेति । सर्वपुरुषेषु च परासंवेद्यसंविदस्तीति सिद्धा परसंवित्प्रतिषेधमुखेनोपदेशानामुपदेशता । तदिदम् "नेति नेति" इत्युपन्यस्तम् । ननु सुखादयोऽपि स्वसंवेद्या एव ; तेऽपि परेण नैव परस्थाः संवेद्यन्ते । कथं तेभ्योऽन्यतया परस्मा उपदिष्ट आत्मा भवति ? तत्र भाष्यकारेण 'लिङ्गावगम्यतया परेणा-

पञ्जिका

केनचिदात्मार्थं शास्त्रं प्रणीयते, तथा श्रुतीनां च प्रवृत्तिः परप्रतिपत्त्यर्था । उत्तरम्—स्वसंविदेवात्राभ्युपायतां प्रतिपद्यते । कस्मात्पुनः स्वसंविदेवोपायो नान्य इत्यत्राह—आत्मना संवेद्यते न परेणेति हेतोः स्वसंविदेवोपायो नान्य इति । सर्वपुरुषेषु च परासंवेद्यस्यात्मनः संविदस्तीति सिद्धा परसंवित्प्रतिषेधमुखेनोपदेशानामुपदेशता, न पुनरिदं तदीदृशमिति शक्यते वक्तुमित्यनेनाभिप्रायेण "नेति नेति" इत्युपन्यस्तम् । अत्र भाष्यकारेण "यत्तु परः पश्यति तत्प्रतिषेधोऽस्योपायः" इत्युक्त्वा "परस्थाः सुखादयः परैर्लिङ्गैरवगम्यन्ते ; तेऽपि नात्मानः" इत्युक्तम्, तदाक्षिपति—ननु च सुखादयोऽपि स्वसमवायिनः स्वसंवेद्या एव ; तेऽपि परेण परस्था नैव संवेद्यन्ते । कथं तेभ्योऽप्यन्यतयात्मा परस्मा उपदिष्टो भवति ? तत्र भाष्यकारेण लिङ्गावगम्यतया परेणावगम्यन्त एवेत्युक्तम् । तदयुक्तम्, आत्मनोऽपि प्रसङ्गात् । आत्मनोऽप्यनात्मता प्रसज्यते ; यतः तत्रापि चेष्टानुमानं स्वयमुपन्यस्यति ; यतः

भाष्यम्

ब्राह्मणं भवति "स एष नेति नेत्यात्मेति होवाच" इति। 'असौ एवंरूपः' इति न शक्यते निदर्शयितुम्। यत्तु परः पश्यति, तत्प्रतिषेधस्तस्य उपदेशोपायः। शरीरं

बृहती

वगम्यन्त एव' इत्युक्तम्; तदयुक्तम्, आत्मनोऽपि प्रसङ्गात्। तत्र चेष्टानुमानं स्वयमुपन्यस्यति। अतः प्रतिपन्नार्थोपघाति कथं विद्वद्भिर्लिख्यते? तदिदमनुपासितगुरोश्चोद्यम्; चेष्टा हि कारणदोष-निराकरणतया उपन्यस्ता; सुखादयस्तु भ्रूभङ्गनेत्रविलासादिगम्याः। कः पुनरनयोर्विशेषः? अनेनापि परस्यैव संविद्गम्यते। अकार्यत इति

पञ्चिका

"एतदपि पुरुषप्रवृत्त्यावगम्यते" इत्यादिना भाष्येणार्धकृतसमापनादिचेष्टा-नुमानेनात्मावगम्यत इत्युक्तम्। अतः प्रतिपन्नार्थोपाघाति कथं विद्वद्भि-र्लिख्यते? समाधत्ते—तदिदमनुपासितगुरोश्चोद्यम्। चेष्टा हि कारणदोषनिराकरणतयोपन्यस्ता। कारणदोषो निराक्रियते येन तत्कारणदोषनिराकणम्, तद्भावेनोपन्यस्ता सेत्यर्थः। एतदुक्तं भवति—स्वकीयायामात्मसंविदि या कारणदोषाशङ्का—किमयमात्मा अविद्यमान एव कारणदोषादवभातीति, सा चेष्टया परपुरुषवर्तिन्या निराक्रियत इति। सुखादयस्तु भ्रूभङ्गनेत्रविलासादिगम्याः। भ्रूभङ्गादिभिः सुखादय एवावगम्यन्त इत्यर्थः। कः पुनरनयोश्चेष्टानुमानभ्रूभङ्गानुमानयोर्विशेषः? अनेनापि हि चेष्टानुमानने परस्यैवात्मनः संविदनुमीयते; तथा भ्रूभङ्गानुमानेन सुखादिसंविदिति। उत्तरम्—अकार्यत इति विशेषः। चेष्टा हि नात्मकार्यम्; तेन चेष्टातो यदनुमानं न तत्कार्यात्। भ्रूभङ्गादीनां सुखादिकार्यत्वात् तदनुमानं कार्यतः। तेन चेष्टातो नात्मा प्रतीयते। भ्रूभङ्गादिभिस्तु सुखादयः प्रतीयन्ते। तेन परात्मा नानुमानतोऽपि परेणावगम्यते, सुखादयस्त्ववगम्यन्त इति

भाष्यम्

परः पश्यति, तेनात्मा उपदिश्यते——शरीरं नात्मा, अस्ति शरीरादन्यः इति ; स चात्मेति शरीर-प्रतिषेधेनोपदिश्यते । तथा प्राणादयो नात्मानः, परेण

बृहती

विशेषः । कथं पुनरसम्बद्धमुपलक्षयति ? कथं वा अनुपलक्षितः पुरुषान्तराविपर्ययः स्वात्मनि विपर्ययाशङ्कां निरस्यति ? विपर्ययाग्रहणा-दिति ब्रूमः । न चाग्रहणे सम्बन्धितोपयुज्यत इत्युक्तम् । तस्मादुपपन्नमिदं शाबरं वचः । मा भूत् आत्मनोऽनुमानम्, चेष्टानिमित्ता तु परात्म-प्रतिपत्तिः किमिति परात्मानं नानुमापयति ? अत्र ब्रूमः—उक्तमेव

पञ्चिका

विशेषः । पुनरपि परश्चोदयति—कथं पुनरसम्बद्धमुपलक्षयति ? कथं चानुपलक्षितः पुरुषान्तराविपर्ययः स्वात्मनि विपर्ययाशङ्कां निरस्यति ? अस्यार्थः——यद्यकार्यभूता चेष्टा आत्मनः, तदा कथमात्मना असम्बद्धा सती आत्मानमुपलक्षयति ? सामान्याभिप्रायेणेदमुच्यते इत्यसम्बद्ध-मिति नपुंसकनिर्देशः । अथ मन्यसे—नास्माकमात्मनोपलक्षितेन प्रयोजनम् ; अतः किमनेनोपलक्षितेनेति ; तत्राह—कथं चानुपलक्षितः पुरुषान्तराविपर्ययः पुरुषान्तरस्यात्मान्तरस्याविपर्ययः अविपरीतरूपता [1]स्वात्मनि विपर्ययाशङ्कां निरस्यति ? अविपरीते परात्मस्वरूपे प्रतिपन्ने स्वात्मनि विपर्ययाशङ्का अपगच्छति, [2]नान्यथेति मन्यते । विपर्ययाग्रहणादिति ब्रूमः । विपर्ययाग्रहणमात्रेणैवाशङ्का निरस्यत इत्यर्थः । प्रयत्नेनाप्यन्विष्यमाणो यदा पुरुषान्तरे विपर्ययो नावगम्यते तदा स्वविषये या विपर्ययाशङ्का सा निवर्तत एव । चेष्टानुमानेन हि यादृशीयमात्मप्रतिपत्तिस्तादृश्येवास्यापीति प्रतिपत्तिः सदृशी प्रतीयते । प्रत्येतव्यस्य चात्मनो विपरीतं स्वरूपं नावगम्यत इति शङ्कानिवृत्तिः । न चाग्रहणे सम्बन्धितोपयुज्यत इत्युक्तम् ।

---

१. Added. स्वकीय आत्मनि. ग.

२. Omitted. नान्यथा—विपर्ययाशङ्का. ग.

भाष्यम्

लिङ्गैरुपलभ्यन्ते, तेऽपि नात्मान इति तत्प्रतिषेधेनान्य उपदिश्यते । 'यः स्वयं पश्यति, न ततोऽन्यः पुरुषः' इत्येतदपि पुरुषप्रवृत्त्यानुमीयते ; यदासौ पुरुषः पूर्वेद्युः सामिकृतानामर्थानां प्रतिसमाधाने शेषानुष्ठाने च यतते, अतः प्रवृत्त्यावगम्यते 'नूनमसावनित्यान्नित्यमवगच्छति' इति ।

उपमानाच्चोपद्धिश्यते---यादृशं भवान् स्वयमात्मानं पश्यति, अनेनोपमानेनावगच्छ 'अहमपि तादृशमेव पश्यामि' इति । यथा कश्चिदात्मीयां वेदनां परस्मै आचक्षीत----दह्यमानस्येव मे भवति, यात्यमानस्येव मे भवति, रुद्ध्यमानस्येव मे भवतीति । अतः स्वयमवगम्यमानत्वादस्ति तद्व्यतिरिक्तः पुरुष इति ।

बृहती

'भोक्तृतया ह्यात्मता' इति । उपमाप्यत्र कथनोपायतयैवोपन्यस्ता । कथनं च प्रमाणान्तरपूर्वकमिति न लक्षणव्यवहारयोर्विरोधः । "यदप्युच्यते

पञ्चिका

तस्मादुपपन्नमिदं शाबरं वचः । अत्र चोदयति—मा भूत् चेष्टात आत्मनोऽनुमानम्, चेष्टाया आत्मना सह सम्बन्धाभावात् ; चेष्टानिमित्ता तु परात्मप्रतिपत्तिः किमिति परात्मानं नानुमापयति ? प्रतिपत्ते प्रत्येतव्येन सह सम्बन्धादिति । अत्र ब्रूमः—उक्तमेव भोक्तृतया ह्यात्मतेति । अनुभवितृतयेति यावत् । अतश्चानुभाव्यतया अनुमीयमानो नात्मतया प्रतीयत इति [1]नात्मा परेणानुमानेनावगम्यत इति । उपमाप्यत्र कथनोपाय[2]तयैवोपन्यस्ता । "उपमानाद्बोपदिश्यते" इति भाष्ये कथनोपायत्वेनो-

---

१. नापरेण. ग. २. त्वेनोपन्यस्ता. क.

भाष्यम्

यदप्युच्यते—विज्ञानमपास्य तन्निदर्श्यतामिति ।

बृहती

—विज्ञानमपास्य तन्निदर्श्यतामिति"। ननु च दत्तोत्तरमेतत् "स्वसंवेद्यः स भवति" इति ; दत्तोत्तरस्य च पुनरुपन्यासो नोपपद्यते। अथायमभिप्रायः—नैव तत्, इदमस्योत्तरम्। कस्य तर्हि तदुत्तरम् ? यदि न कस्यचिदुत्तरम्, किमेतावता तदुत्तरेण भवितव्यम् ? ननु तदनन्तरा-

पञ्चिका

पमाभिमता। कथ्यतेऽनेनेति कथनं वाक्यम्; तदेवोपमा, सादृश्यप्रतिपादकत्वात्; न पुनरत्रोपमानरूपं प्रमाणमुपमानशब्देनोपन्यस्तम्; यच्च तत्कथनं[1] तदपि प्रमाणान्तरपूर्वकमिति[2] न[3] लक्षणाभिधानस्य व्यवहारस्य च विरोधः। "यदप्युच्यते—विज्ञानमपास्य तन्निदर्श्यताम्" इति। अनेन[4] भाष्यमनुभाषते। आक्षिपति—ननु च दत्तोत्तरमेतत् "स्वसंवेद्यः स भवति" इति। अनेन भाष्येण "विज्ञानमपास्य तन्निदर्श्यताम्" इत्यस्य चोद्यस्योत्तरं दत्तम्; दत्तोत्तरस्य च पुनः प्रश्नोपन्यासो नोपपद्यते। अथायमभिप्रायः—नैव[5] तत् पूर्वोक्तम्, अस्य चोद्यस्योत्तरमिदमेव उत्तरम् अनन्तरम्। संप्रति दूषयति—कस्य तर्हि तदुत्तरमिति। एकदेशी समाधत्ते—यदि न कस्यचिदुत्तरं किमेतावता तदुत्तरेण भवितव्यम् ? न ह्यन्यस्य तदुत्तरं भवति, किमेतावता तदुत्तरं भवति[6], येन तदुत्तरत्वे युक्तिरित्यर्थः। दूषणवाद्याह—ननु तदनन्तराभिधानात् तदुत्तरमिति गम्यते। एकदेश्याह

---

१. शब्दतत्कथनम्. ग. इत्यस्य. ग.
२. Added. नोपमानपूर्वकम्. ग.
३. इति तल्लक्षणाभिधानस्य च. ग.
४. Omitted अनेन—
५. नैतत्पूर्वोक्तमस्य चोद्यस्योत्तरम्, इदमेवोत्तरम्। संति. ग.
६. तीतिनैतदुत्तरत्वयुक्तिरित्यर्थः ग.

भाष्यम्

यद्युपायमेव प्रतिषेधसि, न शक्यमुपायमन्तरेणोपेय-

बृहती

भिधानात् तदुत्तरमिति गम्यते । पुनः प्रश्नाभिधानान्नोत्तरमित्यवेहि ; क्रमाच्च लिङ्गं बलीयः । तदिदमाकाशभ्रान्तम् ; उभयं तस्यैवोत्तरम् । "स्वसंवेद्यः स भवति" इतीदमपि लिङ्गादेवोत्तरमवसीयते ; व्याख्यातं चास्य तदपाकरणसामर्थ्यम् । पुनः प्रश्न इदानीं किमर्थः ? अस्ति किञ्चिदवलग्नम् । किं तदवलग्नम् ? सत्यम् ; 'इदमहं वेद्मि' इति संवेद्यते, नाकारान्तरकल्पना ; विज्ञानविविक्तस्य तु ग्रहणं न प्राप्नोति, व्यापृतावगमात् ; विज्ञानावगमे च रूपान्तरानुपलब्धेः

पञ्चिका

—पुनः प्रश्नाभिधानान्नोत्तरमित्यवेहि । उत्तरे हि दत्ते पुनः प्रश्नो नोपपद्यते । क्रमाच्च लिङ्गं बलीयः । तेनानन्तर्यरूपात् क्रमादुत्तरत्वमवगम्यमानं पुनः प्रश्नसामर्थ्येन लिङ्गेनानुत्तरतावगमात् बाध्यते ; तेन तदुत्तरमस्य चोद्यस्य न भवतीति । संप्रति परमसिद्धान्त्याह—तदिदमाकाशभ्रान्तम् ; उभयं तस्यैवोत्तरम् । कुतः[1] ? "स्वसंवेद्यः स भवति" इतीदमपि लिङ्गादेवोत्तरमवसीयते । व्याख्यातं चास्य तन्निराकरणसामर्थ्यम् । तेनोभयत्रापि लिङ्गमेवोत्तरत्वे प्रमाणमिति द्वयमपि तस्यैवोत्तरम् । संप्रत्येकदेश्येव निराकृतः परमसिद्धान्तिनमनुयुङ्क्ते—पुनः प्रश्न इदानीं किमर्थः ? उत्तरम्—किञ्चिदवलग्नोत्तरार्थः । किं तदवलग्नम् ? संप्रत्यवलग्नं दर्शयति—सत्यम्, 'इदमहं संवेद्मि' इति संवेद्यते, नाकारान्तरकल्पना ; विज्ञानविविक्तस्य तु ग्रहणं न प्राप्नोति, व्यापृतावगमात् । विषयं जानन्[2]नात्मा अवगम्यत इति विज्ञानरहितस्यात्मनो ग्रहणं न प्राप्नोतीति विज्ञानस्यापि ग्रहणेन भवितव्यम् ; विज्ञानावगमे च रूपान्तरानुपलब्धेः पुनरपि सैव शून्यता ; विज्ञानं हि गृह्यमाणं केनचिद्रूपेण ग्राह्यम्, रूपरहितस्य ग्रहणाभावात् ; तत्र च नीलादिव्यतिरिक्त-

---

१. Omitted. कुतः. ग.　　२. विषयज्ञानेनात्मा. ग.

भाष्यम्

मुपेतुम् ; अयमेवाभ्युपायो ज्ञातव्यानामर्थानाम् 'यो यथा ज्ञायते स तथा' इति । तद्यथा----कः शुक्लो नाम ? यत्र

बृहती

पुनरपि शून्यता । तस्मात् कल्पित एवायमहङ्कारग्रन्थिरिति पुनरुपन्यासः । "यद्युपायमेव प्रतिषेधसि" इति किमभिप्रेतमुत्तरवादिनः ? इदमभिप्रेतम्—ग्राह्यानुकारिता हि ग्रहणस्योक्ता, न ग्राहकानुकारिता । व्यापृतावस्थोपायतयोपन्यस्ता कथमनुपायमुपेयं शक्यते कथयितुमिति । तदिदमाह—"यद्युपायमेव प्रतिषेधसि, न शक्यमुपायमन्तरेणोपेयमुपेतुम् । अयमेवाभ्युपायो ज्ञातव्यानामर्थानाम्" इति । "तद्यथा—कः शुक्लो नाम ? यत्र शुक्लत्वमस्ति" इत्यनेन किं समर्थितम् ?

पञ्चिका

रूपान्तरानुपलब्धेः तस्यैव नीलादिरूपता प्राप्नोति ; ततश्चार्थशून्यता ज्ञानानां प्राप्नोति ; तस्माद्विज्ञानग्रहणनिबन्धने बाह्यार्थे व्यवस्थिते विकल्प एवायमहङ्कारग्रन्थिरितीदं तदवलग्नम् ; अतः पुनरुपन्यासः । "यद्युपायमेव प्रतिषेधसि" इति किमभिप्रेतमुत्तरवादिनः ? इदमभिप्रेतम्, ग्राह्यानुकारिता हि ग्रहणस्योक्ता, न ग्राहकानुकारिता । ग्राह्याकारं विज्ञानम्, न [1]ग्राहकाकारमित्युक्तं शून्यवादनिराकरणे । तेन ज्ञानं तावन्न प्रत्यक्षम् ; व्यापृतावस्थोपायतयोपन्यस्ता व्यापृतावस्थोपायत्वेनोक्ता, न पुनर्व्यापृतत्वेन ग्रहणम् ; यदा आत्मा विषयाननुभवति [2]तदा विषयसम्बन्धिन्यामनुभूतौ भातीति—कथमनुपायमुपेयं शक्यते कथयितुमिति । तदिदमाह—यद्युपायमेव प्रतिषेधसि, न शक्यमुपायमन्तरेणोपेयमुपेतुम् । अयमेवाभ्युपायो ज्ञातव्यानामर्थानामिति । "तद्यथा कः शुक्लो नाम ? यत्र शुक्लत्वमस्ति" इत्यनेन किं समर्थितमिति वक्ष्यमाणेनाशयेनाक्षिपति । इदं समर्थितम्—यथा न

---

१. ग्राहकभूतविज्ञानाकार- ग. २. Added. तस्यामेव. ग.

भाष्यम्

शुक्लत्वमस्ति। किं शुक्लत्वं नाम? यत्र शुक्लशब्दप्रवृत्तिः। क तस्य प्रवृत्तिः? यच्छुक्लशब्दे उच्चरिते प्रतीयते। तस्मान्न विज्ञानं प्रत्याख्याय कस्यचिद्रूपं निदर्शयितुं

बृहती

इदं समर्थितम्—यथा न शुक्लतामन्तरेण ज्ञेयमवगम्यत इति। ननु चैवं शुक्लतापुरःसरैव ज्ञेये बुद्धिः; एवं चानभिप्रेतोऽर्थः समर्थितो भवति। नानभिप्रेतः; एतावदनेनोक्तम्—नोपायमन्तरेणोपेयानामुपेयत्वम् इति; यस्य यथैवोपायत्वम्, तथैव तस्य; ज्ञानस्य तूपायत्वेऽपि न तत्पुरःसरा संवित् इत्युक्तम्। तस्मात् सर्वविज्ञानज्ञेयतात्मनः स्थिता भवति 'अहमिदमदर्शम्' इति। इयान्

पञ्चिका

शुक्लतामन्तरेण शुक्लोऽवगम्यते, तथा न ज्ञानमन्तरेण ज्ञेयमवगम्यते; ज्ञेये चानवगम्यमाने नात्मा अवगम्यत इति। संप्रत्याक्षेप्तुराशयमविष्करोति[1]—ननु चैवं शुक्लतापुरस्सरैव शुक्ले बुद्धिरुक्ता; अतो दृष्टान्तानुरूप्येण ज्ञानपुरस्सरैव ज्ञेयेऽपि बुद्धिः। एवं चानभिप्रेत एवार्थः समर्थितो भवति। **नानभिप्रेतः; एतावदनेनोक्तम्—नोपायमन्तरेणोपेयानामुपेयत्वमिति**। तत्र यथैव यस्योपायत्वम्, तथैव तस्य; ज्ञानस्य तूपायत्वेऽपि[2] न तत्पुरस्सरा बुद्धिरित्युक्तम्। उपसंहरति—तस्मात्सर्वज्ञानविषयता स्थिता आत्मनः सर्वैरेव प्रमाणस्मृतिविज्ञानैर्ज्ञेयता आत्मनः स्थिता 'अहमिदमदर्शम्' इत्यनेन भाष्येण। अत्र ह्येतदुक्तम्—न विषयसंविदात्मसंविदो[3] विनास्तीति। ननु चैवमनुमानज्ञानज्ञेयत्वे सत्यनुमेयत्वमपि प्राप्नोतीत्यत्राह—**अनुमानादिष्वपि प्रत्यक्षता**। साक्षात्कारेण प्रतिभासमानत्वादात्मनोऽनुमानादिष्वपि प्रत्यक्षतैव। यदि सर्वत्रात्मा प्रत्यक्षः तदा सर्वमेव

---

१. आक्षेप्ताशय- ग. २. Omitted. अपि. ग.
३. संविदो नास्ति. ग.

भाष्यम्

शक्यम् । न च नियोगतः प्रत्यये प्रतीते प्रत्ययार्थः प्रतीतो भवति । अप्रतीतेऽपि हि प्रत्यये सति अर्थः प्रतीयते एव । न हि विज्ञानं प्रत्यक्षम् , विज्ञेयोऽर्थः प्रत्यक्ष इति । एतत् पूर्वमेवोक्तम्—तदवश्यकर्तव्येऽपह्नवे कामं विज्ञान-

बृहती

विशेषः—अनुमानादिष्वपि प्रत्यक्षता । विषयभेदाद्धि प्रमाणभेदः, न प्रमातृभेदात् । प्रमातृरूपता तु ज्ञानस्यानाशङ्कनीयैव, अनाशङ्कितत्वात् । युक्तं चेदं नाशङ्कितम्, कर्मप्रवणत्वात् कर्मणः सकर्मकस्य । यदपि ज्ञातृतैव ज्ञानादृते न शक्यतेऽवगन्तुमिति, तदधीनत्वात्तदवगतेः; यदुक्तम् "न च रूपान्तरोपलब्धिः" इति,

पञ्चिका

प्रत्यक्षं स्यादित्यत्राह—विषयभेदाद्धि[1] प्रमाणभेदः, न प्रमातृभेदात् । यदि प्रमातृभेदेन प्रमाणभेदः स्यात् तदा प्रमाणान्तरं न स्यात् ; प्रमातुरात्मनः सर्वत्र प्रत्यक्षत्वेनैकरूपत्वात् सर्वत्र सर्वं प्रत्यक्षं स्यात् । विषयभेदे तु प्रमाणभेदः । ननु किमिति विषयभेदेनैव प्रमाणानां भेदः, यावता प्रमातृभेदेनापि किमिति न भवतीत्यत्राह—प्रमातृरूपता तु ज्ञानस्यानाशङ्कनीयैव, अनाशङ्कितत्वात् । केनचिद्वादिना । ननु यद्यपि केनचिन्नाशङ्कितम् तथापि किमिति वयमेव नाशङ्कामह इत्यत्राह—युक्तं चेदं यन्नाशङ्कितम्, कर्मप्रवणत्वात् कर्मणः सकर्मकस्य । कर्मप्रधानत्वात् सकर्मिकायाः क्रियाया इत्यर्थः । ततश्च प्रधानाश्रितकर्मभेदेनैव गुणभूतस्य ज्ञानस्य कर्मणो भेदो युक्तः । यदपि चोक्तम्—ज्ञातृतैव ज्ञानादृते न शक्यतेऽवगन्तुमिति, तदधीनत्वात्तदवगतेः । ज्ञानाधीनत्वाज्ज्ञात्रवगतेः[2] ; अतो

---

१. Omitted. हि. ग. २. Omitted. ज्ञाना—गतेः. ग.

भाष्यम्

मपह्नूयेत , नार्थ इत्येतदुक्तमेव ! तस्मादस्ति सुखादिभ्योऽन्यो नित्यः पुरुष इति ।

अथ यदुक्तम् "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति" इति, अत्रोच्यते----"अत्रैव मा भगवान् मोहान्तमपीपदत्" इति परिचोदनोत्तरकाले अपह्नुत्य मोहाभिप्रायमस्य वर्णितवान्----"न वा अरे मोहं ब्रवीमि, अविनाशी

बृहती

तदपि प्रत्युक्तम् "कामं विज्ञानमपह्नूयेत, नार्थः" इति । तस्मात् सिद्धमात्मतत्त्वमिति ।

यत् पुनर्ब्राह्मणम् "न प्रेत्य संज्ञास्ति" इति, तत् पूर्वोत्तरभङ्ग्या स्वयमेव ब्राह्मणान्तरेण व्याख्यातम् । एवं चार्थवादार्थता उपपन्नैवेति 'न चैष विधिशब्दः' इत्यपि प्रत्युक्तम्। ननु च "स एषः" इत्युपपन्नार्थम् ;

पञ्चिका

ज्ञानमपि ज्ञातव्यम् ; यदुक्तम्[1]—न च रूपान्तरोपलब्धिरस्ति ; तस्मात् ज्ञानमवे ज्ञात्राकारमुत्पद्यते ; अतो नास्ति ज्ञानातिरिक्तो ज्ञातेति। एतदपि प्रत्युक्तम् "कामं विज्ञानमपह्नूयेत, नार्थः" इति । साधितमर्थमुपसंहरति—तस्मात्सिद्धमात्मतत्त्वमिति ।

यत्पुनर्ब्राह्मणम् "न प्रेत्य संज्ञास्ति" इति भूतचैतन्यप्रतिपादकम्, तत्पूर्वपक्षोत्तरपक्षभङ्ग्या स्वयमेव ब्राह्मणान्तरेण व्याख्यातम् ; भूतचैतन्येन पूर्वपक्षं कृत्वा "अविनाशी वा अरे अयमात्मा" इत्यादिना सिद्धान्तितमित्यर्थः । एवं च सिद्धे सत्यात्मन्यर्थवादार्थतोपपन्नैवेति "न चैष विधिशब्दः" इति यद्दूषणमुक्तम्, एतदपि प्रत्युक्तम् । ननु च "स एषः" इत्युपपन्नार्थम्,

---

१. Omitted. यदुक्तम्. ग.

भाष्यम्

वा अरेऽयमात्मा अनुच्छित्तिधर्मा, मात्रासंसर्गस्त्वस्य भवति" इति। तस्मान्न विज्ञानमात्रम्; तस्माद्वैषम्यम्। यदुक्तम् न च 'एष याति' इति विधिशब्द इति; मा भूद्विधिशब्दः, "स्वर्गकामो यजेत" इति वचनान्तरेणावगतमनुवदिष्यते। तस्मादविरोधः॥

बृहती

"स्वर्गं लोकं याति" इति कथम्? अधिकृतकामसिद्धेः सिद्धम्। यदुक्तम् "अहंकारममकारावनात्मन्यात्माभिमानौ" इति, मृदितकषायाणामेवैतत् कथनीयम्; न कर्मसङ्गिनामित्युपरम्यते। आह च भगवान् द्वैपायनः—"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" इति रहस्याधिकारे। तस्मान्न विवृतमत्र भाष्यकारेण भगवता, वचनानुरोधात्, नाज्ञानात् इति॥

पञ्चिका

"स्वर्गं लोकं याति" इति कथम्? अत्रोत्तरम्—अधिकृतकामसिद्धेः सिद्धम्। एतदपि सिद्धं यस्मादधिकृतस्य कामः स्वर्गादिः सिध्यतीति स्थापितम्। यदुक्तम् "अहङ्कारममकारावनात्मन्यात्माभिमानौ" इति। यावेतावहङ्कारममकारौ 'अहम्, मम' इति प्रत्ययौ इमावनात्मन्यात्माभिमानभूताविति। मृदितकषायाणामेवैतत्कथनीयम्। येषां कषायो रागो मृदितः तेषामेवैतत्कथनीयम्। न कर्मसङ्गिनामित्युपरम्यते। आह[1] च भवावान् द्वैपायनः—"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" इति रहस्याधिकारे। तस्मान्न विवृतमहङ्कारममकारयोरनात्मविषयत्वं भगवता भाष्यकारेण, द्वैपायनवचनानुरोधान्नो[2]ज्ञानादिति॥

इत्यात्मवादस्थानकम्

---

१. तदाह. ग. २. नाज्ञातमिति. ग.

# कर्मैके तत्र दर्शनात् ॥ ६ ॥

भाष्यम्

उक्तम् 'नित्यः शब्दार्थयोः सम्बन्धः' इति ;

बृहती

॥ कर्मैके तत्र दर्शनात् ॥

"उक्तम् नित्यः शब्दार्थयोः सम्बन्धः इति ; तदनुपपन्नम्" इति केयमनुपपत्तिः ? इयमेवानुपपत्तिः—अनित्ये शब्दे नित्यः शब्दार्थयोः सम्बन्धो नोपपद्यत इति । कथं तर्हि समवाये ? युतसिद्ध-

पञ्चिका

॥ कर्मैके तत्र दर्शनात् ॥

"उक्तं नित्यः शब्दार्थयोः सम्बन्ध इति ; तदनुपपन्नम्" इति केयमनुपपत्तिरिति । अनेन भाष्यमाक्षिपति । समादधाति—इयमेवानुपपत्तिः, अनित्ये शब्दे नित्यः पुरुषप्रयत्नानभिनिर्वृत्तः सम्बन्धो नोपपद्यते । तथा हि—सम्बन्धो भवन्ननित्यस्य शब्दस्यार्थेन सह न नित्य उपपद्यते, सम्बन्धिन एवानित्यत्वात् । अनित्यस्तु पुरुषप्रयत्नजन्य[1] एव स्यात् । समयदिभिर्निर्वर्त्यत[2] इति यावत् । न[3] हि पुरुषप्रयत्नाभिनिष्पन्नस्य शब्दस्यापौरुषेयः सम्बन्ध उपपद्यते । समयादेव हि तदा वाचकता स्यात् । न ह्युत्पन्नविनाशिनः शब्दस्य वृद्धव्यवहारादौत्पत्तिकः सम्बन्धः सिध्यति । यदि ह्यनित्यस्यापौरुषेयः सम्बन्धो नोपपद्यते, कथं तर्हि समवाये ? अनित्याया अपि व्यक्तेर्जात्या सह समवायलक्षणः सम्बन्धोऽपौरुषेयः, तथा क्रियायाः कारकैः सह, अवयवैः सहावयविनाम्, गुणिभिः सह गुणानामिति ? अत्रोत्तरम्[4]—युतसिद्धयोरनुपपत्तिः । पृथक्सिद्धयोः सम्बन्धिनोः सम्बन्धस्यापौरुषेयत्वानुपपत्तिः, अयुतासिद्धयश्चैते

---

१. Omitted. न्य. ग.
२. समयादिनिर्वृत्त इति. ग.
३. नः. ग.
४. Omitted. अत्रोत्तरम्—तदिदमाक्षेपपूर्वकम्. ग.

भाष्यम्

**तदनुपपन्नम् , शब्दस्यानित्यत्वात् ; विनष्टः शब्दः, पुनरस्य**

बृहती

**योरनुपपत्तिः । शब्दत्वं च निरस्तम् । ननु च गत्वाद्यन्यदनिरस्तमस्ति ।**

पञ्चिका

व्यक्त्यादयः । का पुनर्युतसिद्धिः ? पृथगाश्रयाश्रयित्वं पृथग्गतिमत्त्वं च । नार्था हि शब्देष्वाश्रिताः ; नाप्यर्थेषु शब्दाः; अतस्ते पृथगाश्रयाश्रिताः पृथग्गतिमन्तश्च । व्यक्त्यादिषु पुनर्जातिक्रियागुणावयविनो व्यक्त्यादिभ्योऽन्यत्रानाश्रिताः ; व्यक्तिगुणिकारकावयवास्तु यद्यप्यन्यत्राश्रिताः, तथाप्यपृथग्गतिमन्त इत्ययुतसिद्धाः । का पुनरत्र युक्तिः, यदयुतसिद्धानामनित्यानामप्यपौरुषेयः सम्बन्ध इति ? सेयमभिधीयते—तेषां स्वरूपवत्स्वकारणेभ्य एव समवायोऽप्युत्पद्यते । न वयं वैशेषिका इव नित्यं समवायमभ्युपेमः । शब्दानां तु न स्वकारणादेवार्थसम्बन्धः, प्रथमश्रवणेऽर्थानवगतेरिति । ननु च भवत्वनित्यः शब्दः, तथापि सम्बन्धस्यापौरुषेयत्वमुपपद्यते ; शब्दत्वस्यैव विशेषनिविष्टस्य वाचकत्वमस्तु ; तेन नित्यत्वाद्वाचकस्योपपन्नमेवापौरुषेयत्वम् ; तत्राह—**शब्दत्वं च निरस्तम्** । स्फोटनिराकरणपर्वणि । **ननु च गत्वाद्यन्यदनिरस्तमस्ति** । तेन गत्वादीन्येव वाचकानि भवन्तु ; उपपन्नानि च गत्वादीनि, अनित्यत्वे व्यक्तीनां प्रत्युच्चारणं भिन्नानामैक्यप्रतीतेः गोत्वादिवत् । **न तत्** । यदिदमुक्तं तन्नेत्यर्थः । कुतः ? **गस्य विशेषानुपलब्धेः** । अस्यार्थः—तत्र हि सामान्यमङ्गीक्रियते, यत्र हि भेदग्रहानुबन्धमभेदग्रहणम्, यथा गवादिषु । यत्र पुनर्भेदग्रहो नास्ति, तत्र भेदाग्रहणनिबन्धनोऽभेदावसायव्यपदेशः शुक्तिरजतवदिति न सामान्यकल्पनोपपत्तिः । अनित्यपक्षे चानुमानिकभेदभाजामपि गकाराणां न विशेषोपलब्धिरस्तीति भेदाग्रहण एवायमेकावसायः स्यात् । एतेन ज्वालादिषु ज्वालात्वादि प्रतिक्षिप्तम् । अत एव ज्वालादिषु तत्त्वाभिमानो भ्रान्तिरित्युच्यते ; अन्यथा सामान्यविषयत्वादभ्रान्तितैव स्यात् । यथोक्तम्—

---

१. अन्यत्राश्रिताः ; व्यक्तिगुणकारका अव- क, ग.

भाष्यम्

क्रियमाणस्यार्थेन अकृतकः सम्बन्धो नोपपद्यते ; न हि प्रथमश्रुताच्छब्दात् कश्चिदर्थं प्रत्येति । कथं पुनरनित्यः

बृहती

न तत्, गस्य विशेषानुपलब्धेः । कथं तर्हि शुकशारिकामनुष्येषु ? अत एव स्वतो विशेषो नोपलभ्यते ; शुकशारिकामनुष्या एव हि तत्र विशेषतामापद्यन्ते । तथा च लौकिकाः 'शुकोऽयं पठति', 'मनुष्योऽयं पठति' इति विशेषानभिदधति, न पुनः 'अमुं गविशेषम्, अमुं गविशेषम्' इति । तस्मान्न नित्यता सिध्यति सम्बन्धस्य । अतः शब्दस्य नित्यत्वं वक्तव्यम् ; तदिदमाक्षेपपूर्वकमुच्यते "कर्मैके तत्र दर्शनात्" इति । ननु चैवं सति कृतकोऽपि सम्बन्धो नोपपद्यते ।

पञ्चिका

"ज्वालादेः क्षणिकत्वेऽपि प्रत्यभिज्ञेति चेन्न तत् ।
तत्रापि प्रत्यभिज्ञेयं सामान्यं नित्यमेव न ॥

भेदबुद्धिस्तु यत्रांशे स्यात् केनचिदुपाधिना ।
न तत्र प्रत्यभिज्ञानं भेदबुद्ध्यैव वारितम् ॥" इति ।

इह च गस्य विशेषो नोपलभ्यते ; तेन भेदाग्रहनिमित्त एवायमेकताबोधभ्रम इति न गत्वादिकमस्ति । यदि गस्य विशेषानुपलब्धिः कथं तर्हि शुकशारिकामनुष्येषु ? भेदप्रतीतिः । यत एव शुकादिभेदेन भेदप्रतीतिः, अत एव स्वतो विशेषो नोपलभ्यते ; शुकशारिकामनुष्या एव हि तत्र विशेषतामापद्यन्ते । वक्तृभेदमात्रनिबन्ध एव तत्र भेदः, न स्वतः । तथा च समाने वक्तरि न मनागपि विशेष इति । प्रकृतमुपसंहरति—तस्मान्न नित्यता सिध्यति सम्बन्धस्य । अतः शब्दस्य नित्यत्वं वक्तव्यम् । तदिदमाक्षेपपूर्वकमुच्यते "कर्मैके तत्र दर्शनात्" इति । पूर्वपक्षाभावेनाधिकरणमाचिक्षिप्सुराह—ननु चैवं सति कृतकोऽपि सम्बन्धो नोपपद्यते । उदितमात्रनश्वरस्य सम्बन्धकरणे

भाष्यम्

शब्दः ? प्रयत्नादुत्तरकालं दृश्यते यतः, अतः प्रयत्ना-

बृहती

ततः किम् ? लौकिकव्यवहारोच्छेदः । पुनस्ततः किम् ? अनित्यत्वप्रतिज्ञा नोपपद्यते ; लौकिकव्यवहारविरोधात् बलान्नित्यता प्राप्नोति । लौकिकव्यवहारविरोधादनित्यता मा भूत् ; नित्यतापत्तेः किमायातम् ? इदमायातम्—लौकिकव्यवहारानुपपत्तिरेव । सत्यमेवम् ; यदि प्रत्यस्तमितं समयेन ; न ह्यविषयः समयस्यास्ति ; सर्वानुपपत्त्यार्तिहरोऽयं

पञ्चिका

प्रयोजनाभावात् । न हि कृतकसम्बन्धेन पुनर्व्यवहर्तव्यम्, तस्य तदानीमेव विनष्टत्वात् ; अन्यस्य च पुनरुत्पन्नत्वात् इत्यनित्ये शब्दे कृतकोऽपि सम्बन्धो नोपपद्यते । समाधित्सुः[1] पृच्छति—ततः किमिति । आक्षेप्ताह—लौकिकव्यवहारोच्छेद इति । पुनरपि समाधाताह—पुनस्ततः किमिति । आक्षेप्ताह—अनित्यत्वप्रतिज्ञा नोपपद्यते ; लौकिकव्यवहारविरोधात्[2] बलात् नित्यता प्राप्नोति । समाधातैकदेश्याह—लौकिकव्यवहारविरोधादनित्यता[3] मा भूत् ; नित्यतापत्तेः किमायातम् ? आक्षेप्ता निराकरोति[4]—इदमायातम् । ननु लौकिकव्यवहारानुपपत्तिरेवायातेति[5] । समाधाताह—सत्यमेवम् । नित्यतापद्यतैव, यदि प्रत्यस्तमितं समयेन । भावे निष्ठा । समयो लोकव्यवहारहेतुरस्तीत्यर्थः । किंविषयः पुनः समयो व्यवहारहेतुः ? न तावच्छब्दविषयः, तस्य भङ्गुरस्य समयव्यवहारानुवृत्त्ययोगात् ; तत्राह—न ह्यविषयः समयस्यास्ति ; सर्वानुपपत्त्यार्तिहरोऽयं समय इति । अस्यार्थः—योऽयं प्रत्युच्चारणं भिन्नेष्वपि वर्णेषु भेदाग्रहनिबन्धनोऽभेदभ्रमः, तद्विषयः समयः । न च व्यवहारविसंवादः, अभिप्रायाविसंवादात् ; प्रमाणान्तरेण ह्यर्थं प्रतीत्य तत्प्रतिपादनाभिप्रायेण पुरुषा भ्रान्त्यारूढैकत्वान्

---

१. Added. तं. ग.
२. -धात्तु बलात्. ग.
Omitted. बलात्. क.
३. -तामात्रम्, नित्यतोपपत्तेः ग.
४. आह. ग.
५. आपतति. ग.

भाष्यम्

नन्तर्यात् तेन क्रियत इति गम्यते । ननु अभिव्यञ्ज्यात्

बृहती

समयः । तस्मात् शब्दप्रमाणकानां न व्यवहारदर्शनमात्रेण प्रामाण्यं सिध्यति । तस्मान्नित्यत्वे यत्नः कर्तव्योऽभिधानस्य । स चायमारब्धः, वृद्धव्यवहारपूर्वकत्वात् सम्बन्धज्ञानस्य सम्बन्धज्ञानपूर्वकत्वाच्चार्थावगतेः । न च क्षणिकत्वेऽपि चक्षुरादीनामिव प्रामाण्यसिद्धिः, प्रथमश्रवणानवगमात् । "कर्मैके तत्र दर्शनात्" इति कृतकत्वं

पञ्चिका

शब्दान् समयकरणकालभाविताभिमानेन प्रयुञ्जते, प्रतिपत्तापि तेनैवाभिमानेन तदभिप्रायान्तर्भावमुखेनार्थं प्रतिपद्यत इत्यभिप्रायाव्यभिचारेणार्थसिद्धिः ; ततश्च व्यवहार इति । वैदिकस्तु व्यवहारः शब्दैकनिबन्धन इति न समयस्तत्र हेतुः ; तदाह—**तस्माच्छब्दप्रमाणकानां न व्यवहारदर्शनमात्रेण प्रामाण्यं सिध्यति । तस्मान्नित्यत्वे यत्नः कर्तव्योऽभिधानस्य । स चायमारब्धः** । ननु च क्षणिकत्वेऽपि शब्दस्य पुरुषानपेक्षमेवार्थेषु प्रामाण्यं किमिति न भवति ? यथा अनित्यानामपि चक्षुरादीनां स्वतःप्रामाण्यमित्यत्राह—**वृद्धव्यवहारपूर्वकत्वात् सम्बन्धज्ञानस्य सम्बन्धज्ञानपूर्वकत्वाच्चार्थावगतेः** । क्षणिकत्वे चक्षुरादीनामिव न प्रामाण्यसिद्धिः । सम्बन्धज्ञानसापेक्षतैव कुत इत्यत्राह—प्रथमश्रवणेऽर्थानवगमात् । **"कर्मैके तत्र दर्शनात्" इति कृतकत्वं शब्दस्योच्यते** ; किमिदं कृतकत्वम् ? अयमाशयः—यदि सर्वशब्दानधिकृत्य कृतकत्वं कृत्रिमत्वमुच्यते, तदा प्रयत्नानन्तरदर्शनादिति भागासिद्धो हेतुः, समुद्रघोषादिष्वभावात् ; पक्षश्च प्रमाणान्तरविरुद्धः । अथाभिधानात्मकानेव पक्षीकृत्य प्रयत्नजत्वं साध्यते ; तदानभिधायकानां कृतकता न साधिता स्यादिति भावः । उत्तरम्—

भाष्यम्

स एनम् । नेति ब्रूमः ; न हि अस्य प्रागभिव्यञ्जनात्

बृहती

शब्दस्योच्यते ; किमिदं कृतकत्वम् ? पुरुषप्रयत्नेनोत्पत्तिः । नन्वप्रयत्न-पूर्विकापि शब्दस्योत्पत्तिर्दृष्टा यथा छलच्छलादेः । नायं दोषः, अभिधाना-धिकारात् । न चेदमभिधानमप्रयत्नपूर्वकं दृश्यते । अतः क्रियानन्तरोप-लब्धेस्तयैवोत्पद्यत इति मन्यामहे । कथं तर्हि मूलोदकादिषु ? अन्यतोऽस्तित्वावगतेः ; शब्दे पुनः प्रयत्नानन्तरैवोपलब्धिः । तस्मान्न विद्यमानस्य प्रयत्नोऽभिव्यञ्जक इति शक्यते वक्तुम् । नन्विदमस्ति प्रयत्नात् पूर्वमस्तित्वे प्रमाणम् । किमिदमस्ति ? सप्रत्यभिज्ञं

पञ्चिका

पुरुषप्रयत्नेनोत्पत्तिः । कृतकत्वमुच्यते । अभिधानात्मकानामेव प्रयत्नेनोत्पत्तिः साध्यत इत्याशयः । आशयमबुद्ध्वा चोदयति— नन्वप्रयत्नपूर्विकापि शब्दस्योत्पत्तिर्दृष्टा यथा छलच्छलादेः[१] । नायं दोषः, अभिधाना-धिकारात् । अभिधानस्यैव हि प्रामाण्यं प्रतिज्ञातम् ; तेन तस्यैवापौरुषेयसम्बन्धप्रतिपादनायेदमुच्यते । न चेदमभिधानमप्रयत्नपूर्वकं दृश्यते ; अतः क्रियानन्तरोपलब्धेः तयैवोत्पद्यत इति मन्यामहे । आक्षिपति—कथं तर्हि मूलोदकादिषु ? मूलोदकादीनि प्रयत्नानन्तरोप-लब्धान्यपि न प्रयत्नजन्यानि । अत्र समाधिः—अन्यतोऽस्तित्वावगतेः । प्रमाणान्तरेण मूलोदकादीनि प्रयत्नात्प्रागवगतसत्त्वानीति न तेषां प्रयत्नो जनयिता ; शब्दे पुनः प्रयत्नानन्तरैवोपलब्धिः । तस्मान्न विद्यमानस्य प्रयत्नोऽभिव्यञ्जक इति शक्यते वक्तुम् । ननु शब्दस्यापि प्रयत्नात् पूर्वमस्तित्वे इदमस्ति प्रमाणम् । किमिदमस्ति ? सप्रत्यभिज्ञं प्रत्यक्षम् । प्रत्यभिज्ञानेन शब्दस्यैकतां गृह्णता सिद्धे प्राक् सत्त्वे पूर्वोत्तरयोः प्रयत्नयोरुत्तरः प्रयत्नोऽनुत्पादक इति सिध्यति ; सिद्धे चैवं पूर्वोऽप्यभि-

---

१. जलादेः. ग.

भाष्यम्

**सद्भावे किञ्चन प्रमाणमस्ति ; संश्चाभिव्यज्यते, नासन् ।**

बृहती

**प्रत्यक्षम् । कथमत्र प्रत्यभिज्ञानम्, अन्यत्वानवगमात् ? अनित्यत्ववादिनो वा किमन्यत्वेनावगतिरस्ति ? किमिति नास्ति प्रध्वस्तोत्पन्नयोः ? विशेषाग्रहणात् । किं विशेषाग्रहणनिबन्धनैव प्रत्यभिज्ञा ? किं वा मन्यते भवान् ? कर्मण्यपि प्रत्यभिज्ञा प्राप्नोति । स्वरूपग्रहणे सति इदमुच्यते ; आनुमानिकं च कर्म—इत्युक्तम् । का वार्ता ज्वालादिषु ? नित्यत्वे**

पञ्चिका

व्यञ्जक इति सिद्धमुत्तरप्रयत्नवत् ; न हि स एव तस्योत्पादकोऽभिव्यञ्जकश्च[1] । समर्थयिताह—**कथमत्र प्रत्यभिज्ञानम्, अन्यत्वानवगमात् ?** अस्यार्थः—अन्यत्वावगमपूर्वकं हि यत्राभेदज्ञानम्, तत्र प्रत्यभिज्ञा भवति ; अन्यत्वानवगमे तु भेदाग्रहणनिबन्धन एवैकावसायभ्रमः । आक्षेपक आह—**अनित्यत्ववादिनो वा किमन्यत्वेनावगतिरस्ति ?** अस्यार्थः—भेदाग्रहणनिबन्धना तत्रैकतावबोधभ्रान्तिरङ्गीक्रियते, यत्रान्यत्वमवगम्यते ; न चात्रानित्यत्ववादिनोऽपि अन्यत्वप्रतीतिरस्ति[2] । समर्थक आह—**किमिति** नास्त्यन्यत्वेनावगतिः **प्रध्वस्तोत्पन्नयोः ?** प्रध्वस्तस्योत्पन्नस्य च व्यक्तमन्यत्वम् । आक्षेपक आह—**विशेषाग्रहणात्** । अन्यत्वं नावगम्यत इति । समर्थक आह—**किं विशेषाग्रहनिबन्धनैव प्रत्यभिज्ञा ?** यदि विशेषाग्रहनिबन्धनैव प्रत्यभिज्ञा, ज्वालादिष्वपि तथा स्यादिति मन्यते । आक्षेपक आह—**किं वा मन्यते भवान् ?** एवमेवेत्यर्थः । समर्थक आह—**कर्मण्यपि प्रत्यभिज्ञा प्राप्नोति** । तत्रापि विशेषाग्रहणादिति भावः । आक्षेपक आह—**स्वरूपग्रहणे सतीदमुच्यते** । विशेषाग्रहणनिबन्धना प्रत्यभिज्ञेति यदिदमुच्यते, तत्स्वरूपग्रणे सति । **आनुमानिकं च कर्म** । तेन तत्र स्वरूपग्रहणं नास्तीति विशेषाग्रहणेऽपि न प्रत्यभिज्ञा । शब्दानां तु स्वरूपग्रहणमस्तीति युक्ता तत्र

---

१. Added. युज्यते. ग. २. अन्यतः प्रतीतिः. ग.

बृहती

ज्वालादीनामनुमानविरोध इति चेत्, तुल्यमभिधानेऽपि, अस्थानादेः। तस्मात् विशेषाग्रहणेऽप्यन्यता ; अन्यत्वे च सिद्धा प्रयत्नानन्तरोपलब्धेः प्रयत्नोत्पत्तिः। ननु च प्रयत्नोत्पन्नानामपि कालान्तरावस्थायितया नैव व्यवहारानुपपत्तिः ; उत्पन्नस्यापि चक्षुरादेः स्वाभाविकं रूपग्रहणसामर्थ्यं नैव विहन्यते। सत्यम् ; नैतच्छब्दे, अस्थानात्। ननु चक्षुषोऽस्थानत्वेऽपि रूपग्रहणशक्तिर्नैव विहन्यते, तद्वच्छब्देऽपीति चेत्, प्रत्युक्तं

पञ्चिका

प्रत्यभिज्ञा। समर्थक आह—का वार्ता ज्वालादिषु? ज्वालादीनां तु स्वरूपं प्रत्यक्षेण गृह्यते ; भेदश्च नावगम्यते ; तेन तत्रापि तर्हि भवतः प्रत्यभिज्ञाभिप्रेता? समर्थक एवाक्षेपकस्याशयमाशङ्कते—नित्यत्वे ज्वालादीनामनुमानविरोध इति चेत्। ज्वालादीनां नित्यत्वे स्थिरत्वेऽङ्गीक्रियमाणेऽनुमानविरोधः ; [1]ज्वालायां प्रभामण्डलवितत्या तेजोऽवयवानां विशरणमवगम्यते ; विशीर्णावयवश्चावयवी विनष्टः ; पुनरुपलब्धिश्च ज्वालान्तरस्योत्पन्नत्वादित्यनुमानेन ज्वालादीनामन्यत्वमव[2]सीयत इत्यनुमानविरोधात् भेदाग्रहणनिबन्धन एवैकावगमभ्रमः, न प्रत्यभिज्ञेति चेत्। संप्रति दूषयति—तुल्यमभिधानेऽपि, अस्थानादेः। अस्थानादिहेतुभिरत्राप्यनुमानविरोध इति तुल्यम् ; अतः कथमत्रापि प्रत्यभिज्ञा? उपसंहरति—तस्माद्विशेषाग्रहणेऽपि प्रत्यक्षतः, अनुमानतोऽन्यता ; अन्यत्वे च सति प्रयत्नात्प्रागस्तित्वासिद्धेः सिद्धा प्रयत्नानन्तरोपलब्धेः प्रयत्नेनोत्पत्तिः। ननु च प्रयत्नोत्पन्नानामपि कालान्तरावस्थायितया नैव व्यवहारानुपपत्तिः। घटादीनां कारकाणाम्। ज्ञापकस्याप्युत्पन्नस्य चक्षुरादेः स्वाभाविकं पुरुषप्रयत्नानपेक्षं रूपग्रहणसामर्थ्यं नैव विहन्यते ; तथा शब्दस्यापि प्रयत्नोत्पन्नस्य पुरुषानपेक्षमेव ज्ञापकत्वमस्त्विति। सत्यमेतद्घटादिषु ; शब्दे त्वेतन्नास्ति ; कुतः? अस्थानात्। उत्पन्नमात्रविनष्टत्वादित्यर्थः। पुनरपि चोदयति—ननु चक्षुषोऽस्थानत्वेऽप्युन्मीलिततत्क्षणनिमीलित[3]स्य रूपग्रहणशक्तिर्नैव विहन्यते, तद्वच्छब्देऽपीति

---

१. Omitted. ज्वलायाम्. ग.
२. अवगम्यते. ग.
३. Omitted. क्षण—तस्मात्. ग.

# अस्थानात् ॥७॥ करोतिशब्दात् ॥८॥

भाष्यम्

नो खल्वप्युच्चरितं मुहूर्तमप्युपलभामहे ; अतो विनष्ट इत्यवगच्छामः । न च सन्नोपलभ्यते, अनुपलम्भकारणानां व्यवधानादीनामभावेऽप्यनुपलम्भनात् ; न चासौ विषयमप्राप्तः, आकाशविषयत्वात् ; कर्णच्छिद्रेऽप्यनुपलम्भनात् ॥

अपि च 'शब्दं कुरु, मा शब्दं कार्षीः' इति व्यवहर्तारः प्रयुञ्जते, न ते नूनमवगच्छन्ति 'स एवायं शब्दः' इति ॥

बृहती

प्रथमश्रवणानवगतेः । तस्मात् 'अस्थानात्' इत्ययं हेतुरौत्पत्तिकत्वविघाती सम्बन्धस्य । यदि कालान्तरावस्थायिता स्यात्, स्यादपि व्यवहाराच्छब्दादर्थावगतिः ; अस्थायित्वे पुनः समय एव शरणं भवितुमर्हतीत्युक्तम्—"अस्थानात्" इति ॥

लौकिकमप्यभिधानममुमेव न्यायमनुवर्तते । कात्र न्यायानुवृत्तिः ?

पञ्चिका

चेत् । उत्तरम्—प्रत्युक्तं प्रथमश्रवणानवगतेरिति । सम्बन्धग्रहणसापेक्षस्य प्रत्यायकत्वम् ; न च तत्क्षणिकस्य भवतीत्यर्थः । तस्मात् 'अस्थानात्' इत्ययं हेतुरौत्पत्तिकत्वविघाती सम्बन्धस्य । यदि कालान्तरावस्थायिता स्यात्, स्यादपि व्यवहाराच्छब्दादर्थावगतिः ; अस्थायित्वे पुनः समय एव शरणं भवितुमर्हतीत्युक्तम्—अस्थानादिति ॥

लौकिकमप्यभिधानममुमेव न्यायमनुवर्तते । कात्र न्यायानुवृत्तिः ?

# सत्त्वान्तरे च यौगपद्यात् ॥ ९ ॥

भाष्यम्

नानादेशेषु च युगपच्छब्दमुपलभामहे, तदेकस्य नित्यस्यानुपपन्नमिति । असति विशेषे नित्यस्य न अनेकत्वम्; कार्याणां तु बहूनां नानादेशेषु क्रियमाणाना-मुपपद्यतेऽनेकदेशसम्बन्धः ; तस्मादप्यनित्यः ॥

बृहती

मुख्यार्थता करोतेः—शब्दं कुरु, शब्दं मा कार्षीः, शब्दकार्ययं माणवक इति ॥

"नानादेशेषु च युगपच्छब्दमुपलभामहे ; तदेकस्य नित्यस्यानुपपन्न-मिति" केयमनुपपत्तिः ? इयमनुपपत्तिः—युगपदेकस्यानेकत्रोपलब्धिर्न दृष्टा । ततः किम् ? इदं ततो भवति—साधितमन्यत्वम् । ननु च साधितमन्यत्वम् । सत्यं साधितम् ; हेतुप्रचयस्तु प्रदर्श्यते ।

पञ्चिका

मुख्यार्थता करोतेः—शब्दं कुरु, शब्दं मा कार्षीः, शब्दकार्ययं माणवक इति । अभूतप्रादुर्भावनं[1] करोत्यर्थः ; स मुख्यो भवत्यनित्यपक्षे । विधिनिषेध-सिद्धार्थत्वेनोदाहरणत्रयम् ॥

नानादेशेषु च युगपच्छब्दमुपलभामहे ; तदेकस्य नित्यस्या-नुपपन्नमिति । भाष्यमनुभाषितम् । आक्षिपति—केयमनुपपत्तिः ? उत्तरम्—इयमनुपपत्तिः—युगपदेकस्य देवदत्तादेरनेकत्रोपलब्धिर्न दृष्टा ; क्रमेण तु[2] दृश्यत एव । यद्येवं ततः किम् ? उत्तरम्—ततोऽन्यत्वम् ; एकस्मात् व्यावृत्ता युगपदनेकत्रोपलब्धिरन्यत्वं साधयति । ननु च साधित-मन्यत्वम् । अतः पुनरुक्तमिति यावत् । उत्तरम्—सत्यं साधितम् ;

---

१. प्राद्रुर्भवनम्. ग. २. Omitted. ङ. ग.

बृहती

को लाभः ? न खलु कश्चित् । न चेत् कश्चित्, हेतुप्रचयेन किम् ? सत्यं यथा भवानाह ; किन्त्वयमेवार्थो राद्धान्तमाक्षिपति । तस्मात् तद्भ्रमप्रतिषेधार्थोऽयमारम्भः ; न ह्यनुपन्यस्तस्य भ्रान्तता शक्यते वक्तुम् ; अप्रदर्शिते च भ्रान्तत्वेऽपुनरुक्तोऽयं भवति कस्यचिन्मन्दधियः । सर्वार्थं चेदं शास्त्रं "मन्दविषेणापि" इति दर्शितं भाष्यकारेण । "असति विशेषे नित्यस्य नानेकत्वम्" किमिदम्—असति विशेषे नित्यस्य नानेकत्वमिति ? 'असति विशेषे नानात्वं नास्ति' इति शक्यते वक्तुं नित्यस्य अनित्यस्य वा ; नित्यग्रहणं न विद्मः । यद्यनित्यस्यासत्यपि विशेषे नानात्वं स्यात्, युक्तं

पञ्चिका

हेतुप्रचयस्तु प्रदर्श्यते । पूर्वं हेत्वन्तरेणान्यत्वमुक्तम् ; संप्रति हेत्वन्तरं[1]मुच्यते । को लाभः ? हेतुप्रचयं[2]दर्शने साध्यस्याभेदान्न कश्चिल्लाभ इत्यर्थः । उत्तरम्—न खलु कश्चिदिति । साध्याभेदात् । चोदयति—न चेत्कश्चित्, हेतुप्रचयेन किम् ? उत्तरम्—सत्यं यथा भवानाह ; किन्त्वयमेवे[3]वार्थो राद्धान्तमाक्षिपति । अनिराकृतोऽयमर्थः सिद्धान्तमाक्षिपतीति कस्यचिद्भ्रान्तिः स्यात् । [4]तस्मात् तद्भ्रमप्रतिषेधार्थोऽयमारम्भः । तदिदं विवृणोति—न ह्यनुपन्यस्तस्य भ्रान्तता शक्यते वक्तुम् ; अप्रदर्शिते च भ्रान्तत्वेऽपुनरुक्तोऽयं[5] भवति कस्यचिन्मन्दधियः । ननु मन्दधिय एवायं भ्रमो न तीक्ष्णधियः ; ततः किमित्यनेनोक्तेनेत्यत्राह—सर्वार्थं चेदं शास्त्रं "मन्दविषेणापि" इति दर्शितं भाष्यकारेण । "असति विशेषे नित्यस्य नानेकत्वम्" इति । भाष्यमनुभाषितम् । आक्षिपति—किमिदमसति विशेषे नित्यस्य नानेकत्वमिति ? 'असति विशेषे नानात्वं नास्ति' इति शक्यते वक्तुं नित्यस्य अनित्यस्य वा ; नित्यग्रहणं न विद्मः । सामान्येनापि शक्यते वक्तुं नित्यग्रहणमफलमिति । यद्यनित्यस्या-

---

१. मुक्तमुच्यते. ग.
२. प्रदर्शनेन साध्यस्य न कश्चित्. ग.
३. Omitted. एव. ग.
४. Omitted. तस्मात्. ग.
५. यो भविष्यति. ग.

बृहती

**वक्तुम् 'नित्यस्य' इति। तस्माद्वर्णनीयोऽयं ग्रन्थः । वर्ण्यते तर्हि —गवादेरेकस्यानेकत्र युगपदुपलब्धिर्दृष्टा नित्यस्य सतः ; तस्मात् "सत्त्वान्तरे च यौगपद्यात्" इत्यस्यानेनान्यथासिद्धिराशङ्किता ; तस्येदमुत्तरम् "असति विशेषे" इति । किं गवादेर्विशेषो विद्यते ? तदपि ह्येकमविशिष्टम् ; न ह्यन्यच्छाबलेये अन्यच्च बाहुलेये । अथायमभिप्रायः—असत्याश्रयविशेषे—इति । तत्राप्याश्रयस्यैवान्यत्वम् ; किमायातमाश्रयिणः ? तस्मान्नित्यस्याप्येकस्यानेकत्र युगपदुपलब्धिर्दृष्टा । अतो नान्यत्वे युगपद्दर्शनं हेतुः । अथेदं मतम्—**

पञ्चिका

**सत्यपि विशेषे नानात्वं स्यात् ।** युक्तं नित्यस्येति विशेषणम् ; न त्वेतदस्ति । **तस्माद्वर्णनीयोऽयं ग्रन्थः । वर्ण्यते तर्हि—गवादेरेकस्यानेकत्र युगपदुपलब्धिर्दृष्टा नित्यस्य सतः ।** तस्मात् **"सत्त्वान्तरे च यौगपद्यात्"** इत्यस्य हेतोरनेन भाष्येणान्यथासिद्धिराशङ्किता—नित्यत्वे नानादेशेषु युगपदुपलब्धिरेकस्यापीति ; **तस्येदमुत्तरम् "असति विशेषे" इति ।** पुनराक्षिपति—**किं वा गवादेर्विशेषो विद्यते ? तदपि ह्येकमविशिष्टम् ; न ह्यन्यच्छाबलेयेऽन्यच्च बाहुलेये ।** अस्यार्थः—हेतुसमर्थनवादिना हि त्वयैवमुच्यते, यदिदं नित्यत्वेनैकस्यानेकत्र दर्शनम्[1] तद्विशेषे सति गवादेः ; न च शब्दस्य विशेषोऽस्ति । तस्मान्न नित्यत्वेनेदमनेकत्र दर्शनम् ; किन्तु तत्र तत्रोत्पन्नत्वेनैवेति । एवं च वदतस्तवायमभिप्रायो लक्ष्यते—गवादेर्विशेषो विद्यत इति । स चायमभिप्रायस्तेऽनुपपन्नः, गवादेरपि विशेषाभावात् । अथायमभिप्रायस्ते[2]—असत्याश्रयविशेषे गोत्वस्यापि विशेषो नास्ति, सति त्वाश्रयविशेषे गोत्वस्यापि विशेष इति ; अयमपि तवाभिप्रायोऽयुक्त एव ; यतः **तत्राप्याश्रयस्यैवान्यत्वम् ; किमायातमाश्रयिणः ?** न ह्याश्रयभेदेनाश्रयी भिद्यते, अन्यत्वात्तयोः । **तस्मान्नित्यस्याप्येकस्यानेकत्र युगपदुपलब्धिर्दृष्टा ।** अतो नित्यत्वेनाप्येकस्यानेकत्रोपलब्धिसिद्धेर्नान्यत्वे युगपद्दर्शनं हेतुः । **अथेदं मतम्—**

---

१. दर्शनं चेद्विशेषे. ग. २. Omitted. ते. ग.

## बृहती

**नैव गवादेर्युगपद्दर्शनमनेकत्र ; भेदा एव हि तत्रानेकदेशतया गृह्यन्ते, न गोत्वमिति । कथं तर्हि सर्वेषु 'गौः', 'गौः' इति बुद्धिः ? अत एवानेकदेशत्वं गोत्वस्य नास्ति । अन्यथा हि 'इह गोत्वम्', 'इह गोत्वम्' इति स्यात् । कथं तर्हि "इह प्रत्ययात् समवायः" ?**

## पञ्चिका

**नैव गवादेर्युगपद्दर्शनमनेकत्र ; भेदा एव हि तत्रानेकदेशतया गृह्यन्ते, न गोत्वमिति ।** अनेन समर्थनवादिनोऽभिप्रायान्तरमाशङ्कते पूर्वपक्षाक्षेपवादी । अर्थस्तु—अथेदं तव समर्थनं समर्थनवादिनो मतम्—येयमन्यथासिद्धिराशङ्किता, सा असिद्धत्वेनैव परिह्रियते ; असति विशेषे गोत्वादेरनेकत्वं नास्ति । गोत्वादेर्विशेषो नास्ति । विशेषाभावे च नानेकत्वम् । यदि चानेकत्र युगपदुपलभ्यते, तदा नियतमनेकत्वं स्यात् ; तच्च नास्ति । तस्मादनेकत्रोपलब्धिरेव गोत्वस्य नास्ति । भेदा एवानेकत्रोपलभ्यन्ते, न गोत्वम् । अतो नित्यत्वेनाप्येकस्यानेकत्रोपलब्धिर्भवतीति न क्वचित्सिद्धमिति । संप्रति दूषयति—**कथं तर्हि सर्वेषु गौर्गौरिति बुद्धिः ?** अस्यार्थः—गोत्वमनेकासु व्यक्तिषु प्रतीयमानमनेकप्रदेशमेव प्रतीयते ; अथानेकासु व्यक्तिषु गोत्वं न प्रतीयते , कथं तर्हि सर्वेषु पिण्डेषु गौर्गौरिति बुद्धिः ? विशेषसमवायपरिकल्पननिबन्धना हि विशिष्टबुद्धिः । समर्थनवाद्याह । यत एव गौर्गौरिति बुद्धिः **अत एवानेकदेशत्वं गोत्वस्य नास्ति ।** अन्यथा हि यदि व्यक्तिर्गोत्वस्य देशत्वेन प्रतीयते, **'इह गोत्वम्', 'इह गोत्वम्' इति स्यात् ।** न चैवमस्ति । तस्मान्न देशतया व्यक्तिः प्रतीयते । **कथं तर्हि "इहप्रत्ययात्समवायः" ?** योऽयम् "इह प्रत्ययात्समवायः" इति पदार्थविदामुद्गारः, स कथमित्याक्षेपः । उत्तरम्—

---

१. Omitted. युगपत्. ग.
२. अर्थतस्तु. ग.
३. Added. च. ग.
४. गोत्वादेरविशेषः.. ग.
५. अनेकत्व-. क.
६. विरुद्धेषु. ग.
७. Omitted. one इह गोत्वम्. ग.
८. इत्यर्थः । एक- ग.

बृहती

एकद्रव्यपदार्थाभिप्रायं तत्, न व्यक्त्यभिप्रायम्। तस्माद्धेतुरन्यत्वे युगपद्दर्शनम्। "असति विशेषे" इति च युक्तं विशेषग्रहणम्। ननु चानित्यस्याप्यसति विशेषे नैवान्यत्वम्। बाढमस्ति ज्वालादिषु; कार्यत्वाच्चाविरोधः। नित्यस्य त्वकार्यत्वादनेकत्वविरोध इति युक्तो हेतुः॥

पञ्चिका

एकद्रव्यपदार्थाभिप्रायं[1] तत्, न व्यक्त्यभिप्रायम्। अस्यार्थः— एकद्रव्यश्चासौ पदार्थश्चेति; एकद्रव्यपदार्थशब्देन कर्मपदार्थ उच्यते; कर्मपदार्थ एवैकद्रव्यः एकद्रव्यमाश्रयभूतं तस्यैव, न द्रव्यपदार्थस्य गुणपदार्थस्य वा; द्रव्यपदार्थो ह्यद्रव्याश्रितो[2] भवति परमाण्वाकाशादिः। अनेकद्रव्याश्रितोऽपि भवति घटादिः। गुणपदार्थस्त्वनेकद्रव्याश्रितः[3]। यथा संयोगवियोगद्वित्वादिसंख्यात्मकोऽनेकद्रव्याश्रितः, रूपादिरेकद्रव्याश्रितः; कर्मपदार्थस्त्वेकस्मिन्नेव द्रव्ये वर्तते। तदाह भगवान् काश्यपः— "एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षं कारणं कर्मलक्षणम्" इति। तेनैकपदार्थाभिप्रायेणेदमुच्यते "इहप्रत्ययात्समवायः" इति, न व्यक्त्यभिप्रायेण। न व्यक्तावपि इहप्रत्ययो जात्यपेक्षयेति का पुनरत्र युक्तिः? इयमुच्यते— कर्मपदार्थो ह्यनुमेयः, तेन तदग्रहे द्रव्यं गृहीतं सत् पुनस्तदनुमानसमये शक्यमिहप्रत्ययेनालम्बितुम्; जातिस्तु न भिन्नप्रमाणग्राह्या; धर्मी च गृह्यमाणोऽवश्यं येन केनचिद्धर्मेणालिङ्गितो ग्रहीतव्यः; सर्वा हि प्रतीतिः 'एवम्' इति भवति; एवंशब्दः प्रकारार्थः; प्रकारश्च धर्मः; तत्र जातिः धर्मिप्रतीतावनुप्रविष्टेति न तदपेक्षया धर्मी इहप्रत्ययविमर्शमर्हतीति। अतो धर्मधर्मितयैव जातिव्यक्त्योः प्रतीतिः, नाधाराधेयतया। तस्मादन्यथासिध्यभावाद्धेतुरन्यत्वे युगपद्दर्शनम्। "असति विशेषे" इति च युक्तं भाष्यमन्यथासिद्धिपरिहारार्थम्। ननु चानित्यस्याप्यसति[4] विशेषे नैवान्यत्वम्; अतः किमर्थं नित्यस्येति कृतम्? बाढमतिशयेनासत्यपि विशेषेऽनेकत्वम-

---

१. अभिप्राय हि तत्. ग.
२. द्रव्यानन्वितः. ग.
३. Omitted. गुण—काश्यपः. ग.
४. अनित्यत्वेऽपि. क.

## प्रकृतिविकृत्योश्च ॥ १० ॥

भाष्यम्

अपि च 'दध्यत्र' इत्यत्र 'इकारः प्रकृतिः, यकारो विकृतिः' इत्युपदिशति ; यद्विक्रियते, तदनित्यम् ; इकारसादृश्यं च यकारस्योपलभ्यते, तेनापि तयोः प्रकृतिविकारभावो लक्ष्यते ॥

बृहती

प्रकृतिविकारभावञ्च शब्दज्ञाः स्मरन्ति ; न चायं नित्यस्योपपद्यते ; तस्मात् स्मृतिरपि पूर्वोक्तहेत्वनुगुणैव । सादृश्यमप्यनुगुणमुपलभामह इत्युपपन्नं कार्यत्वम् ॥

कारणवृद्ध्यनुगमाच्च कार्यत्वं मन्यामहे ज्वालादीनामिव ।

पञ्चिका

नित्यस्यास्ति यथा ज्वालादिषु ; तच्चानेकत्वं ज्वालादीनामविरुद्धम्, कार्यत्वात् ; कार्यं हि तत्र तत्र क्रियमाणं युक्तमनेकम् ; तदाह—कार्यत्वाच्चाविरोध इति । नित्यस्य त्वकार्यत्वादनेकत्वविरोध इति युक्तो हेतुः । "सत्त्वान्तरे च यौगपद्यात्" इति ।

प्रकृतिविकारभावं च शब्दज्ञाः स्मरन्ति ; न चायं नित्यस्योपपद्यते ; तस्मात्स्मृतिरपि पूर्वोक्तहेत्वनुगुणैव । सादृश्यमप्यनुगुणमुपलभामह इत्युपपन्नं कार्यत्वम् ॥

ननु च निरवयवस्य शब्दस्य कथं महत्त्वम् ? सावयवस्य महत्त्वम् ;

# वृद्धिश्च कर्तृभूम्नास्य ॥ ११ ॥

# समं तु तत्र दर्शनम् ॥ १२ ॥

भाष्यम्

अपि च बहुभिरुच्चारयद्भिर्महान् शब्दः श्रूयते ; स यदि अभिव्यज्यते, बहुभिरल्पैश्चोच्चार्यमाणस्तावानेवोपलभ्येत ; अतो मान्यामहे——नूनमस्य एकैकेन कश्चिदवयवः क्रियते, यत्प्रचयादयं महान् उपलभ्यते ॥

तुशब्दात्पक्षो विपरिवर्तते । यदुक्तम् प्रयत्नादुत्तरकाले दर्शनात् कृतकोऽयमिति । यदि विस्पष्टेन हेतुना शब्दस्य नित्यत्वं वक्तुं शक्ष्यामः ; ततो नित्यप्रत्ययसामर्थ्यात् प्रयत्नेनाभिव्यज्यते इति भविष्यति ; यदि प्रागुच्चारणादनभिव्यक्तः प्रयत्नेनाभिव्यज्यते । तस्मादुभयोः पक्षयोः सममेतत् ॥

बृहती

तस्मादनुपलक्ष्यमाणावयवस्यापि अवयववृद्धिरनुमीयते ; ज्वालैवात्र निदर्शनम् ॥

"समं तु तत्र दर्शनम्" । किमिदं समं दर्शनम् ? इदं तत् समं

पञ्चिका

कारणबहुत्वात् कारणविशेष[1]प्रचयाच्च भवतीति । अत्रोपसंहरन्नाह—तस्मादनुपलक्ष्यमाणावयवस्याप्यवयववृद्धिरनुमीयते ; ज्वालैवात्र निदर्शनम् ॥

समं तु तत्र दर्शनम् । किमिदं समं दर्शनम् ? इदं तत् समं

---

१. कारणप्रचयविशेषाच्च. ग.

# सतः परमदर्शनं विषयानागमात् ॥ १३ ॥

भाष्यम्

यदपरं कारणमुक्तम् 'उच्चरितप्रध्वस्तः' इति ।

बृहती

दर्शनम्—कार्ये चाकार्ये च तुल्यो हेतुरिति । कथं तुल्यता ? सांन्यासिकतया । किमत्र संन्यस्तम् ? इदमत्र संन्यस्तम्—यदि सप्रत्यभिज्ञप्रत्यक्षग्राह्यतां वक्ष्याम इति । ननु उक्तं तत् परिहृतं च—ज्वालादिष्विवानुमाने प्रत्यर्थिनि न शक्यत एकतां वक्तुमिति । सत्यम् ; यदि भेदाग्रहणनिबन्धनैव प्रत्यभिज्ञोच्येत ; तद्ग्रहणनिबन्धना सा—इति प्रतिपादयिष्यामः । तस्मादुपपन्नम् "समं तु तत्र दर्शनम्" इति ॥

पञ्चिका

दर्शनम्—कार्ये चाकार्ये च तुल्यो हेतुरिति । कथं तुल्यता ? सांन्यासिकतया । किमत्र संन्यस्तम् ? इदमत्र संन्यस्तम्—यदि सप्रत्यभिज्ञप्रत्यक्षग्राह्यतां वक्ष्याम इति । यदि सप्रत्यभिज्ञप्रत्यक्षग्राह्यता शब्दस्य स्यात्, तदा प्रयत्नानन्तरदर्शनं प्रयत्नस्याभिव्यञ्जकतया भविष्यति ; अथ सप्रत्यभिज्ञप्रत्यक्षग्राह्यता शब्दस्य न स्यात्, तदा प्रयत्नः शब्दस्य कारक एवेति । ननु उक्तं तत् । सप्रत्यभिज्ञं प्रत्यक्षम् । परिहृतं च—ज्वालादिष्विवानुमाने प्रत्यर्थिनि न शक्यत एकतां वक्तुमिति । सत्यम् ; यदि भेदाग्रहणनिबन्धनैव प्रत्यभिज्ञोच्येत ; तद्ग्रहणनिबन्धना सेति प्रतिपादयिष्यते । अस्यार्थः—यदि भेदाग्रहणमात्रं प्रत्यभिज्ञा स्यात्, तदा प्रयत्नानन्तरदर्शनमसत्त्वेनैव स्यात् ; तद्ग्रहणनिबन्धनायां तु प्रत्यभिज्ञायां तद्दर्शेनानुपलभ्यमानमप्यावरणादि शक्यं कल्पयितुमिति । तस्मादुपपन्नम् "समं तु तत्र दर्शनम्" इति ॥

---

१. Omitted. इदमत्र संन्यस्तम्. ग.

भाष्यम्

अत्रापि यदि शक्ष्यामो नित्यतामस्य विस्पष्टं वक्तुम्, ततो नित्यप्रत्ययसामर्थ्यात् कदाचिदुपलम्भम्, कदाचिदनुपलम्भं

बृहती

"सतः परमदर्शनं विषयानागमात्" इति तद्वदनैकान्तिकमदर्शनमपीत्युक्तम्। नन्वेतन्नोपपद्यते ; नित्यस्यादर्शने को हेतुः ? यदि परं विषयानागमः, अस्तु तर्हि। स एवात्र दुर्भणः। किमिति ? नित्यपक्षे ह्यभिव्यङ्ग्यत्वं शब्दस्य ; एकश्चायं शब्द एकविषयश्च आकाशविषयत्वात् ; ग्राहकं चास्याकाशमेव ; केयं विषयानागतिः ? तस्मात् ध्वस्तस्यैवानुपलब्धिर्न्याय्या। केन वोक्तम्—न न्याय्येति ? तद्ग्रहणे तु सति सर्वस्यैवास्यान्याय्यता न्याय्या। अत एवोक्तम्—"यदि शक्ष्यामः" इति।

पञ्चिका

"सतः परमदर्शनं वि[1]षयानागमात्" इति तद्वदनैकान्तिकमदर्शनमपीत्युक्तम्। न[2]न्वेतन्नोपपद्यते। सतोऽदर्शनम्। नित्यस्यादर्शने को हेतुः ? यदि परं विषयानागमः। सोऽपि चानुपपन्न इति भावः। समर्थयते—अ[3]स्तु तर्हि। आक्षिपति—स एवात्र दुर्भणः। किमिति दुर्भणः ? हेतुमाह—नित्यपक्षे ह्यभिव्यङ्ग्यत्वं शब्दस्य ; एकश्च शब्द एकविषयश्च, आकाशविषयत्वात् ; ग्राहकं चास्याकाशमेव। केयं विषयानागतिः ? यदि हि नाना शब्दा भवेयुः, तदा य एव विषयप्राप्तः स एवोपलभ्येत ; नान्यः। तथा यदि नाना देशाः, तदा देशान्तरे नोपलभ्येत ; ग्राहकं चाकाशमेव ; अतो नाप्राप्तता शब्दस्येत्युपलम्भः स्यात्। तस्मात् ध्वस्तस्यैवानुपलब्धिर्न्याय्या। केन वोक्तम्—न न्याय्येति ? तद्ग्रहणे तु सति सर्वस्यैवास्यान्याय्यता न्याय्या ; अत एवोक्तम्—"यदि शक्ष्यामः"

---

१. Omitted. विषयानागमात्. ग. ३. अस्ति. ग.
२. नन्वेवं नोप- ग.

भाष्यम्

**दृष्ट्वा किञ्चिदुपलम्भस्य निमित्तं कल्पयिष्यामः ; तच्च संयोगविभागसद्भावे सति भवतीति 'संयोगविभागावेवाभिव्यञ्जकौ' इति वक्ष्यामः । 'उपरतयोः संयोगविभागयोः श्रूयते' इति चेत् ; नैतदेवम् । न नूनमुपरमन्ति संयोग-**

बृहती

ननु तद्ग्रहणेऽपि नात्र आवरणादिकल्पना आत्मानं लभते । किमिति ? पूर्वक्लृप्तविरोधात् । किं क्लृप्तम् ? आकाशमिन्द्रियम् ; तच्चैकम् । तस्मात् संयोगविभागयोरभिव्यञ्जकत्वे सत्यपि सर्वशब्दानां सर्वैश्चोपलब्धिः प्राप्नोति । युक्तं तावत् सर्वैर्ग्रहणम् ; सर्वशब्दानां तु न युक्तम्, कारणवदभिव्यञ्जकान्यत्वात् । सर्वैश्चोपलब्धिः कार्यपक्षेऽपि तुल्यैव । यश्चोभयदोषः, न तमेकश्चोद्यो भवतीति परिहृतमिदं दूषणं कारकाभिव्यञ्जकयोर्विशेषाभिधानेन विना नैव चोद्येरन् नित्यत्ववादिनः ।

पञ्चिका

इति । **ननु तद्ग्रहणेऽपि नात्र आवरणादिकल्पना आत्मानं लभते । किमिति ? पूर्वक्लृप्तविरोधात् । किं क्लृप्तम् ? आकाशमिन्द्रियम् ; तच्चैकम्** ; अतः संयोगविभागयोरभिव्यञ्जकत्वे सति सर्वशब्दानां सर्वैश्च ग्रहणं प्राप्नोति ; सर्वे हि शब्दाः समानदेशाः ; तत्रैकाभिव्यक्तौ सर्वाभिव्यक्तिः स्यात् घटादिवत् ; आकाशस्थः शब्दोऽभिव्यज्यते ; एकश्चायमाकाशः ; आकाशश्चेन्द्रियमिति सर्वेन्द्रियस्थाभिव्यक्तेः सर्वैरुपलब्धिः स्यात् । अत्र चोदयति—**युक्तं तावत् सर्वैर्ग्रहणम् ; सर्वशब्दानां तु न युक्तम् , कारणवदभिव्यञ्जकान्यत्वात्** । यथा कारणानां भिन्नत्वात् कश्चिच्छब्दः केनचित्क्रियते, तथा कश्चिच्छब्दः केनचिदभिव्यज्यते । **सर्वैश्चोपलब्धिः कार्यपक्षेऽपि तुल्यैव** । सर्वेन्द्रियवर्तिन एवं शब्दस्योत्पत्तेः । **यश्चोभयोः** समो दोषो न तमेकश्चोद्यो भवतीति परिहृतमिदं दूषणं कारकाभि-

१. एकशब्दंस्य. ग.

भाष्यम्

विभागाः, यत उपलभ्यते शब्दः—इति, न हि ते प्रत्यक्षा इति ॥

"यदि शब्दं संयोगविभागा एवाभिव्यञ्जन्ति, न

बृहती

अयमस्ति विशेषः—अभिव्यक्तिः शब्दस्य, इन्द्रियस्य वा स्यात् ? तत्र शब्दाभिव्यक्तौ तावदेकविषयत्वात् सर्वशब्दानां घटादीनामिवैकविषयाणां नाभिव्यक्तिः क्रमेण शक्यते वक्तुम्, अदृष्टत्वात् प्रसिद्धानामभिव्यन्जकानां प्रदीपादीनाम् ; कारणानां तु कार्यदर्शनात् शक्यमनुमानं शक्तेः । नन्वभिव्यन्जकानामप्यभिव्यक्तिदर्शनादेवानुमानं युक्तं शक्तेः । न कार्यपक्षे प्रतिपक्षतया संभवति । को वा विशेषः ?

पञ्चिका

व्यञ्जकयोर्विशेषाभिधानेन विना नैव चोद्येरन्नित्यत्ववादिनः । संप्रति पूर्वपक्षी विशेषमाह—अयमस्ति विशेषः—अभिव्यक्तिर्हि शब्दस्य, इन्द्रियस्य वा स्यात् ? तत्र शब्दाभिव्यक्तौ तावदेकविषयत्वात् सर्वशब्दानां घटादीनामिवैकविषयाणां नाभिव्यक्तिः क्रमेण शक्यते वक्तुम् , अदृष्टत्वात् प्रसिद्धानामभिव्यञ्जकानां प्रदीपादीनाम् । ते हि सर्वानेव समानदेशानभिव्यञ्जयन्ति, न पुनरेकैकम् । कारणानां तु कार्यदर्शनात् शक्त्यनुमानम् । तत्र यदेव कार्यं दृश्यते, तदेव क्रियत इति युक्तम् । नन्वभिव्यञ्जकानामप्यभिव्यक्तिदर्शनादेवानुमानं युक्तं शक्तेः । यथा कार्यविशेषदर्शनात् कारणानां विशिष्टविषयशक्त्यनुमानम् , तथाभिव्यञ्जकानामपि विशिष्टशब्दाभिव्यक्तिदर्शनात् भवत्येव विशिष्टशक्त्यनुमानम् । पूर्वपक्षी ब्रूते—न कार्यपक्षे प्रतिपक्षतया संभवति । सति कार्यतया विशिष्टशब्दोपलब्धावुपपन्नायां न शक्यते भिन्नव्यञ्जकत्वेऽपि विशिष्टविषयशक्त्यनुमानम् ।

१. चैव चोद्यमनित्यत्ववादिनः ग.
२. प्रदीपानाम्. क.
३. शब्दानुमानम् । तत्र ग.
४. तथाहि व्यञ्ज-. ग.

भाष्यम्

कुर्वन्ति; आकाशविषयत्वाच्छब्दस्य, आकाशस्यैकत्वात्, य एवायमत्र श्रोत्राकाशः, स एव देशान्तरेष्वपीति स्रुघ्नस्थैः संयोगविभागैरभिव्यक्तः पाटलिपुत्रेऽप्युपलभ्येत । यस्य

बृहती

प्रसिद्धेषु कारणेषु दर्शनात्, अभिव्यञ्जकेषु चादर्शनात् । दृष्टानुगुणं चानुमानम्, न दृष्टविरोधि । ननु चैकविषयत्वे विरोधः ; विषयान्तरे तु विरोधकथा विरुद्धैव । सत्यम् ; विषयान्तरतैवात्र दुर्वचा । न दुर्वचा । श्रोत्रमाकाशमित्यभ्युपगमात् ; अभिन्नं चाकाशम् ; सर्वशब्दाश्च श्रोत्रविषयाः ; तस्मादेकविषयत्वम् ; विषयैक्याच्च दृष्टविरोधः । किमिदं

पञ्चिका

को वा[1] विशेषः ? कार्यत्वाभिव्यक्तिपक्षयोरित्यर्थः । विशेषमाह—प्रसिद्धेषु कारणेषु बीजादिषु दर्शनाद्विशेषविषयायाः शक्तेः, प्रसिद्धेषु चाभिव्यञ्जकेषु प्रदीपादिष्वदर्शनात् । दृष्टानुगुणं चानुमानं न्याय्यं न दृष्टविरोधि । ननु चैकविषयत्वे विरोधः । अस्यार्थः—यद्येक एव दीपादीनां संयोगविभागानां चाभिव्यङ्ग्यो विषयः स्यात्, तदा विशिष्टविषयाभिव्यक्त्यनुमानं दृष्टविरोधि स्यात् । विषयान्तरे तु विरोधकथा[2] विरुद्धैव । दीपादीनां हि रूपं विषयः ; संयोगविभागानां तु शब्द इति विषयभेदे सति न दृष्टविरोधोऽस्ति । एवमभिप्रायमबुद्ध्वा ब्रवीति—सत्यम् ; विषयान्तरतैवात्र दुर्वचा । शब्दस्य विषयमाकाशं गृहीत्वेदमुच्यते । स्वाभिप्रायेणाह—न दुर्वचेति । पुनरप्याशयमबुद्ध्वैकं[3] विषयतामाह—श्रोत्रमाकाशमित्यभ्युपगमात् ; अभिन्नं चाकाशम् ; सर्वशब्दाश्च श्रोत्रविषयाः ; तस्मादेकविषयत्वम् ; विषयैक्याच्च दृष्टविरोधः । न हि समानविषयाणां रूपादीनां भेदेन दीपादिभिरभिव्यक्तिः । इदानीं स्वाभिप्रायं विवृण्वन्नेकग्रन्थेनाह—किमिदं

---

१. को वा विशिष्टकार्यत्वाभिव्यक्तिपक्षयोरित्यर्थः । विशिष्टमप्रसिद्धेषु कारणेषु. ग.

२. विरोधः तथा. ग.

३. एकां विषयताम्. ग.

भाष्यम्

पुनः कुर्वन्ति, तस्य वायवीयाः संयोगविभागा वाय्वाश्रितत्वाद्वायुष्वेव करिष्यन्ति । यथा तन्तवः तन्तुष्वेव पटम् ।

बृहती

प्रलप्यते ? तदिदमपतितम्—कर्णे स्पृष्टः कटिं चालयति इति ; अभिव्यक्तेर्विषयो निरूप्यते , न पुनः शब्दस्य ; अन्यश्चायं प्रदीपादिविषयाद्विषयः । तस्मात् प्रदीपादिविरोधाच्छब्देऽभिव्यञ्जकानुमानविरोधो न शक्यते वक्तुमित्युक्तम् । तस्मात्तद्ग्रहणनिबन्धनमनुमानं दुर्निवारम् । अतोऽदर्शनमिदानीमनैकान्तिकमित्युक्तम् । ननु श्रोत्रविषयेयमभिव्यक्तिः, न शब्दविषया । 'अभिव्यक्तं हि श्रोत्रं शब्दं गृह्णाति' इत्येतावदभिव्यञ्जके शक्त्यनुमानम्, न पुनः 'अमुं शब्दम् अमुं न' इत्यसंस्पर्शादभि-

पञ्चिका

प्रलप्यते ? तदिदमापतितम्—कर्णे स्पृष्टः कटिं चालयतीति । अभिव्यक्तेर्विषयो निरूप्यते, न पुनः शब्दस्य ; अन्यश्चायं प्रदीपादिविषयाद्विषयः । तेन प्रदीपादिभिः सर्वमभिव्यज्यते ; संयोगविभागैस्तु कश्चिदेव शब्द इति । तस्मात् प्रदीपादिविरोधाच्छब्देऽभिव्यञ्जकानुमानविरोधो न शक्यते वक्तुमित्युक्तम् । शब्दे यदभिव्यञ्जकानुमानम् , न तस्य दृष्टविरोधः शक्यते वक्तुम् । तस्मात् तद्ग्रहणनिबन्धनमनुमानं दुर्निवारम् । शब्दे प्रत्यभिज्ञया तद्ग्रहणे सति यदनुमानमभिव्यञ्जकस्य निय[1]तशक्तिविषयम्, तद्दुर्निवारम् । अतोऽदर्शनमिदानीमनैकान्तिकमित्युक्तम्[2] । नासत्त्वेनैवादर्शनम्, किन्तु अनभिव्यक्तावपि घटत एवेति । पूर्वपक्षी ब्रूते—ननु श्रोत्रविषयेयमभिव्यक्तिः, न शब्दविषया । शब्दविषयत्वे शब्दस्याभिव्यक्तस्य सर्वपुरुषैः श्रवणाप[3]त्तेः । ततः किमित्यत्राह—अभिव्यक्तं हि श्रोत्रं शब्दं गृह्णातीत्येतावदभिव्यञ्जके शक्त्यनुमानम् ; न पुन[4]रमुं शब्दममुन्नेति असं-

---

१. नियतं शक्तिविषयत्वम्. ग. ३. अनुपपत्तेः. ग.
२. Omitted. इत्युक्तम्. ग. ४. पुनः शब्दममुम् अमुं चेति. ग.

भाष्यम्

तस्य पाटलिपुत्रेष्वनुपलम्भो युक्तः, सुदूरस्थत्वात्तेषाम् । 'यस्याप्यभिव्यञ्जन्ति, तस्याप्येष न दोषः, दूरे सत्याः

बृहती

व्यञ्जकानाम् । अयमेव च सिद्धान्तः । स चायमनुमानविरोधीत्युक्तम् । सत्यम् ; प्रसिद्धानुमानबाधनमयुक्तम् । प्रसिद्धप्रत्यक्षबाधनमप्ययुक्तमेव ।

पञ्चिका

स्पर्शादभिव्यञ्जकानाम् । श्रोत्रस्याभिव्यक्तिर्न कार्यविशेषनिष्ठा, किन्तु स्वरूपमात्रेणैव ; ततश्च संस्कृतं श्रोत्रं सर्वशब्दान् शृणुयादिति । यथोक्तम्—

"सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान् प्रकाशयेत् ।
घटायोन्मीलितं चक्षुः पटं न हि न बुध्यते ॥" इति ॥

अयमेव भवतां मीमांसकानां राद्धान्तः, यदुत श्रोत्रसंस्कार इति । स चायमनुमानविरोधीत्युक्तम् । यदीन्द्रियमभिव्यक्तं तत्सर्वानेव विषयान् विषयप्राप्तान् गृह्णीयात् यथोन्मीलितं चक्षुः । तत्र [1]यदि श्रोत्रमभिव्यज्येत संयोगविभागैः ततः सर्वशब्दोपलब्धिः प्रसज्येत ; न चासावस्ति । तस्माद-सत्यामभिव्यक्तौ कृतिरेव शब्दस्यावशिष्यते इति किमत्र [2]तद्ग्रहणं करिष्यति ? तद्ग्रह[3]णेऽपि नाभिव्यञ्जकत्वकल्पना लभ्यत इति परमत्र तद्ग्रहणमेव भ्रमः, ज्वालादिवत् ; न पुनः प्रसिद्धानुमानबाधनं युक्तम् । सत्यं प्रसिद्धानु-मानबाधनमयुक्तम् ; प्रसिद्धप्रत्यक्षबाधनमप्ययुक्तमेव । ननु च न प्रत्यभिज्ञा प्रत्यक्षतया सिध्यति, अनिन्द्रियजत्वात् ; इन्द्रियं हि सन्निहित एव विषये ज्ञानं जनयति ; प्रत्यभिज्ञया च देशान्तरकालान्तरावस्थान्तरविशिष्टवस्तुग्रहणम्, न पुनः सन्निहितदेशकालतया वर्तमानावस्थायोगितया वा ; अत इन्द्रियेणार्थ-मनुभूतवतः पश्चादिदमिन्द्रियविज्ञानजन्यं विकल्पमात्रमुपपद्यत इत्याशङ्क्याह—

---

१. Omitted. यदि. ग.
२. Omitted. तत्. ग.
३. ग्रहणे विना. ग.

भाष्यम्

कर्णशष्कुल्या अनुपकारकाः संयोगविभागाः, तेन दूरे यच्छ्रोत्रम्, तेन नोपलभ्यत इति । नैतदेवम्; अप्राप्ताश्चेत्

बृहती

सप्रत्यभिज्ञं च प्रत्यक्षमात्मनि सामान्यादिषु च स्थितम् । उभयोरबाध्यत्वे सति कस्यचिदर्थस्यासिद्धेरेकस्य बाधनम् ; अनुमानात् प्रत्यक्षं बलीय इति नैयायिकाः । ननु च प्रत्यक्षं भ्रमभाक् । अनुमानेऽपि भ्रान्तिरविशिष्टा । न ब्रूमः—अनुमानेऽपि भ्रान्तिर्नास्ति इति ; किन्त्वत्र भेदाग्रहणात्तद्बुद्धिरतस्मिन्नपि भवति । संभावितभ्रममिति प्रत्यक्षमेव दुर्बलं मन्यामहे । अनयैव प्रकटिताप्रकटितभ्रमकारणतयोक्तं न्यायविद्भिः "भवति वै प्रत्यक्षादप्यनुमानं बलीयः" इति । किं निर्ज्ञातकारणदुष्टतैवात्रोपन्यस्ता ? किं जातम्, यद्युपन्यस्ता ? ननु च विपर्ययाभावात् नैवास्तितयोपन्यसितुं

पञ्चिका

सप्रत्यभिज्ञं च प्रत्यक्षमात्मनि सामान्यादिषु च स्थितम् । यद्यप्येतदिन्द्रियमेकं न लक्षयितुमलम्, तथापि पूर्वानुभवभावितभावनानुभावेन जनयिष्यत इति नानुपपन्नं किञ्चित् । एकग्रन्थेनाह—उभयोरबाध्यत्वे सति कस्यचिदर्थस्यासिद्धेः कार्यस्याभिव्यङ्ग्यस्य चासिद्धेरेकस्य बाधनं युक्तम् ; तत्रापि अनुमानात् प्रत्यक्षं बलीय इति नैयायिकाः । तेन प्रत्यभिज्ञाबलेनाभिव्यञ्जकवैधर्म्यानुमानं बाध्यत इति । ननु प्रत्यक्षं भ्रमभाक् । अतः कथं बलीय इति । अनुमानेऽपि भ्रान्तिरविशिष्टा । अनुमानेऽपि भ्रान्तिविशेषमाह[1]—न ब्रूमः अनुमाने भ्रान्तिर्नास्तीति ; किन्त्वत्र भेदाग्रहणात्तद्बुद्धिरतस्मिन्नपि[2] भवति । ज्वालादिवदिति । संभावितभ्रममितिप्रत्यक्षमेव दुर्बलमिति मन्यामहे । अनयैव प्रकटिताप्रकटितभ्रमकारणतयोक्तं न्यायविद्भिः—"भवति वै प्रत्यक्षादप्यनुमानं बलीयः" इति । इदानीं राद्धान्तच्छायया पृच्छति—किं निर्ज्ञातकारणदुष्टतैवात्रोपन्यस्ता ? निर्ज्ञाता चासौ कारणदुष्टता चेति । पूर्वपक्ष्याह—किं जातं यद्युपन्यस्ता ? यज्जातं तदाह—ननु च विपर्ययाभावान्नैवास्तितयोपन्य-

---

१. अनुमानमपि भ्रान्तमस्ति. विशेषमाह. ग. २. अतस्मिन्नस्ति. ग.

बृहती

शक्यते । किं विपर्यय एव मिथ्यात्वे हेतुः ? कारणदोषोऽप्यसमीचीनहेतुतयोपन्यस्त एव । ननु च कारणदोषः प्रयत्नेनोपलभ्यमानतयोक्तः । कोऽयं प्रयत्नो नाम, योऽसावत्र नास्तीत्युच्यते ? अयमेवासौ प्रयत्नः—अन्यत्र विपर्ययात् कारणदोषं विज्ञाय तद्भावभावितयैव 'एतत्कृतोऽयं विपर्ययः' इति तमन्यत्र विजानाति ; ज्ञाते च तस्मिन् असत्यपि विपर्यये 'भ्रान्तमिदम्' इत्यध्यवस्यति । किमत्रैवंभूतमस्ति ? बाढमस्ति भेदाग्रहणम् ; भेदाग्रहणानिबन्धन एव शुक्तिकादिषु रजतभ्रमः । एवमत्रापि भेदाग्रहणनिबन्धन एव ज्वालादिष्विव तद्भ्रमः । तस्मात् सुष्ठूक्तम्—

पञ्चिका

सितुं शक्यते । न हि साक्षात् भेदज्ञानं शब्दे विद्यते, येन विपर्ययो भवेत् । पूर्वपक्षी पृच्छति—किं विपर्यय एव मिथ्यात्वे हेतुः ? एकग्रन्थेनाह—यावता कारणदोषोऽप्यसमीचीनहेतुतयोपन्यस्त एव । तेन विपर्ययाभावेऽपि कारणदोषान्मिथ्यात्वं भवति[1] । ननु च कारणदोषः प्रयत्नेनोपलभ्यमानतयोक्तः । पूर्वपक्ष्याह—कोऽयं प्रयत्नो नाम, योऽसावत्र नास्तीत्युच्यते ? अयमेवासौ प्रयत्नः—अन्यत्र विपर्ययात्कारणदोषं विज्ञाय तद्भावभावितयैव 'एतत्कृतोऽयं विपर्ययः' इति तमन्यत्र विजानाति ; ज्ञाते च तस्मिन्नसत्यपि विपर्यये 'भ्रान्तमिदम्' इत्यध्यवस्यति । किमत्रैवंभूतमस्ति ? इत्येकग्रन्थः । बाधकप्रत्यये हि जाते मिथ्याभावेऽवगते सति किंनिबन्धनमिदं मिथ्यात्वमिति जिज्ञासमानः कारणदोषतद्भावभावितया तस्यैव तत्र कारणतां निश्चिनोति ; निश्चिते च तस्मिन् यत्रापि बाधकप्रत्ययो नास्ति, तत्रापि मिथ्यात्वहेतुकारणदोषज्ञानेन मिथ्यात्वमध्यवस्यति ; तदेवंविधं किमत्रास्ति ? यावता नास्त्येव, बाधकस्य कदाचिदप्यदर्शनादिति । पूर्वपक्ष्याह—बाढमतिशयेनास्ति भेदाग्रहणम् ; भेदाग्रहणनिबन्धन एव शुक्तिकादिषु रजतभ्रमः ; एवमत्रापि भेदाग्रहणनिबन्धन एव ज्वालादिष्विव तद्भ्रमः[2] । शुक्तिकारजतादिषु साक्षाद्बाधकोदये सति भेदाग्रहणस्य मिथ्यात्वहेतुभावेऽवगते

---

१. भविष्यति. ग. २. तद्ग्रहः. क.

बृहती

शब्द एव तद्ग्रहणं भ्रान्तिः—इति । यस्य तावद्विपरीताकारमर्थे ज्ञानमुत्पद्यते कदाचित्, तस्य युक्तं वक्तुम् 'विपर्ययाभावान्नायं भ्रमः' इति ; यस्य पुनरग्रहणनिबन्धन एव विपर्ययः, तस्य पुनः का शक्तिर्वक्तुमनुमानविरोधे सति ज्वालादिवैषम्यम् ? ननु चाग्रहणमपि पुनर्ग्रहणादवसीयते । न चात्र कस्यांचिदवस्थायां भेदस्य ग्रहणमस्ति सौगन्धिकस्फटिकयोरिव । ज्वालादिषु कथम् ? अनुमानादवगतिरिति चेत्, तत्तुल्यमत्रापि । तस्मात् शब्दविषयं सप्रत्यभिज्ञं प्रत्यक्षमाशापाशमात्रं मीमांसकानाम् । यदप्युक्तमन्यैः—

पञ्चिका

शब्दे बाधकाभावेऽपि भेदाग्रहणनिबन्धनस्तद्ग्रहो भविष्यतीति । तस्मात् सुष्ठूक्तं शब्द एव तद्ग्रहणं भ्रान्तिरिति । पूर्वपक्ष्येवाह—यस्य तावद्विपरीताकारमर्थे ज्ञानमुत्पद्यते कदाचित्, तस्य युक्तं वक्तुम् 'विपर्ययाभावान्नायं भ्रमः' इति । विपरीतख्यातिपक्षे गृहीतमेव नास्तीति ख्यापनीयम् ; तत्र विपरीताकारपरिच्छिन्ने वस्तुन्यनुमानं न क्रमत इति प्रत्यक्षान्तरेण यदि मिथ्यात्वं स्यात्, स्यादपि । यस्य पुनरग्रहणनिबन्धन एव विपर्ययः, तस्य पुनः का शक्तिर्वक्तुमनुमानविरोधे सति ज्वालादिवैषम्यम् ? न हि तस्य मते गृहीतस्य मिथ्यात्वं ख्याप्यते, किं त्वगृहीतभेदो गृह्यते इत्यविरोधेनानुमानमुत्पद्यत एव यथा ज्वालादिष्विति । ननु चाग्रहणमपि पुनर्ग्रहणादवसीयते । न चात्र कस्यांचिदवस्थायां भेदस्य ग्रहणमस्ति सौगन्धिकस्फटिकयोरिव । उपरागोपधानेन स्फटिकः पद्मरागविशेषात्सौगन्धिकाद्भेदेन न गृह्यते, उपरागापगमे तु गृह्यते ; तथेह नास्ति ; तस्मात्कथं भेदाग्रहणमेतदिति कल्प्यते ? पूर्वपक्ष्याह—ज्वालादिषु कथम् ? तत्रापि भेदग्रहः प्रत्यक्षेण नास्तीत्यर्थः । अनुमानाद्भेदावगतिरिति चेत्, तुल्यमत्रानुमानमित्युक्तम् । उपसंहरति—तस्माच्छब्दविषयं सप्रत्यभिज्ञं प्रत्यक्षमाशापाशनिबन्धनं मीमां-

---

१. Omitted. तद्ग्रहण. क. २. मिथ्यात्वम्. क.

बृहती

तुल्येऽपि संस्कार्ये संस्कारभेदात् कार्यान्यत्वमुपलभ्यत इति यथा मण्डूकवसयाक्ताक्षा वंशानुरगानिव पश्यन्ति इति, तदिदमाकाशविजृम्भितम् ; संस्कारो हि नाम स भवति, यः स्वकार्ये शक्तिमुपजनयति ; न चैतदिन्द्रियस्य कार्यम्, यदिदमयथार्थग्रहणम् ; अग्रहणनिबन्धनमेव तदिति प्रतिपादितम् । तस्मादभेदेऽपि संस्कार्यस्य संस्कारान्यत्वेन कार्यान्यत्वं ज्ञापके न विद्यते इत्यन्यत् किञ्चिदुपदर्शनीयम् । यच्च—खड्गदर्पणादिष्वन्यथाभिव्यज्यते मुखमिति, किमुक्तं भवति ? ग्राह्योऽयमुपरागो दृष्टः ; युक्तश्च, अभिव्यञ्जकस्यापि विषयापत्तेः ;

पञ्चिका

सकानामिति । यदप्युक्तमन्यैः—तुल्येऽपि संस्कार्ये संस्कारभेदात् कार्यान्यत्वमुपलभ्यत इति यथा मण्डूकवसयाक्ताक्षा वंशानुरगानिव पश्यन्तीति । अनेनेदमुक्तम्—यद्यप्येकमेव श्रोत्रं संस्कार्यम्, तथापि संस्कारभेदात् कदाचित्किञ्चिदेव शब्दं विषयप्राप्तं ग्रहीष्यति ; यथैकमेव चक्षुर्मण्डूकवसाञ्जनलक्षणसंस्कारभेदात् किञ्चिदेव रूपं गृह्णातीति । दूषयति—तदप्याशापाशविजृम्भितम् ; संस्कारो हि नाम स भवति, यः स्वकार्ये शक्तिमुपजनयति ; न चैतदिन्द्रियस्य कार्यम्, यदिदम[1]यथार्थग्रहणम् ; अग्रहणमेव तदिति प्रतिपादितम् । न मण्डूकवसाञ्जनं नेत्रसंस्कारः, किन्तु शक्तिप्रतिबन्धकमेव ; अत एव वंशाकारस्याप्रतीतिः, उरगाकारस्य स्मरणमिति स्मृतिप्रमोषे दर्शितम् । तस्मादभेदेऽपि संस्कार्यस्य संस्कारान्यत्वेन कार्यान्यत्वं क्वचिदपि ज्ञापके न विद्यते इत्यन्यत् किञ्चि[2]दुदाहरणमुपदर्शनीयम् । न च तच्छक्यते । यच्च खड्गदर्पणादिष्वन्यथाभिव्यज्यते मुखमिति, किमुक्तं भवति ? अभिव्यञ्जकभेदात् किं भेदेन प्रतीयते यथा दर्पणेऽभिव्यञ्जकेऽन्यद्रूपं मुखस्य दृश्यते, खड्गे चान्यदिति ? दूषयति—ग्राह्योऽयमुपरागो दृष्टः । अस्यार्थः—तत्रापि न व्यञ्जकभेदेन ग्रहणम्, किन्त्वेकमेव मुखं गृह्यते ; ग्राह्यं त्वभिव्यञ्जक-

१. अन्यथार्थ. ग.　　२. -दुदाहरणीयम्. क, ग.

## बृहती

इह पुनः श्रोत्रमग्राह्यम्, संयोगविभागावपि । अत इदमप्याकाशविजृम्भितमेव । तस्मात् 'शब्दो नित्यः' इति श्रद्धयैव प्रतिपत्तव्यम्, शब्दात्मकत्वाद्वेदस्य वेदनिन्दा मा भूदिति । पठितं च धर्मशास्त्रकारैः— "स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः" इति । तस्मादनिदंप्रथमतैवात्र शरणम् ; न पुनः शब्दनित्यतापूर्वकमनपेक्षत्वं शक्यते युक्तितो वक्तुम् । कल्प्यतां रागादिविनिर्मुक्तमप्रतिहतज्ञानं करुणाविष्टचेतसं भगवन्तं कंचन मुनिवरम् ; आश्रीयतां वा सुरगुरोर्दर्शनम्—

## पञ्चिका

भूतदर्पणाद्यनुरक्तमिति तद्वशेनान्यदिव भाति । युक्तश्चायमुपरागः, अभिव्यञ्जकस्यापि विषयत्वात् ; इह पुनः श्रोत्रमग्राह्यम्, येन तदनुरागेण प्रतीतिः स्यात् ; संयोगविभागावप्यग्राह्यौ ; तेन तद्वशेनापि भेदप्रतीतिर्नास्ति । तस्मादिदमप्याशापाशविजृम्भितमेव । तस्माच्छब्दो नित्य इति श्रद्धयैव प्रमाणशून्यतया प्रतिपत्तव्यम् । कस्माच्छ्रद्धयैव प्रतिपत्तव्यमित्याशङ्क्याह— शब्दात्मकत्वाद्वेदस्य वेदनिन्दा मा भूदिति । शब्देऽनित्ये शब्दात्मको वेदोऽप्यनित्य इत्यङ्गीकरणीयम् । अनित्यत्वनिन्दायां दोषमाह—पठितं च धर्मशास्त्रकारैः—"स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः" इति । यत एव नित्यता शब्दस्य वक्तुं न शक्यते, तस्मादनिदंप्रथमतैवात्र वेदव्यवहारे शरणम् ; अपरिभावितत्त्वैरपरान् व्यवहरतो दृष्ट्वा वेदस्य व्यवहारः प्रवर्त्यते ; तैरप्यपरव्यवहारदर्शनात् तैरप्येवमिति अयं प्रथम इति नास्ति, अनादित्वात् संसारस्य । न पुनः शब्दनित्यतापूर्वकं वेदस्य प्रामाण्येऽनपेक्षत्वं शक्यते युक्तितो वक्तुम् । यदि पुनरन्धपरम्परातुल्यत्वादनिदंप्रथमतया लोको न व्यवहरति, तर्हि लोकः कल्प्यतां वा रागादिविनिर्मुक्तमाशयदोषरहितं यथादृष्टार्थवादिनं रागादिविनिर्मुक्तत्वेऽप्युपदेशसिद्ध्ये करुणाविष्टचेतसं रागादिविरहेऽपि करुणया रागादिव्यतिरिक्तया परहितबुद्ध्या स्वार्थनिरपेक्षयाविष्टचित्तत्वात् परेभ्य उपदेशस्य दातारमप्रतिहतज्ञानं भगवन्तं कञ्चन मुनिवरं धर्मातिशयसंपन्नं धर्मबलेनैवाप्रतिहत-

बृहती

व्यवहारमात्रमवेदं वेदत्रयाभिहितं पश्यामः प्राज्ञैर्लोकयात्रासिद्ध्यर्थं सुप्रतिबन्धमनुपाल्यमानमिति । इदमेव युक्तं मन्यामहे ; न हि दृष्टे संभवत्यदृष्टकल्पना न्याय्या । दृष्टश्चायमर्थः—यत् प्राज्ञैः ऋजव उपजीव्यन्त इति । यथा च सिद्धमागमवादिनामपि हेतुदर्शनादप्रामाण्यम् "यूपहस्तिनो दानमाचरन्ति" इत्येवमादिषु । कर्तव्यो वा

पञ्चिका

ज्ञानम् । यथाहुः—"आर्षं सिद्धदर्शनं च धर्मेभ्यः" इति । यावद्धयेवंविधः पुरुषो लोकैर्न कल्पितः, तावत्तद्वचनभूताद्वेदादर्थनिश्चयपूर्वको व्यवहारो लोकस्य न सिध्यति । कल्प्यतामिति ण्यन्ताद्द्वितीयो णिच् ; लोकः कल्पयं-स्त्वया वेदव्यवहारसमर्थनवादिना प्रयुज्यतामिति । अथ वेदार्थस्य सकल-प्रमाणाविषयत्वात्तद्विधं पुरुषं लोकः कल्पयितुं न शक्नोति, तदा—आश्रीयतां वा सुरगुरोर्दर्शनम् । संव्यवहारमेवेदमदृष्टप्रयोजनरहितं वेदत्रयाभिहितमर्थं प्राज्ञैर्लोकयात्रासिद्ध्यर्थं स्वकीयां भोजनशयनादिलोकयात्रां साधयितुं सुप्रतिबन्धं सुप्रयुक्तं डम्भात्मकमनुपाल्यमानं पश्याम इति । यदाहुः—

"अग्निहोत्रं त्रयो वेदास्त्रिदण्डं (पुण्ड्रं) भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥" इति ।

इदमेव सुरगुरोर्दर्शनं युक्तं मन्यामहे ; न हि दृष्टे लोकयात्रा-सिद्ध्यर्थत्वे सत्यदृष्टकल्पना न्याय्या ; तेन यदिदमुच्यते—यद्ययमप्रमाणभूतः पौरुषेय एव वेदः, किमिति त्रैवर्णिकानां महतां महता प्रयत्नेन वेदाध्ययनधारणतदर्थानुष्ठानलक्षणो व्यवहार इति, तदन्यथासिद्धं कृतम् ; ऋजुभ्यो डम्भेन जीविकालाभेन प्रयासस्यार्थवत्त्वात् । दृष्टश्चायमर्थः प्राज्ञैः ऋजव उपजीव्यन्त इति । यथाप्रसिद्धमागमवादि-नामपि हेतुदर्शनादप्रामाण्यम् "यूपहस्तिनो दानमाचरन्ति" इत्येव-मादिषु । अस्यार्थः—येऽप्यागमं प्रमाणमिच्छन्ति, तेऽपि "यूपहस्तिनो दानमाचरन्ति" इत्येवमादिषु ऋत्विग्गतलोभलक्षणहेतुदर्शनादप्रामाण्यमाहुः ।

बृहती

सप्रत्यभिज्ञस्य प्रत्यक्षस्य शब्दो विषय इति यत्नः। कथं पुनर्ज्वालादेरिवानुमानाच्छक्यतेऽन्यत्वमवगन्तुम् ? ननु चानुमानादित्युक्तम् । किं तदनुमानम् ? अनभिव्यञ्जकवैषम्यम् । नन्वभिव्यञ्जकानामनेकविषया शक्तिर्दृष्टा । ननु चेदमभिव्यञ्जकविषयमनुमानम् ; कथमन्यविषयमनुमानमन्यविषयस्यावच्छित्तौ हेतुः ? श्रोत्रस्य ह्यभिव्यञ्जकसंस्कारं निरुणद्धि, न पुनः शब्दस्यान्यत्वमवगमयति । ननु चोक्तम्—न चेत् संयोगविभागाः श्रोत्रस्य शब्दग्रहणसमर्थं संस्कारमापादयन्ति, शब्दस्योत्पादकाः प्राप्नुयुः ; उत्पत्तौ चान्यत्वम्—इति । कथम-

पञ्जिका

तथा हि—केनचिदृत्विजा लोभिष्ठेन श्रद्धाप्रधानो यजमानः कश्चिद्यूपहस्तिदानं कारितः ; तद्दर्शनादेषा स्मृतिः कृता—इत्याधारहेतुदर्शनात् द्वयोरपि स्मृत्याचारयोरप्रामाण्यम् ; एवमत्रापि जीविकालोभलक्षणहेतुदर्शनादाचारस्य न प्रामाण्यमिति । अथैतन्नेष्टं तदा कर्तव्यो वा सप्रत्यभिज्ञप्रत्यक्षस्य शब्दो विषय इति यत्नः । संप्रति समाधाताह—**कथं पुनर्ज्वालादेरिवानुमानाच्छक्यतेऽन्यत्वमवगन्तुम् ?** यथा ज्वालादेरनुमानादन्यत्वं शक्यतेऽवगन्तुम्, तथा कथं शब्दस्यान्यत्वं शक्यतेऽवगन्तुम् । आक्षेप्ताह—**ननु चानुमानादित्युक्तम्** । समाधाताह—**किं तदनुमानमिति** । आक्षेप्ताह—**अभिव्यञ्जकानामनेकविषया शक्तिर्दृष्टेति** । येऽभिव्यञ्जकास्तेषामनेकविषया शक्तिः, यथा दीपस्य ; अभिव्यञ्जकाश्च संयोगविभागा भवत इति । समाधाताह—**ननु चेदमभिव्यञ्जकविषयमनुमानम्** । अनेकविषयाभिव्यक्तिसाधकम् । एकग्रन्थेनाह—**कथमन्यविषयमनुमानमन्यविषयस्य** शब्दविषयस्यान्यत्वस्यावच्छित्तौ **हेतुः ?** पुनरप्येकग्रन्थेनाह—**श्रोत्रस्य ह्यभिव्यञ्जकसंस्कारं निरुणद्धि** । एतदनुमानम् 'श्रोत्रमभिव्यञ्जकेन संस्क्रियते' इत्येतन्निराकरोति । **न पुनः शब्दस्यान्यत्वमवगमयति** । आक्षेप्ताह—**ननु चोक्तम्**, न चेत्संयोगविभागाः श्रोत्रस्य संस्कारं शब्दग्रहणसामर्थ्यमादधति, शब्दस्यैवोत्पादकाः प्राप्नुयुः ; **उत्पत्तौ**

बृहती

न्यप्रतिषेधोऽन्यस्योत्पत्तिमवगमयति ? अन्यथा व्यापारानुपपत्तेः । न चेत्संस्कारकाः संस्कुर्युः, किमन्यदतः शब्दोत्पत्तेः ? किं यस्य संस्कारकता नोपपद्येते, तेनोत्पादकेन भवितव्यम् ? न चेदुत्पादकः, निर्व्यापार एव स्यात् ; अन्यार्थता च संयोगविभागयोरुपलब्धा । सत्यम् ; यदर्थाः, तत्र भवन्तूत्पादकाः संस्कारका वा । परप्रतिपत्त्यर्थता च सिद्धा ; तत्तयोर्यदिष्टं तत्परिकल्प्यताम् ; विषयान्तरे पुनः सम्बन्धाभावात् किमास्पदं कल्पनायाः ? तस्मादन्यत्वे हेतुतां संयोगविभागयोः कथमिव नैयायिका मन्यन्ते ? एवं मन्यन्ते—न चेत् श्रोत्रे

पञ्चिका

चान्यत्वमिति । यदि संयोगविभागाः श्रोत्रं न संस्कुर्युः, तदा शब्दोत्पादका एव भवेयुः ; उत्पत्तौ चान्यत्वमिति । समाधाताह—कथमन्यप्रतिषेधोऽन्यस्योत्पत्तिमवगमयति ? श्रोत्रसंस्कारस्य प्रतिषेधे कथमन्यस्य शब्दस्योत्पत्तिरित्यर्थः । आक्षेप्ताह—अन्यथा व्यापारानुपपत्तेः । संस्कारकत्वे प्रतिषिद्धे यदि शब्दोत्पादकत्वं न स्यात्, तदा संयोगविभागयोर्व्यापार एव नोपपद्यते । एकदेश्याह—न चेत्संस्कारं कुर्युः, किमन्यदतः शब्दोत्पत्तेः कुर्युः ? समाधाताह—किं यस्य संस्कारकता नोपपद्यते, तेनोत्पादकेन भवितव्यम् ? आक्षेप्ताह—न चेदुत्पादकः, निर्व्यापार एव स्यात् । भवतु निर्व्यापार इति चेत्तत्राह—अन्यार्थता च संयोगविभागयोरुपलब्धा । तेन व्यापारोऽङ्गीकर्तव्यः; स च संस्कारकत्वे प्रतिषिद्धे शब्दोत्पत्तिविषय इति । समाधाताह—सत्यं यदर्थाः, तत्र भवन्तूत्पादकाः संस्कारका वा ; न पुनः शब्दे, तदर्थत्वाभावात् । किमर्थता तर्हि संयोगविभागयोरित्यत्राह—परप्रतिपत्त्यर्थता च सिद्धा । परः शब्दं प्रतिपद्यताम्—इत्येतदर्थं संयोगविभागौ वायवीयावारभ्येते । तत्रानयोरुत्पादकसंस्कारकत्वयोर्यदिष्टं तत्परिकल्प्यताम् ; विषयान्तरे शब्दे पुनः सम्बन्धाभावात् किमास्पदं कल्पनायाः ? न हि शब्दस्य संयोगविभागयोश्च कश्चित् सम्बन्धः ; प्रतिपत्त्या सह संयोगविभागयोः सम्बन्ध इति यावत् । समाधातोपसंहरति—तस्मादन्यत्वे हेतुतां संयोगविभागयोः कथमिव नैयायिका

बृहती

कार्यमस्ति, शब्दे कार्यं प्रतिपद्यामहे । किं कार्यतस्तादर्थ्यम् ? ओम् इत्युच्यते । सिद्धं तर्हि कार्यं श्रोत्रे ; न संयोगविभागाः शब्दार्थाः—इति मन्यन्ते शब्दविदः । ननु च कार्यदर्शनात् न युक्तं वक्तुं शब्दविदाम् । कार्यदर्शनमेव नास्तीति ब्रुवते, शब्दे तद्ग्रहणात् । किं तर्हि कुर्वन्ति संयोगविभगाः ? श्रोत्रसंस्कारमिति

पञ्चिका

मन्यन्ते ? आक्षेप्ताह—एवं मन्यन्ते—न चेच्छ्रोत्रे कार्यमस्ति, शब्दे कार्यं प्रतिपद्यामहे । अस्यार्थः—प्रतिपत्त्यर्थता तावत्संयोगविभागयोः ; किञ्चित् कुर्वतश्च तादर्थ्यम्, नान्यथा ; तत्र सर्वशब्दोपलब्धिप्रसङ्गेन यदा श्रोत्रे कार्यं नास्ति, तदा शब्दे कार्यं विज्ञायते ; तत्रापि नाभिव्यक्तिः कार्यम्, सर्वपुरुषाणां सन्निकृष्टविप्रकृष्टानामपि युगपच्छब्दोपलब्ध्यापत्तेः । तस्मादुत्पत्तिरेव शब्दे कार्यमिति । समाधाताह—किं कार्यतस्तादर्थ्यम् ? येनैवं ब्रवीषीति । आक्षेप्ताह—ओमित्युच्यते । समाधाताह—सिद्धं तर्हि कार्यं श्रोत्रे ; न संयोगविभागाः शब्दार्थाः—इति मन्यन्ते शब्दविदः । शब्दे तद्ग्रहणान्न शब्दार्थता संयोगविभागयोः । आक्षेप्ताह—ननु च कार्यदर्शनान्न युक्तं वक्तुं शब्दविदाम् । संयोगविभागाः शब्दार्था न भवन्तीति । यदा हि श्रोत्रे सकलशब्दोपलब्धिप्रसङ्गेन संस्कारलक्षणं कार्यं नास्ति, तदा पारिशेष्याच्छब्द एव कार्यं विज्ञायत इति कार्यदर्शनाच्छब्दार्था एव संयोगविभागा इत्यर्थः । समाधाताह—कार्यदर्शनमेव नास्तीति ब्रुवते, शब्दे तद्ग्रहणात् । 'शब्दे कार्यं विज्ञायते—इत्येतदेव नास्ति' इति ब्रुवते शब्दविदः । कुतः ? शब्दे तद्ग्रहणात् । 'स एवायं शब्दः' इति शब्दस्य तत्प्रत्ययात् उत्पत्तिस्तावन्न कार्यम्, उत्पत्तौ सत्यामन्यत्वस्यावश्यंभावित्वात् ; स इति प्रत्ययविरोधात् ; न च शब्देऽभिव्यक्तिः संभवतीति । उभयवादिसंमतमाक्षेप्ताह—यदि शब्दस्योत्पत्तिं न कुर्वन्ति, किं तर्हि कुर्वन्ति संयोगविभागाः ? समाधाताह —श्रोत्रसंस्कारं कुर्वन्तीति ब्रूमः । आक्षेप्ताह—ननु चान्यैर्नयनोन्मीलनादिभिरिन्द्रियसंस्कारकैः समानदेशवर्तिसकलरूपाद्युपलम्भहेतुभिः सहामीषां

## बृहती

**ब्रूमः। ननु चान्यैः संस्कारैः वैलक्षण्यमत्र नोपपद्यते—इत्युक्तम्। अनुमानात् कार्याभावं मन्यते भवान्; वयं तु प्रत्यक्षादुत्पत्तिं नेच्छामः; प्रत्यक्षानुमानयोश्च प्रत्यक्षं बलीय इति सिद्धम्। ननु चाग्रहणं भ्रमहेतुरित्युक्तं ज्वालादीनामिव। इह तु अग्रहणमेवासिद्धम्।**

## पञ्चिका

संयोगविभागानां श्रोत्रसंस्कारकत्वेनाभ्युपगतानां प्रतिनियतशब्दोपलम्भहेतुतारूपविलक्षणता नोपपद्यत इत्युक्तम्। समाधाताह—**अनुमानात् कार्याभावं मन्यते भवान्; वयं तु प्रत्यक्षादुत्पत्तिं नेच्छामः; प्रत्यक्षानुमानयोश्च प्रत्यक्षं बलीय इति सिद्धम्।** अस्यार्थः—श्रोत्रे कार्यं न भवतीत्यभिव्यञ्जकसामान्यानुमानात् भवान् मन्यते, श्रोत्रे च कार्याभावमनुमानेनावगम्य शब्दे तद्ग्रहणबाधनीमुत्पत्तिं कल्पयति; वयं तु सप्रत्यभिज्ञात् प्रत्यक्षात् शब्दस्यैकतां प्रतिपद्यमाना उत्पत्तिमनिच्छन्तः श्रोत्रसंस्कारमभिव्यञ्जकसामान्यानुमानप्रसक्तसकलोपलम्भबाधेन नियतशब्दविषयं कल्पयामः; एवं च त्वदीयं शब्दोत्पत्त्यनुमानम् अनुमानान्तरपूर्वकम्; अस्मदीयं तु प्रत्यक्षपूर्वकं नियतशब्दविषयश्रोत्राभिव्यक्तिकल्पनम्; प्रत्यक्षानुमानयोश्च शीघ्रप्रवृत्ततया प्रत्यक्षं बलीय इति सकलवादिनां सिद्धम्; अनुमाने तु सम्बन्धव्याप्तिग्रहणस्मरणपक्षधर्मताध्यवसानलक्षणा सामग्री[1] बहुतरविलम्बसंपादनीया[2]; प्रत्यक्षे तु नार्थान्तरपरिग्रहसव्यपेक्षा कांचिदस्तीति[3] शीघ्रतरप्रवृत्तानुमानवशेनैव वस्तुनिर्णय इति—युक्तं तद्ग्रहणे सति नियतविषयाभिव्यक्तिजनकत्वं संयोगविभागयोः। आक्षेप्ताह—**ननु चाग्रहणं भ्रमहेतुरित्युक्तं ज्वालादीनामिव।** अस्यार्थः—यदि तद्ग्रहणमेवेदं सिद्धं स्यात्, तदा तद्बलभाव्यनुमानं बलीयो भवेत्; यावता यथा ज्वालादिषु भिन्नेष्वपि भेदाग्रहणमात्रात्तद्ग्रहणं[4] भ्रमः, तथा अयमपि तद्ग्रहणभ्रम एवेति कथमेतत्पूर्वकमनुमानं बलीय इति। समाधाताह—**इह त्वग्रहणमेवासिद्धम्।**

---

१. सामग्रीबहुता. क.  
२. संवेदनीया. ग.  
३. कदाचित्. क.  
४. ग्रहणाद्भ्रमः. ग.

## बृहती

तत्र कथम् ? कार्यानुमानात् । इह पुनस्तदद्यापि न सिध्यति ; न चासिद्धं सिद्धौ पर्याप्तम् । प्रत्यक्षं चानपेक्षत्वात् सिद्धम् । अनुमाने वा कापेक्षा ? इयमेवापेक्षा—सिद्धेऽनुमाने कार्यम्, कार्ये च सत्यनुमानमिति ; न पुनरेवं प्रत्यक्षं तद्ग्रहणापेक्षम् ; प्रत्यक्षादेव हि तद्ग्रहणम् । किञ्च, संयोगविभागौ श्रोत्रार्थतयान्यतः प्रसिद्धौ ।

## पञ्चिका

नात्र भेदाग्रहणमेतदिति निश्चितम् ; तेन प्रतीतिबलात्तद्ग्रह एवायमिति सिद्धमेतत्पूर्वकस्यानुमानस्य बलीयस्त्वम् । आक्षेप्ता साम्यापादनाभिप्रायेणाह—तत्र ज्वालादौ कथमग्रहणसिद्धिरिति । समाधातोत्तरमाह—**कार्यानुमानात्** । प्रभावितितिलक्षणात् कार्याज्ज्वालादिषु भेदानुमानात् भेदाग्रहणं सिद्धम् ; इह तु तदेव कार्यं भेदानुमानहेतुभूतमद्यापि न सिद्धम् । न चासिद्धं शब्दे भेदाग्रहण-सिद्धौ पर्याप्तं भवति । प्रत्यक्षं त्वनपेक्षत्वात् सिद्धम् । आक्षेप्ताह—**अनुमाने वा कापेक्षा ?** न काचिदपेक्षेत्यर्थः । समाधाताह—**इयमेवापेक्षा—सिद्धेऽनुमाने कार्यम्** । नात्र प्रभातुल्यं कार्यं प्रत्यक्षसिद्धमस्तीत्यनुमानत एव कार्यमवगन्तव्यम्; अतः सिद्धेऽनुमाने कार्यं विज्ञेयम् ; **कार्ये च सत्यनुमानम्** । यदपि तदनुमानम्, तदपि लिङ्गापेक्षमिति तस्य कार्यं लिङ्गं वक्तव्यम् ; अतः कार्ये सत्यनुमानेन प्रवर्तितव्यम् ; अतोऽनुमेयकार्यापेक्षत्वात् सापेक्ष-मनुमानम् । न च तदनुमेयं कार्यमस्तीति नानुमानात् भेदाग्रहणम् । असति भेदाग्रहणे तद्ग्रहणमेतदिति सिध्यति । **न पुनरेवं प्रत्यक्षं तद्ग्रहणापेक्षम्** । यथानुमानं भेदाग्रहणापेक्षम्, नैवं प्रत्यक्षं तद्ग्रहणा-पेक्षम् ; प्रत्यक्षादेव हि तद्ग्रहणं सिध्यति । एतदुक्तं भवति—यावद्धि भेदाग्रहणनिबन्धनोऽयं भ्रम इति प्रत्यक्षमन्यथासिद्धं न क्रियते, न तावत्तद्बलभाव्यनुमानं निरोद्धुं शक्यते; अनिरुद्धे च तस्मिन् शब्दोत्पत्त्यनुमानं नात्मानं लभते ; तेन भेदाग्रहणसापेक्षमनुमानम्, प्रत्यक्षं तु न किञ्चि-दपेक्षत इति । युक्त्यन्तरं चाह—**संयोगविभागौ च श्रोत्रार्थतया-न्यतः प्रसिद्धौ** । तेन यदर्थतया संयोगविभागौ प्रसिद्धौ, तत्रैव

### बृहती

कुतोऽन्यतः ? उक्तम् "दर्शनस्य परार्थत्वात्" इति लोकतः। तस्मात् तादर्थ्ये सति यथा संभवति तथा कार्यं कल्पनीयम्। न कार्यतस्तात्पर्यम्, अन्यतोऽनवगमात् इत्युक्तम्। तस्मान्नात्र ज्वालादीनामिव प्रमाणमस्ति। तस्मात् "सतः परमदर्शनम्" इति युक्तमनैकान्तिकत्वम्। कथं तर्ह्येकविषयैवाभिव्यक्तिः शक्यते वक्तुम् ? कार्यदर्शनात् युक्ता अदृष्टस्य कल्पना ; अतो दृष्टस्य तद्ग्रहणस्य नापह्नवो न्याय्यः। कार्यान्तरदर्शनात्तु कारणान्यत्वकल्पना न्याय्यैवेति।

### पञ्चिका

संस्कारजनकाविति युक्तम्। **कुतोऽन्यतः ?** श्रोत्रार्थतया प्रसिद्धौ। **उक्तम् "दर्शनस्य परार्थत्वात्" इति लोकतः।** दर्शनस्योच्चारणस्य परार्थत्वात् परप्रतिपत्त्यर्थत्वाच्छ्रोतृगतशब्दप्रतिपत्त्यर्थत्वाच्छ्रोतर्येव कार्यं न्याय्यम् ; तत्र श्रोतरि कार्यासंभवात् तदीये श्रोत्रे कार्यं युक्तम्। **तस्मात् तादर्थ्ये** परप्रतिपत्त्यर्थत्वे **सति यथा संभवति** कार्यम्, **तथा कार्यं कल्पनीयम्** ; तत्र श्रोतर्यसंभवाच्छ्रोत्र एवेत्युक्तम्। **न** पुनः शब्दगतं कार्यं परिकल्प्य शब्दार्थत्वम् ; **अन्यतः** कार्यस्य शब्दवर्तिनोऽनवगमादित्युक्तम् 'शब्दे तद्ग्रहणात्' इति। समाधातोपसंहरति—**तस्मान्नात्र**ान्यत्वे **ज्वालादीनामिव प्रमाणमस्ति।** प्रकृतं निगमयति—**तस्मात् सतः परमदर्शनमिति युक्तमनैकान्तिकत्वम्।** आक्षेप्ताह—यदि श्रोत्रे कार्यम्, **कथं तर्ह्येकविषयैवाभिव्यक्तिः शक्यते कल्पयितुम् ?** अत्यन्तानुपपन्नमेतत्—यत् कश्चिदेव शब्दं गृह्णाति, कश्चिन्नेति, सर्वेषां सन्निहितत्वादिति। समाधत्ते—**कार्यदर्शनात्** प्रतिनियततत्तच्छब्दाभिव्यक्तिलक्षणकार्यदर्शनाद्युक्तमन्यत्राऽदृष्टस्य प्रतिनियतोपलम्भनसामर्थ्यस्य कल्पनम्, न पुनर्दृष्टस्य तद्ग्रहणस्य शब्दवर्तिनोऽपह्नवो न्याय्य इति। नन्वेवं सति बहवः संयोगविभागा अङ्गीकरणीया अभिव्यञ्जकाः, अन्यथा कथं प्रतिनियमेनानेकशब्दोपलम्भः स्यात् ? तदङ्गीकारे च कल्पनागौरवमित्यत्राह—**कार्यान्तरदर्शनात्तु कारणान्यत्वकल्पना न्याय्यैवेति।** "उपरतयोः संयोगविभागयोः

भाष्यम्

उपरतयोः संयोगविभागयोः श्रूयते इति चेन्नैतदेवम् ; न नूनमुपरमन्ति संयोगविभागाः, यत उपलभ्यते शब्दः ;

बृहती

"उपरतयोः संयोगविभागयोः" इति कौ तौ संयोगविभागावभिप्रेतौ ? ताल्वादीनामिति ब्रूमः । कुत एतत् ? उपरतयोरिति श्रवणात् ; वायवीयानामुत्पत्तिरुपरतिश्चानुमेया । "न नूनमुपरमन्ति" इति कोऽभिप्रायः ? वायवीयान् संयोगविभागान् मनसि कृत्वा कार्यसमधिगम्यत्वादिदमुत्तरम् "न हि ते प्रत्यक्षाः"—इति स्पष्टी-

पञ्चिका

श्रूयत इति चेत्, नैतदेवम् ; न नूनमुपरमन्ति संयोगविभागाः, यत उपलभ्यते शब्दः ; न हि ते प्रत्यक्षाः" इति भाष्यमनुभाषितम् । अत्र चोद्यभाष्ये "उपरतयोः संयोगविभागयोः" इति कौ तौ संयोगविभागावभिप्रेतौ ? ययोरुपरतयोरपि शब्द उपलभ्यत इति चोद्यत इत्यर्थः । उत्तरम्—ताल्वादीनां संयोगविभागावभिप्रेताविति ब्रूमः । कुत एतत् ? उत्तरम्—भाष्ये "उपरतयोः" इति श्रवणात् । ननु यद्यप्येवं श्रूयते, तथापि किमिति वायवीयावपि न प्रतीयेते ? तत्राह —वायवीयानां तूत्पत्तिरुपरतिश्चानुमेया । अस्यार्थः—यदि वायवीयाभि-प्रायेणेदमुच्यते, तदा तयोः कार्यगम्ययोः कार्ये सत्युपरतिरेव न शक्यते वक्तुम् ; वक्ति च ; ततोऽवगच्छामः—ताल्वादिसंयोगविभागाभिप्रायेणेदमुच्यत इति । तेनायं चोद्यभाष्यार्थः—ताल्वादीनां संयोगविभागावभिव्यञ्जकौ न भवतः, उपरतयोरपि तयोः शब्दश्रवणादिति । अत्र परिहारभाष्यम् "न नूनमुपरमन्ति संयोगविभागाः" इति । अत्र कोऽभिप्रायः ? वायवीयान् संयोगविभागान् मनसि कृत्वा कार्यसमधिगम्यत्वादिदमुत्तरम् । कार्यसमधिगम्या वायवीयाः संयोगविभागाः कार्ये सति नोपरता इत्यभिप्रायः ; वायवीयाभिप्रायेणैवेदमुत्तर-मित्येतत् "न हि ते प्रत्यक्षाः" इत्यनेन भाष्येण स्पष्टीकृतम् । ताल्वादीनां तु

भाष्यम्

न हि ते प्रत्यक्षा इति। यदि शब्दं संयोगविभागा एवाभिव्यञ्जन्ति, न कुर्वन्ति; आकाशविषयत्वाच्छब्दस्य, आका-

बृहती

कृतम् । यद्येवम्, इदानीमुत्तरग्रन्थो नोपपद्यते "आकाशविषयत्वात्तस्य, एकत्वाच्चाकाशस्य" इति । कथं नोपपद्यते ? वायवीयानामभिव्यञ्जकत्वे कार्यपक्ष इव 'यत्र ते, तत्रैवोपलब्ध्या भवितव्यम्' इत्येवं नोपपद्यते । अथायमभिप्रायः—अभिव्यक्तिपक्षे नैव वाय्वाश्रिताः शब्दा भवन्ति । किं तर्हि ? आकाशस्था एव । येषां पुनः क्रियन्ते,

पञ्चिका

संयोगविभागौ प्रत्यक्षावेवेति तदभिप्रायेण 'न हि ते संयोगविभागाः प्रत्यक्षाः' इति वचनं नैव घटते ; अतो वायवीयाभिप्रायेणैव परिहारः । आक्षिपति—यद्येवं स्पष्टीकृतम्, इदानीमुत्तरग्रन्थो नोपपद्यते "आकाशविषयत्वात्तस्य, एकत्वाच्चाकाशस्य" इति । कथं नोपपद्यते ? वायवीयानामभिव्यञ्जकत्वे कार्यपक्ष इव 'यत्र ते, तत्रैवोपलब्ध्या भवितव्यम्' इत्येवं नोपपद्यते । अस्यार्थः—भाष्ये हि "यदि संयोगविभागाः शब्दमभिव्यञ्जन्ति, न कुर्वन्ति, तदा आकाशविषयत्वात्तस्यैकत्वाच्चाकाशस्य य एवायमत्र श्रोत्राकाशः स एव देशान्तरेष्वपीति स्रुघ्नस्थैरभिव्यक्तः पाटलिपुत्रेऽप्युपलभ्येत" इत्यनेन ग्रन्थेन संयोगविभागानां शब्दाभिव्यञ्जकत्वे एकत्राभिव्यक्तस्य सर्वत्रोपलब्धिः स्यादिति चोद्यं कृतम् ; तच्च वायवीयानामभिव्यञ्जकत्वे नोपपद्यते, तेषां प्राप्याभिव्यञ्जकत्वात् । तेन यत्रैव ते, तत्रैवाभिव्यक्तिर्भविष्यति । ताल्वादिसंयोगविभागाभिप्रायेण तु चोद्यमिदमुपपद्यते, तयोरप्राप्याभिव्यञ्जकत्वात् । आक्षेप्तैव समाधातुराशङ्कामुपन्यस्यति—अथायमभिप्रायः, अभिव्यक्तिपक्षे न वाय्वाश्रिताः शब्दा भवन्ति । किं तर्हि ? आकाशस्था एव । तेनैकत्वात् सर्वत्राकाशस्य सर्वत्रोपलभ्यत इत्युपपद्यते चोद्यमभिव्यक्तिपक्षे । येषां पुनः

भाष्यम्

शस्यैकत्वात्, य एवायमत्र श्रोत्राकाशः, स एव देशान्तरेष्वपीति सुघ्नस्थैः संयोगविभागैरभिव्यक्तः पाटलिपुत्रेऽप्यु-

बृहती

तेषां वायवीयाः संयोगविभागा असमवायिकारणतां प्रतिपद्यन्ते। तदेव समवायिकारणं भवति। यत्रैव कारणम्, तत्रैव कार्योपलब्धिरिति युक्तम्। एवमपि निर्ज्ञाते वायवीयसंयोगविभागयोरभिव्यक्तिकारणत्वे यत्रैवाभिव्यञ्जकम्, तत्रैवाभिव्यक्तिः; यथा यत्रैव कारणम्, तत्रैव कार्यम्। अथैतन्मन्यसे—कार्ये एतद्युक्तम्, नाभिव्यक्ताविति, तदयुक्तम्; अभिव्यक्तिरपि कार्यमेव; अभिव्यङ्ग्यं तु

पञ्चिका

क्रियन्ते, तेषां वायवीयाः संयोगविभागा असमवायिकारणतां प्रतिपद्यन्ते। यदा चैते असमवायिकारणभूताः तदा तदेव वायुद्रव्यं समवायिकारणं भवति; समवायिकारणप्रत्यासन्नं ह्यसमवायिकारणं भवति, यथा तन्तुषु समवायिकारणभूतेषु समवेतास्तन्तुसंयोगाः पटस्य तन्तुसमेवतस्य, यथा च तन्तुरूपाणि तन्तुसमवेतपटरूपोत्पत्तौ; तेन वायुप्रत्यासन्ना वायवीयाः संयोगविभागा इति वायुरेव समवायिकारणम्। यत्र च समवायिकारणम्, तत्रैव कार्योपलब्धिः; यथा यत्र तन्तवस्तत्रैव पटोपलब्धिरिति युक्तमिति। इदानीमिमामाशङ्कां दूषयति—एवमपि निर्ज्ञाते वायवीयसंयोगविभागयोरभिव्यञ्जकत्वे चोद्यं नोपपद्यते। यस्मात् यत्रैवाभिव्यञ्जकम्, तत्रैवाभिव्यक्तिः यथा यत्रैव कारणम्, तत्रैव कार्यमिति। अज्ञातेषु तु वायवीयेषु ताल्वादिसंयोगविभागानामप्राप्यकारित्वे युज्येतापि चोद्यम्; तच्च नास्ति, स्पष्टीकृतत्वाद्वायवीयाभिप्रायस्य। पुनरपि समाधातुराशङ्कामाक्षेप्तैवाह—अथ मन्यसे कार्य एवैतद्युक्तम्, कारणदेशोपलभ्यत्वम्, नाभिव्यक्ताविति। दूषयति—तदयुक्तम्; अभिव्यक्तिरपि कार्यमेव। तेनाभिव्यक्तिरपि कारणदेशैव युक्ता; अभिव्यञ्जकं च तस्याः कारणमिति यत्रैवाभिव्यञ्जकम्, तत्रैवाभिव्यक्तिः। यद्यभिव्यक्तिरपि कार्यं कस्तर्हि कारणाभि-

भाष्यम्

पलभ्येत । यस्य पुनः कुर्वन्ति, तस्य वायवीयाः संयोग-विभागा वाय्वाश्रितत्वाद्वायुष्वेव करिष्यन्ति यथा तन्तव-स्तन्तुष्वेव पटम् ; तस्य पाटलिपुत्रेष्वनुपलम्भो युक्तः, सुघ्नस्थत्वात्तेषाम् । यस्याप्यभिव्यञ्जन्ति, तस्याप्येष न दोषः,

बृहती

पूर्वोत्पन्नम् ; अतो यद्देशाभिव्यक्तिः, तत्रैवोपलब्धिरिति तुल्यमुभयोरपि पक्षयोः । तस्माद्व्याख्येयोऽयं ग्रन्थः । अविशेषज्ञो देवानां प्रियः । कार्यं हि कारणदेशं भवति ; अकार्यं पुनर्न परापेक्षदेशम् । तस्मादभिव्यक्तिर्भवत्वभिव्यञ्जकदेशा अभिव्यङ्ग्यं तु किमिति तद्देशम्, अतज्जन्यत्वादभिव्यङ्ग्यस्य ? तद्देशस्य अभिव्यङ्ग्यत्वाभिमत-शब्ददेशस्य चैकत्वादाकाशस्य सर्वैर्ग्रहणं प्राप्नोति ज्ञातेष्वपि वायवीय-

पञ्चिका

व्यञ्जकयोर्भेद इत्यत्राह—अभिव्यङ्ग्यं तु पूर्वोत्पन्नम् । अभिव्यक्तिरसती सतीक्रियते ; अभिव्यङ्ग्यं पूर्वोत्पन्नम् ; तेनाभिव्यङ्ग्याभिप्रायेणाभिव्यञ्जकता ; अभिव्यक्त्यभिप्रायेण तु कारणतैव । अतो यद्देशाभिव्यक्तिः, तत्रैवोपलब्धिरिति तुल्यमुभयोरपि पक्षयोः । आक्षिप्योपसंहरति—तस्मात् व्याख्येयोऽयं ग्रन्थः । समाधत्ते—अविशेषज्ञो देवानां प्रियः ; कार्यं हि कारणदेशं भवति । कारणाधीनसिद्धित्वात्तदभावे तस्याभावात् । अकार्यं पुनर्न परापेक्षदेशम् । यत एवं तस्मादभिव्यक्तिर्भवत्वभिव्यञ्जकदेशा । कार्य-भूतत्वात् । अभिव्यङ्ग्यं पुनः किमिति तद्देशम्, अतज्जन्यत्वादभि-व्यङ्ग्यस्य ? तद्देशस्य च अभिव्यङ्ग्यत्वाभिमतशब्ददेशस्य चाकाशस्यै-कदेशत्वात् सर्वैर्नानादेशावस्थितैरपि ग्रहणं भवति । ननु यद्यप्यभिव्यङ्ग्यं सर्वदेशेषु तथाप्यभिव्यक्तेः प्रादेशिकत्वात् सर्वत्रोपलब्धिर्न युज्यते । उच्यते —नाभिव्यञ्जकसमवेताभिव्यक्तिः । किं तर्हि ? अभिव्यङ्ग्यसमवायिनी ; अभिव्यङ्ग्यं चानवयवशोऽभिव्यक्तं सर्वत्रैकरूपमिति युक्तं सर्वत्र ग्रहणम् ।

भाष्यम्

दूरे सत्याः कर्णशष्कुल्या अनुपकारकाः संयोगविभागाः, तेन दूरे यच्छ्रोत्रम्, तेन नोपलभ्यत इति । नैतदेवम्; अप्राप्ताश्चेत् संयोगविभागाः श्रोत्रस्योपकुर्युः; सन्निकृष्टविप्रकृष्टदेशस्थौ युगपच्छब्दमुपलभेयाताम्; न च युगपदुप-

बृहती

संयोगविभागेषु ; सर्वश्रोत्रेष्वेकमाकाशं यतः । सत्यम् ; यथा भवानाह—यदि शब्दस्याभिव्यञ्जकाः संयोगविभागाः स्युः ; श्रोत्रस्य त्वभिव्यञ्जकाः ; श्रोत्रस्य च श्रोतृदेशतैव । ननु चाकाशमेव श्रोत्रम् ; तच्चान्यत्रापि तुल्यं शब्दाभिव्यक्त्या । उच्यते—सत्यं सर्वत्राकाशमेकम् ; किन्तु तस्य श्रोत्रभावः श्रोतृदेश एव, कर्त्रभिसम्बन्धेन करणत्वात् ; कर्तुर्भोगायतनवशेन शरीरदेश एव कर्तृत्वान्न तुल्यता । तस्मादुत्पत्ताविवाभिव्यक्तावपि न सर्वैरुपलब्धिः । 'नैतदेवम् ; अप्राप्ताश्चेदुपकुर्वन्ति, सन्निकृष्टविप्रकृष्टदेशस्थितौ युगपच्छब्दमुपलभेयाताम्'

पञ्चिका

एवं च 'तस्मादभिव्यक्तिर्भवत्वभिव्यञ्जकदेशा' इत्यभ्युपगम्यवादोऽयमिति युक्तं ज्ञातेष्वपि वायवीयेषु संयोगविभागेषु चोद्यम् ; सर्वश्रोत्रदेशेष्वेकमाकाशं यतः ; एकत्वेन ह्याकाशस्याकाशविषयः शब्दः सर्वत्रोपलभ्येतेति युक्तमेव तच्चोद्यम् । परिहरति—यथाह भवान् तथा स्यात्, यदि शब्दस्याभिव्यञ्जकाः संयोगविभागाः स्युः ; श्रोत्रस्य त्वभिव्यञ्जकाः । संस्कारका ह्यमी । श्रोत्रस्य च श्रोतृदेशतैव । ननु चाकाशमेव श्रोत्रम् ; तच्चान्यत्रापि तुल्यं शब्दाभिव्यक्त्या । उच्यते—सत्यं सर्वत्राकाशमेकम् ; किन्तु तस्य श्रोत्रभावः श्रोतृदेश एव, कर्त्रभिसम्बन्धेन करणत्वात् ; कर्तुर्भोगायतनवशेन शरीरदेश एव कर्तृत्वादिति । न शब्दाभिव्यक्तितुल्यता । उपसंहरति—तस्मादुत्पत्ताविवाभिव्यक्तावपि न सर्वैरुपलब्धिः । नैतदेवम्, अप्राप्ताश्चेदुपकुर्वन्ति, सन्निकृष्टविप्रकृष्टदेशस्थितौ युगपच्छब्दमुपलभेयाताम्

भाष्यम्

लभेते । तस्मान्नाप्राप्ता उपकुर्वन्ति ; न चेदुपकुर्वन्ति, तस्मादनिमित्तं शब्दोपलम्भने संयोगविभागा इति ।

बृहती

इति । ननु श्रोत्रसंस्कारपक्षे 'दूरस्थितं श्रोत्रं न संस्क्रियते' इति वदतां प्राप्तैरेव संस्कार इत्युक्तम् ; असत्यां च प्राप्तौ दूर-सन्निकृष्टव्यपदेश एव न घटते । किमिदम् 'अप्राप्ताश्चेदुपकुर्वन्ति' इति ? अप्राप्ताशङ्कैव नास्ति, "दूरे सत्याः"—इत्यभिधनात् । तस्मान्न विद्मः कथमिदं भाष्यमायातम् ? एवमिदमायातम्—श्रोत्र-संस्कारपक्षे सर्वगतत्वाच्छब्दस्य यावति कार्यगम्यः संस्कारः, तावति

पञ्चिका

इति । भाष्यमनुभाषितमाक्षेप्तुम् ; आक्षिपति—ननु श्रोत्रसंस्कारपक्षे 'दूरस्थितं श्रोत्रं न संस्क्रियते' इति वदतां प्राप्तैरेव संस्कार इत्युक्तम् । कथं पुनः 'दूरस्थितं न संस्क्रियते' इति वदतां प्राप्तैरेव संस्कार इत्युक्तं भवति ? तत्राह —असत्यां च प्राप्तौ दूरसन्निकृष्टव्यपदेश एव न घटते । 'इदं दूरं श्रोत्रम्' इति व्यपदेशः सन्निकृष्टश्रोत्रापेक्षया भवति ; सन्निकृष्टता च प्राप्तस्य भवति, नाप्राप्तस्य ; अतः प्राप्तैरेव संस्काराभिधानात् 'अप्राप्ताश्चेदुपकुर्वन्ति' इत्यनेन ग्रन्थेन किमिदमुक्तम् ? अत्राप्राप्ताशङ्कैव नास्ति, "दूरे सत्याः" इत्यभिधानात् । "दूरे सत्याः कर्णशष्कुल्या अनुपकारकाः" इति ग्रन्थेन दूरस्थं न संस्क्रियत इति प्रतिपादितम् । तस्मान्न विद्मः कथमिदं भाष्यमायात-मिति । समाधत्ते—एवमिदमायातम्—श्रोत्रसंस्कारपक्षे सर्वगतत्वात् शब्दस्य यावति कार्यगम्यः संस्कारः, तावति युगपद्ग्रहणम् । यावति भूभागे शब्दोपलम्भः, तावति युगपदेवोपलम्भः श्रोत्रसंस्कारपक्षे स्यात्, शब्दस्य सर्वगतत्वात् । यदि हि यावच्छब्द एव प्रादेशिकः, तदा क्रमेण संगच्छमानः श्रोत्रेणापि क्रमेणैवोपलभ्यते ; सर्वगतत्वात्त्वसौ सर्वत्रैव युगपदस्तीति युगपदेवोप-

१. गतत्वान्न त्वसौ. क.

बृहती

**युगपद्ग्रहणं प्राप्नोति । कोऽभिप्रायः ? ननु च वायवीयाः संयोगविभागाः नैवाप्राप्य श्रोत्रं संस्कर्तुं क्षमाः । न हि संयोगविभागैः संयोगविभागान्तरमारभ्यत इति शक्यते वक्तुम्, उभयप्रसङ्गात् ; न ह्येकस्मिन् कार्ये कारणद्वयकल्पना घटते ; कार्यं हि कारणमवगमयति, न पुनः कार्यान्तरमपि । तस्मादुत्पत्तिपक्ष एवैतदुपपद्यते—यावद्वेगं**

पञ्चिका

लब्धिः स्यात् । **कोऽभिप्रायः ?** एकग्रन्थेनाह—**ननु[1] च वायवीयाः संयोगविभागाः नैवाप्राप्य श्रोत्रं संस्कर्तुं क्षमाः ।** प्राप्तिश्च क्रमेणैव ; तेन क्रमेणोपलब्धिर्भवति । उत्तरमाह—**न हि संयोगविभागैः संयोगविभागान्तरमारभ्यत इति शक्यते वक्तुम्, उभयप्रसङ्गात् ।** अस्यार्थः—यदि संयोगविभागैः संयोगविभागान्तरं जन्येत, तदा प्राप्य श्रोत्रसंस्कारकत्वं संयोगविभागानां स्यात् ; न च संयोगविभागाभ्यां संयोगविभागान्तरं जन्यते । कस्मान्न जन्यत इत्यत्राह—**उभयप्रसङ्गात् ।** स्वयमभिव्यञ्जकत्वमभिव्यञ्जकान्तरजनकता[2] चेत्युभयमेकस्य प्रसज्येत ; तस्मादेक एव संयोगविभागाः श्रोत्राणि नानादेशवर्तीनि[3] संस्कुर्वन्ति ; तेनापाद्येदमुच्यते 'अप्राप्ताश्चेदुपकुर्वन्ति सन्निकृष्टविप्रकृष्टदेशस्थितौ युगपच्छब्दमुपलभेयाताम्' इति । भवतूभयप्रसङ्गः, को दोष इत्यत्राह—**न ह्येकस्मिन् कार्ये कारणद्वयकल्पना घटते ।** एकस्मिन्नभिव्यक्त्याख्ये कार्येऽनेककारणकल्पना संयोगविभागास्तावत्कारणं पुनश्च तज्जनितान्यपि संयोगविभागान्तराणि कारणमित्युभयप्रसङ्गेन[4] कारणद्वयकल्पना ; सा चायुक्ता । कुतस्तत्राह—**कार्यं हि कारणं परिकल्पयति, न पुनः कार्यान्तरमपि ।** शब्दाभिव्यक्तिलक्षणं हि कार्यं कारणमेव कल्पयति संयोगविभागलक्षणम् ; न पुनः संयोगविभागयोरपरं संयोगविभागलक्षणं कार्यान्तरमपि, मूलभूतेभ्य[5]

१. न हि वाय. क.
२. मभिव्यक्त्यन्तर. क.
३. Added. न. ग.
४. कारणानीत्यभयु. ग.
५. Added. कारण. ग.

## बृहती

संयोगविभागाः कार्यमारभन्त इति, न पुनरभिव्यक्तिपक्षेऽपि । ननु कार्यपक्षेऽपि कार्यान्तरकल्पना नैव घटते । सत्यं न घटते ; कार्यान्तरोपलब्धिस्तु प्रत्यक्षैव, दूरस्थसमीपस्थैः क्रमेणोपलब्धेः । ननु चाभिव्यक्तावपि तुल्यम् । न तुल्यम् ; न ह्यभिव्यक्तिरभिव्यक्त्यन्तरमारभते ; कार्यस्य तु कार्यान्तरारम्भे न कश्चिद्विरोधः ; भवति ह्यापेक्षिकं कार्यं कारणं च ; न पुनरभिव्यक्तिरभिव्यञ्जिका चेति । तस्मात् दूरस्थसमीपस्थैर्युगपदेव शब्दग्रहणम्, यावति ग्रहणम् । तस्मात् युक्तोऽयमाक्षेपः ।

## पञ्चिका

एव संयोगविभागेभ्यस्तस्य कार्यस्योचितत्वात् । तस्मादुत्पत्तिपक्ष एवैतदुपपद्यते—यावद्वेगं संयोगविभागाः कार्यमारभन्त इति, न पुनरभिव्यक्तिपक्षेऽपि । अस्यार्थः—शब्दोत्पत्तिपक्ष एवैतत् सन्निकृष्टविप्रकृष्टानां क्रमेणोपलम्भनमुपपद्यते, न पुनरभिव्यक्तिपक्षेऽपि ; यस्मादुत्पत्तिपक्ष एव संयोगविभागा यावद्वेगं शब्दलक्षणं कार्यमारभन्ते, तेन क्रमेणोत्पद्यमानः शब्दः[1] क्रमेणोपलभ्यते । ननु च कार्यपक्षेऽप्येकस्मात्कार्यात्[2] कारणान्तरकल्पना नैव घटते । सत्यं न घटते । एकग्रन्थेनाह—कार्यान्तरोपलब्धिस्तु प्रत्यक्षैव, दूरस्थसमीपस्थैः क्रमेण शब्दोपलब्धेः । तेन कार्यान्तरदर्शनात् कारणान्तरकल्पना न्याय्येति भावः । ननु चाभिव्यक्तावपि तुल्यम् । अभिव्यक्त्यन्तरदर्शनादभिव्यञ्जकान्तरकल्पनोपपन्नेति । परिहरति—न तुल्यम् ; न ह्यभिव्यक्तिरभिव्यक्त्यन्तरमारभते । क्वचिददर्शनात् । कार्यस्य तु कार्यान्तरारम्भे न कश्चिद्विरोधः[3] ; भवति ह्यापेक्षिकं कार्यं कारणं च । मूलकारणापेक्षया कार्यम्, स्वकीयकार्यापेक्षया कारणं च । न[4] पुनरभिव्यक्तिरभिव्यञ्जिका चेति । अयमर्थः—नाभिव्यक्तावपि तुल्यम् ; यस्मान्नाभिव्यक्तिरभिव्यक्त्यन्तरमारभते क्वचिदप्यदृष्टत्वात् ; कार्यं तु कार्यान्तरमारभत एव, लोके प्रायेण दर्शनात् । तेनाद्याः संयोगविभागाः शब्दमारभन्ते ; तदारब्धाः

---

१. Omitted. शब्दः. ग.
२. Omitted. कार्यात्. ग.
३. द्वेषः. ग.
४. Omitted. न—लोके. ग.

बृहती

उद्द्योतस्योद्द्योतान्तरापेक्षा—इति बालिशभाषितमेतत् । तस्माद्वायवीयाः संयोगविभागाः शब्दमारभन्ताम् । औलूक्यो वा भवतु राद्धान्तः "संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिः" इति । किमत्रानुक्तस्य

पञ्चिका

शब्दाः शब्दान्तरमारभन्त इति युक्तम् ; न पुनरभिव्यक्तिः सत्यभिव्यक्त्यन्तरमारभमाणा अभिव्यञ्जिका चेति क्वचिदपि दृष्टम् । तस्मादभिव्यक्तिपक्षे **दूरस्थसमीपस्थैर्युगपदेव शब्दग्रहणम्** । अप्राप्यापि[1] संयोगविभागानां कियत्यपि प्रदेशे श्रोत्रसंस्कारकत्वात् संस्कारस्य[2] च कार्यगम्यत्वात् यदि परमत्यन्तदवीयसि देशे श्रोत्रसंस्कारो न, मा भून्नाम ; यावति तु संस्कारः, तावति युगपदेव स्यात् । तस्मायुक्तोऽयमाक्षेपः—अप्राप्ताश्चेदुपकुर्वन्तीति । ननु चाभिव्यक्तिपक्षेऽपि क्रमेणाभिव्यक्तिर्भविष्यति । अभिव्यक्तः स एव शब्दोऽभिव्यञ्जको भवतु । भवति चाभिव्यक्तस्याभिव्यञ्जकता यथा आलोकस्य सौरादेर्नायनैस्तेजोऽवयवैर्बहिर्विसारिभिरभिव्यक्तस्य घटाद्यभिव्यञ्जकतेत्यत्राह—**उद्द्योतनस्याप्युद्द्योतनान्तरापेक्षेति बालिशभाषितमेतत्** । अनेन दृष्टान्तासिद्धिरुक्ता ; न ह्यालोकस्यालोकान्तरापेक्षायां प्रमाणमस्ति । यत्पुनर्नायनरश्मिसापेक्षत्वम्, तदुपलब्धौ, नाभिव्यक्तौ ; उपलब्धियोग्यतापादनं ह्यभिव्यक्तिः ; तदुत्तरकाले चोपलब्धिः । घटादयो हि स्वरूपतो नोपलब्धियोग्याः, सतामप्यालोकविरहे विस्फारितलोचनैरप्यदर्शनात् ; आलोकस्त्वविकलव्यापृतेन्द्रियस्यासन्नः सन्नुपलब्धिगोचर एवेति । तदुक्तम्—

"अग्न्यादयो घटादीनां प्रसिद्धा ये प्रकाशकाः ।
न ते प्रकाश्यरूपा हि प्रकाशस्यानपेक्षणात् ॥" इति ।

एवमसिद्धे दृष्टान्ते पराकृतमिदम्—अभिव्यक्तः शब्द एव पुनरभिव्यञ्जको भवत्विति[3] । उपसंहरति—**तस्माद्वायवीयाः संयोगविभागाः शब्दमारभन्ताम्** । स च वाय्वाश्रितः शब्दः श्रोत्रे सयुक्तसमवायलक्षणेन

---

१. अप्राप्तानां. ग. ३. भवतीति. ग.
२. Omitted. संस्का—यदि. ग.

बृहती

प्रदर्शनम्? अत्रापि मे श्रवणं विद्यत इति कोऽयमभिमानः? नायमभिमानः; कस्यचिदज्ञस्य—नायं राद्धान्तो भगवता भाष्यकारेणोपन्यस्तो निरस्तश्चेति भवति मतिः; तदपनोदनायेदमुपन्यस्तम्। वायुशब्दोपन्यासेनैवायमुपन्यस्तो निरस्तश्च, तुल्यकारणत्वादुपन्यासस्य निरासस्य च।

पञ्चिका

सम्बन्धेनोपलभ्यताम्; वायुश्च यावद्वेगं गत्वा श्रोत्राकाशेन क्रमेण संयुज्यताम्। यद्वा औलूक्यो वैशेषिकीयो भवतु राद्धान्तः "संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिः" इत्येतत्सूत्रोक्तः। अत्र[1] चेयं तेषां प्रक्रिया—आद्यशब्दः संयोगादुत्पद्यते। यथा भेरीदण्डसंयोगानुगृहीताद्भेरीगगनसंयोगादाकाशे शब्द उपजायते, स उपजातः शब्दान्तरमारभते, सोऽप्यपरमिति वीचीनिचयसञ्चरणक्रमेण कर्णशष्कुलीमध्याकाशदेशे धर्माधर्मोपगृहीते श्रोत्रभावमापन्ने समुपजातः समवायलक्षणेन सन्निकर्षेण गृह्यते। एवं विभागादाद्यः शब्द उपजायते। यथा वंशदलविभागानुगृहीताद्वंशदलाकाशविभागादाकाशे शब्द उपजायते, सोऽप्यपरमारभते, सोऽप्यपरमिति पूर्ववद्योज्यम्। अत्र चाद्यः शब्दः कार्यविरोधी; अन्त्यः कारणविरोधी; मध्ये भवास्तु कार्यकारणोभयविरोधिन इति ज्ञेयम्। अत्र चोदयति—किमत्र वैशेषिकराद्धान्तस्य भाष्यकारेणानुक्तस्य प्रदर्शनात्? यदि परं वैशेषिकमतेऽपि परिचयो विद्यत इत्येतावन्मात्रं ख्यापयितुमिदमुपन्यस्तम्, तच्चेदमकिञ्चित्करम्; तदाह—**अत्रापि मे श्रवणं विद्यत इति कोऽयमभिमानः? नायमभिमानः**[2], **कस्यचित्त्वज्ञस्य भवति मतिः**—नायं वैशेषिकीयो राद्धान्तो भगवता भाष्यकारेणोपन्यस्तो निरस्तो वेत्येवंरूपा; **तदपनोदनायेदमुपन्यस्तम्। वायवीयशब्दोपन्यासेनैवोपन्यस्तो निरस्तश्चेति।** कस्मात्? **तुल्यकारणत्वादुपन्यासस्य निरासस्य च।** क्रमेण शब्दोपलब्धिरेवोपन्यासे कारणं तावत्[3] पक्षद्वयेऽपि तुल्यम्, निरासोऽपि च प्रत्यभिज्ञाबलेन तुल्यः। अत एव च "अनुवातं

---

१. Omitted. अत्र च. ग.

२. Omitted. नायमभिमानः. ग.

३. सा पक्षद्वयेऽपि. क.

भाष्यम्

नैतदेवम्; अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोग-

बृहती

तस्मादभिव्यक्तिकार्यपक्षयोरन्यथात्वप्रदर्शनार्थोऽयं ग्रन्थः।

"नैतदेवम् अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्तो यावद्वेगमभिप्रतिष्ठन्ते" इति। ननु तदेवेदमुत्पादकत्वमुक्तम्; प्रतिज्ञातं चाभिव्यञ्जकत्वं संयोगविभागानाम्। तस्मादसम्बद्धमेवेदं प्रतिभाति। किमिति भोः?

पञ्चिका

दूरादप्युपलभ्यते शब्दः" इति वैशेषिकपक्ष एवेदं दूषणं दत्तवान्, अनुवातमित्यस्य शब्दाच्छब्दान्तरारम्भपक्षेऽनुपयोगित्वात्। बौद्धपक्षेऽपि चाप्राप्तशब्दोपलम्भाश्रयणादिदमपरिहार्यं दूषणम्। यत एवं वैशेषिकशीक्षाकारपक्षयोस्तुल्यता, तस्मादभिव्यक्तिकार्यपक्षयोरन्यथात्वप्रदर्शनार्थोऽयं ग्रन्थः। "अप्राप्ताश्चेदुपकुर्वन्ति" इति। कार्यपक्षे क्रमेणोपलब्धिर्घटते, न पुनरभिव्यक्तिपक्षे— इत्येतावन्मात्रपरोऽयं ग्रन्थः; न पुनः कार्यपक्षेऽपि वायवीय एवेत्यत्र तात्पर्यम्। वायवीयो वा भवतु, संयोगविभागयोर्वेति नात्रातीवाभिनिवेष्टव्यमिति।

नैतदेवम्; अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्तो यावद्वेगमभिप्रतिष्ठन्त इति। भाष्यमनुभाषितमाक्षेप्तुम्; आक्षिपति—ननु तदेवेदमुत्पादकत्वमुक्तम्; प्रतिज्ञातं चाभिव्यञ्जकत्वं संयोगविभागानाम्। अस्यार्थः—"अभिघातेन हि" इत्यनेनेदमुक्तम्—कोष्ठ्या वायव आन्तराणामवयवानामभिघातेन प्रेरिताः सन्तः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वदिक्षु

भाष्यम्

विभागानुत्पादयन्तो यावद्वेगमभिप्रतिष्ठन्ते । तेन वायोरप्रत्यक्षत्वात् संयोगविभागाः नोपलभ्यन्ते । अनुपरतेष्वेव

बृहती

उक्तमितीति । अनभिव्यक्तिज्ञो भवान् । कात्रानभिव्यक्तिज्ञता ? इयमनभिव्यक्तिज्ञता ; अभिव्यक्तिर्हि तिरस्कारापनयः । केन वोक्तम् 'न' इति ? स एवापनयोऽपनयान्तरं नारभते—इत्युक्तम् ; सकृद्ध्यापरा ह्यपनये

पञ्चिका

संयोगविभागानुत्पादयन्तो यावद्वेगमभिप्रतिष्ठन्त इति । तत्र च 'अप्राप्ताश्चेदुपकुर्वन्ति' इत्याक्षेपस्यापरिहृतत्वादुत्पादकत्वमेवोक्तम्, न पुनरभिव्यञ्जकत्वं संयोगविभागानाम् । तस्मादसम्बद्धमेवेदमुत्तरं प्रतिभाति । समर्थयिता पृच्छति—किमिति भोः ? असम्बद्धम् । आक्षेप्ताह—उक्तमितीति । उत्पादकत्वमुक्तमित्यतो हेतोरसम्बद्धम् । अत्र चैक इतिशब्दः स्वरूपनिर्देशपरः, द्वितीयस्तु हेत्वर्थपरः ; 'किमिति' इत्यपि हेतुरेव पृष्टः ; स एव इतिशब्देन कथितः । समाधाताह—अनभिव्यक्तिज्ञो भवान् । अस्यार्थः—यो यावदभिव्यक्तिस्वरूपं जानाति, स कथमप्राप्तानामभिव्यञ्जकतां ब्रूयात् ? आक्षेप्ताह—कात्रानभिव्यक्तिज्ञता ? समाधाताह—इयमनभिव्यक्तिज्ञता । स एवाह—अभिव्यक्तिर्हि तिरस्कारापनयः । स्तिमिता वायवस्त्रसरेणुसञ्चरणतूललवधारणलिङ्गाः श्रोत्रं तिरस्कृत्यावतिष्ठन्ते ; ते च वेगवताभिघातप्रेरितेन वायुना कोष्ठ्येनापनीयन्ते, यथा मूलोदकादीनां तिरस्कारका मृदादयः खननादिभिरिति तिरस्कारापनय एवाभिव्यक्तिः । आक्षेप्ताह—केन वोक्तं तिरस्कारापनयो नाभिव्यक्तिः भविष्यतीति, किन्तु स एवापनयोऽपनयान्तरं नारभते इत्युक्तम् । यः सन्निकृष्टश्रोत्रवर्ती तिरस्कारापनयः कृतः, स विप्रकृष्टश्रोत्रान्तरगतं तिरस्कारापनेयं नारभत इत्युक्तम् ; अभिव्यक्ति-

---

१. भवतीति. ग. २. नयान्तरं. ग.

भाष्यम्

तेषु शब्द उपलभ्यते नोपरतेषु । अतो न दोषः । अत एव चानुवातं दूरादुपलभ्यते शब्दः ॥

बृहती

भवन्त्यपनेतारः, न यावदपनेयमादित्यप्रभादय इव । सत्यम् ; यद्येक एवापनेतानेकव्यापारः परिकल्प्येत, स्यादयं दोषः ; अत्र पुनर्बहवोऽभिव्यञ्जकाः । कथमिदं ज्ञायते ? भवतो वा कार्यपक्षे कारणबहुत्वं कथम् ? कार्यबहुत्वादिति चेत्, ममाप्यभिव्यक्तिबहुत्वादभिव्यञ्जकबहुत्वम् । कथं पुनरभिव्यक्तिबहुत्वम् ? यथैव कार्यबहुत्वम् । एकत्वे

पञ्चिका

रभिव्यञ्जिका न भवति—इत्यभिधानात् । ननु मा नामापनयोऽपनयान्तरमारभताम्, किन्तु य एवापनेता स एवापनयान्तरं किमिति नारभ्यत इत्यत्राह —सकृद्व्यापारा ह्यपनये भवन्त्यपनेतारः, न यावदपनेयमादित्यप्रभादय इव । येऽपनेतारस्तेऽपनये सकृदेव व्याप्रियन्ते, न पुनर्यावन्त्यपनेतव्यानि तावतामपनये पुनर्व्याप्रियन्ते ; तेन सकृद्व्यापारत्वात्तेषां क्रमोपलब्धिर्न स्यात् । अत एव च क्रमोपलब्धिसिद्धयेऽपनयेनापनयान्तरं जनयितव्यमिति वाच्यम्, तच्च नास्ति । समर्थयिताह—सत्यम् ; यद्येक एवापनेता अनेकव्यापारः परिकल्प्येत, स्यादयं दोषः ; अत्र पुनर्बहवोऽभिव्यञ्जकाः । प्रतिश्रोत्रं वायवीयसंयोगविभागानां भिन्नत्वात् । क्रमवन्तश्च ते संयोगविभागाः, वायोः क्रमेण गमनात् । कथमिदं ज्ञायते ? बहवः संयोगविभागा इति । उत्तरम्—भवतो वा कार्यपक्षे कारणबहुत्वं कथम् ? कार्यबहुत्वादिति चेत्, ममाप्यभिव्यक्तिबहुत्वादभिव्यञ्जकबहुत्वम् । भविष्यति । कथं पुनरभिव्यक्तिबहुत्वम् ? यदि ह्यभिव्यक्तिबहुत्वं सिद्धं स्यात्, तदा स्यादभिव्यञ्जकबहुत्वम् ; तत्तु कथमिति

---

१. प्रदीपादयः. ग.

## प्रयोगस्य परम् ॥ १४ ॥

भाष्यम्

यदपरं कारणमुक्तम्——'शब्दं कुरु, मा शब्दं कार्षीः' इति व्यवहर्तारः प्रयुञ्जते । यद्यसंशयं नित्यः शब्दः, 'शब्द-प्रयोगं कुरु' इति भविष्यति यथा 'गोमयान्कुरु' इति संहारे ॥

बृहती

पुनर्वक्ष्यामः प्रत्यक्षस्य बलीयस्त्वमित्युक्तम् । एकत्वे च नित्यता ; नित्यत्वेऽभिव्यक्तिबहुत्वमेव, न कार्यबहुत्वमिति स्थितिः ॥

प्रयोगस्येति । स्थिते एतास्मिन् न्याये गोमयादिवत् प्रयोगसिद्धिः, प्रमाणान्तरप्रमितविषयत्वाल्लौकिकस्य वाक्यस्य ॥

पञ्चिका

प्रश्नः । उत्तरम्——यथैव कार्यबहुत्वम् । त्वन्मते सिद्धं क्रमेणोपलब्धेः, तथास्मन्मतेऽप्यभिव्यक्तिबहुत्वम् । कथं तर्ह्यभिव्यक्तिबहुत्वनिश्चयस्तत्रेत्यत्राह—एकत्वे पुनर्वक्ष्यामः प्रत्यक्षस्य बलीयस्त्वमित्युक्तम् । तेनैकः शब्दः, प्रत्यभिज्ञानात् । एकत्वे च नित्यता । नित्यत्वे चाभिव्यञ्जकत्वम्, अभि-व्यञ्जकत्वे च क्रमेणोपलब्धेरभिव्यक्तिबहुत्वमेव, न कार्यबहुत्वमिति स्थितम् । एतत्त्वत्र वक्तव्यम्——तिरस्कारकस्तिमितवाय्वपनयस्य तुल्यत्वात् सर्वे शब्दाः किमिति न गृह्यन्त इति । तदिदमयुक्तम् ; कार्यतो हि तिरस्कारापनये कल्प्यमाने, बहवस्ते वायवः स्तिमिताः श्रोत्रं पिधायावतिष्ठन्ते[1], तत्र कस्मिंश्चिदपनीते कश्चिदेव शब्द उपलभ्यते, न सर्व इति दर्शन-मूलेयं कल्पना ; तेनापनेयापनेतृबहुत्वान्न किञ्चिदनुपपन्नं भविष्यति, यदि सप्रत्यभिज्ञं प्रत्यक्षं स्थास्यति ॥

"प्रयोगस्य परम्" इति सूत्रमनुभाषते—प्रयोगस्येति । स्थित एतस्मिन्न्याये 'शब्दं कुरु' इति प्रयोगसिद्धिः गोमयादिवत् ; यथा

१. अवधाय. ग.

# आदित्यवद्यौगपद्यम् ॥ १५ ॥

भाष्यम्

यथैतदेकस्य सतो नानादेशेषु युगपद्दर्शनमनुपपन्नमिति । आदित्यं पश्य देवानां प्रिय ! एकः सन् अनेक-

बृहती

"यथैतदेकस्य सतः" इत्यनेकताभ्रान्तिमापादयति । कथं पुनः विपर्ययाद्दते भ्रान्तिरिति शक्यते वक्तुम् ? कारणदोषदर्शनात् । कस्य कारणस्यात्र दुष्टता अवगम्यते ? विषयस्य तावच्छ्रोत्रपथासत्तेर्नैव दुष्टता । श्रोत्रस्याप्यभिव्यक्तत्वात् नैव । अथ दुष्टं श्रोत्रमिति कल्प्यते ; एवं तर्हि

पञ्चिका

समाहारकर्तव्यतायामेव गोमयकर्तव्यतोच्यते लक्षणया, तथा प्रयोगकर्तव्यतायामेव शब्दकर्तव्यतोच्यते लक्षणया । कथं पुनर्लक्षणया प्रयोगवर्णनमित्यत्राह—प्रमाणान्तरप्रमितविषयत्वाल्लौकिकस्य वाक्यस्य । यदेवं प्रमाणान्तरेण प्रमितम्, तदेव प्रत्याययितुं लोको वाक्यं प्रयुङ्क्ते ; तत्र च न शब्दस्य प्रमाणान्तरेण करणं दृष्टम् ; प्रयोगस्य करणं दृष्टमिति तत्कर्तव्यताप्रतिपादनपरमेवेदं वाक्यमिति ज्ञाते तात्पर्ये लक्षणा न्याय्येति ।

"यथैतदेकस्य सतः" इत्यनेकताभ्रान्तिमापादयति । अनेन नानादेशेषु युगपच्छब्दोपलम्भेनानेकताप्रतीतिः भ्रान्तिरिति भाष्यार्थोऽनुभाषितः । आक्षिपति—कथं पुनर्विपर्ययाद्दते भ्रान्तिरिति शक्यते वक्तुम् ? न ह्येवं विपर्ययज्ञानमुत्पद्यते—नानादेशेषु शब्दो नोपलभ्यत इति ; अतो बाधकप्रत्ययाभावात् कथमियं भ्रान्तिरिति ? समाधिः—कारणदोषदर्शनात् । कारणदोषदर्शनादपि भ्रान्तिर्भवति । आक्षेप्ताह—कस्य कारणस्यात्र दुष्टतावगम्यते ? एकग्रन्थेनाह—विषयस्य शब्दस्य तावदत्र दुष्टता नास्ति, श्रोत्रपथासत्तेः[२] श्रोत्रे समवायात्[३] । श्रोत्रस्याभिव्यक्तत्वात् संस्कृतत्वान्नैव दुष्टतास्ति । अथ दुष्टं श्रोत्रमिति परिकल्प्येत ; एवं तर्हि शब्दस्यैव[४]

---

१. Added. वा. ग.
२. -पथापत्तेः. क, ग.
३. श्रोत्रसमवायात्. ग.
४. अस्यैव. ग.

भाष्यम्

देशावस्थित इव लक्ष्यते । कथं पुनरवगम्यते 'एक आदित्यः' इति ? उच्यते, प्राङ्मुखो देवदत्तः पूर्वाह्णे, संप्रति पुरस्तादादित्यं पश्यति ; तस्य दक्षिणतोऽवस्थितो न द्वौ

बृहती

शब्दस्यैव ग्रहणं न प्राप्नोति । न च शब्दादृतेऽन्यच्छ्रोत्रस्य ग्राह्यमस्ति । यद्येवं कार्यपक्षेऽपि कथमनेकत्वग्रहणं श्रौत्रम् ? नैव तच्छ्रौत्रम् ; मानसं हि तत् । मनसा वा किं श्रोत्रेणागृहीतमेव बाह्यं वस्तु गृह्यते ? किं वात्र शब्दव्यतिरिक्तं बाह्यं वस्त्वभिप्रेतं भवतः ? यदिदं शब्दनानात्वम् । किं वा शब्दव्यतिरिक्तमिदं शब्दनानात्वम् ? किं शब्द एव, उत

पञ्चिका

ग्रहणं न प्राप्नोति । कार्यकरणशक्तिहानिरेव दुष्टत्वम् ; शब्दग्रहणं च श्रोत्रस्य कार्यम् ; तत्र यदि तद्दुष्टम्, कथं शब्दं गृह्णीयात् ? अथ दुष्टतया कार्यान्तरं न करिष्यतीत्युच्यते, तत्राह—न च शब्दादृते श्रोत्रस्यान्यद्ग्राह्यमस्ति । यत्र दुष्टत्वं स्यात् । समर्थनैकदेश्याह—यद्येवं यदि शब्दादन्यच्छ्रोत्रस्य ग्राह्यं नास्ति, तर्हि कार्यपक्षेऽपि शब्दस्य कथमनेकत्वग्रहणं श्रौत्रम् ? अनेकदेशसम्बन्धस्याशाब्दत्वान्न श्रोत्रेण नानात्वग्रहणं स्यात् । आक्षेप्ताह—नैव तच्छ्रौत्रम् । नानात्वम् । मानसं हि तत् । समाधातैकदेश्याह—मनसा वा किं श्रोत्रेणागृहीतमेव बाह्यं वस्तु गृह्यते ? यदि श्रोत्रेणागृहीतमेव शब्दे नानात्वलक्षणं बाह्यं वस्तु मनसा गृह्येत, तदा मानसमिदं नानात्वं स्यात् ; नैतदुचितम् , सर्वत्रागृहीते बाह्ये मनसः प्रवृत्त्यदर्शनात् । तस्मान्न मानसमिदं कार्यपक्षेऽपि नानात्वम् । अक्षेप्ता निराकरोति—किं वात्र शब्दव्यतिरिक्तं बाह्यं वस्त्वभिप्रेतं भवतः ? यच्छ्रोत्रेणागृहीतं मनसा न ग्राह्यमिति ब्रवीषि । एकदेश्याह—यदिदं शब्दनानात्वम् । तच्छब्दव्यतिरिक्तं बाह्यं वस्त्वित्यर्थः । आक्षेप्ता निराकरोति—किं वा शब्दव्यतिरिक्तमिदं

भाष्यम्

पश्यति, आत्मनश्च संप्रति न तिरश्चीनं देवदत्तस्यार्जवे। तस्मादेक आदित्य इति। दूरत्वादस्य देशो नावधार्यते; अतो व्यामोहः। एवं शब्देऽपि व्यामोहादनवधारणं

बृहती

शब्दादन्यः शब्दधर्मः? न तावदयं शब्दस्यैव धर्मो भवति, रूपादिष्वपि दर्शनात्; रूपाद्यपि हि 'नाना' इति गम्यते। नाप्ययं शब्द एव, 'नानात्वं शब्दस्य' इति व्यतिरेकदर्शनात्। तस्मान्न विद्मः कस्येन्द्रियस्य व्यापारः, यस्य दुष्टता कल्प्येत। किं तर्हीदं नानात्वमग्राह्यमेव? दृश्यते तु सर्वार्थेषु। बुद्धिरूपता चाग्राह्यत्वाद्बुद्धेः प्रत्युक्ता। उच्यते—यद्यस्य ग्राह्यं गृहीते च तस्मिन् ग्राह्यान्तरावमर्शो नानात्वम्। एवं तर्हि श्रोत्रस्यैव

पञ्चिका

शब्दनानात्वम्? स एव विकल्पयति—किं शब्द एव, उत शब्दादन्यः शब्दधर्म इति। न तावदयं शब्दधर्मः शब्दस्यैव तावदयं धर्मो न भवति, रूपादिष्वपि दर्शनात्; रूपाद्यपि हि 'नाना' इति गृह्यते। नाप्ययं शब्द एव, 'नानात्वं शब्दस्य' इति व्यतिरेकदर्शनात्। तस्मान्न विद्मः कस्येन्द्रियस्यात्र नानात्वे व्यापारः, यस्य दुष्टता कल्प्यते भवद्भिः? एकदेश्येवाह—किं तर्हीदं नानात्वमग्राह्यमेव? पूर्वोक्तेन विकल्पेन तर्हि किं नानात्वमिदमग्राह्यमेव? स एवाह—दृश्यते तु[1] सर्वार्थेषु। तेन शब्दस्यैवायं धर्मो मा भूत्; शब्दस्यान्येषां चार्थानां धर्मो भविष्यति। न च दृश्यमानमेवेदं बाह्यं वस्तु न भवति। किं तर्हि? बुद्धिरूपमिति वक्तव्यम्; तदाह—बुद्धिरूपता त्वग्राह्यत्वात् बुद्धेः प्रत्युक्ता। यदि हि बुद्धिः प्रत्यक्षा स्यात्, तदा स्यादेव बुद्धिरूपम्; न च सा प्रत्यक्षेत्युक्तम्। आक्षेप्ता समर्थयते—उच्यते, यद्यस्य ग्राह्यम्, गृहीते च तस्मिन् ग्राह्यान्तरावमर्शो नानात्वम्। अस्यार्थः—न[2] नानात्वं नामान्यदेव,

१. Omitted. तु. ग. २. Omitted. न. ग.

भाष्यम्

देशस्य। यदि श्रोत्रं संयोगविभागदेशमागत्य शब्दं गृह्णीयात्, तथापि तावदनेकदेशता कदाचिदवगम्येत; न च तत् संयोगदेशमागच्छति। प्रत्यक्षा हि कर्णशष्कुली तद्देशा गृह्यते;

बृहती

दुष्टता। दुष्टे च शब्दग्रहणं न प्राप्नोति। असति च शब्दग्रहणे शब्दान्तरावमर्शः कुतः? तस्मादवमर्शे दुष्टता कल्पनीया, न पुनः शब्दग्रहणे। मनसस्तर्हि दुष्टत्वम्। ननु च मनसोऽपि नैव दुष्टत्वं शक्यते वक्तुम्, श्रोत्रग्रहणे यथार्थग्रहणात्; न ह्यगृहीतसम्यगर्थस्य तदर्थावमर्शो घटते।

पञ्चिका

किन्तु स्वभावत एव ये विलक्षणा अर्थाः तेषु गृहीतेषु यदिदं वैलक्षण्यं विमृश्यते तदिदं नानात्वम्; तेन गृहीतमेव नानात्वम्, वैलक्षण्यरूपत्वात्। वैलक्षण्ययोगाच्च न विलक्षणा भावाः। किं तर्हि? स्वभावत एव। एकदेश्याह—यदि नानात्वं श्रोत्रग्राह्यं कार्यपक्षे, एवं तर्हि नित्यपक्षेऽपि श्रोत्रस्यैव दुष्टता कल्पनीया। आक्षेप्ता दूषयति—दुष्टे च शब्दग्रहणं न प्राप्नोति। कार्यशक्तिविघातकत्वाद्दुष्टतायाः। स एवाह—असति च शब्दग्रहणे शब्दान्तरावमर्शः कुतः? यत एव श्रवणेन्द्रियस्यादुष्टत्वम्। तस्मात् अवमर्शः अवमृश्यते येन[1] तस्मिन्नवमर्शे दुष्टता कल्पनीया, न पुनः शब्दग्रहणे श्रोत्रेन्द्रिये। एकदेश्येवाह—मनसः तर्हि दुष्टता भवतु; तेन शब्दोऽपि गृह्यते; श्रोत्रस्यादुष्टत्वात् मनसश्च दुष्टत्वादेकत्वानवमर्शाच्च नानात्वावमर्शो भवति। आक्षेप्ता दूषणमाह—ननु च मनसोऽपि नैव दुष्टत्वं शक्यते वक्तुम्। श्रोत्रग्राह्ये[2] शब्दे यथार्थग्रहणात्। यावद्धि किञ्चन गृह्यते, तत्सर्वं न मनसा विना; तत्र यदि मनो दुष्टम्, तदा शब्दग्रहणमेव यथार्थं न स्यात्; अस्ति च शब्दे यथार्थग्रहणमिति मनसोऽपि दुष्टत्वं नास्ति। कथं पुनरवगम्यते शब्दे यथार्थग्रहणमस्तीति तत्राह—न ह्यगृहीतसम्य-

---

१. यत्र. ग. २. श्रोत्रग्रहणशब्दयथार्थग्रहणात्. ग.

भाष्यम्

वायवीयाः पुनः संयोगविभागा अप्रत्यक्षस्य वायोः, कर्ण-शष्कुलीप्रदेशे प्रादुर्भवन्तो नोपलभ्यन्ते----इति नानुपपन्नम्।

बृहती

तस्माद्देवा एनां भ्रान्तिं कल्पयिष्यन्ति, अविपर्ययात् दुष्टकारणतानवधृतेश्च। अभ्रान्ते च भ्रान्त्यभिधानं भ्रमादपि पापीयः । तस्माद्भ्रमकारणमत्र वक्तव्यं भ्रान्तिज्ञैः । इदमभिधीयते—उक्तं भवतैव 'नागृहीतबाह्येन्द्रियेण मनसा गृह्यते' इति । इन्द्रियेण च तद्ग्रहणात् अनेकत्वं नास्तीति प्रत्यक्षेणावसितम् । मनसाप्यनेकत्वग्रहणं नैवोपपद्यते । किमालम्बनमस्याः, किञ्चेन्द्रियमनेकत्वावगतेः ? इदमिन्द्रियमिदं चालम्बनम्—नानादेशस्था हि ध्वनयो युगपदागच्छन्त इतरेतरनिरपेक्षा

पञ्चिका

गर्थस्य तदर्थावमर्शो घटते। न ह्यगृहीतविषयोऽवमर्शोऽस्तीत्यर्थः । उप-संहरति—तस्माद्देवा एनां भ्रान्तिं कल्पयिष्यन्ति ; अविपर्ययाद्दुष्टकारण-तानवधृतेश्च । कार्यपक्षे तु[1] नानात्वबुद्धिर्न भ्रान्तिरिति युक्तं कार्यत्वमेव । अभ्रान्ते च ज्ञाने भ्रमाभिधानं भ्रमादपि पापीयः । तस्माद्वक्तव्यमेव भ्रान्तिज्ञैर्भ्रमकारणम् । परमसमाधाताह—इदमभिधीयते, उक्तम् भवतैव 'न ह्यगृहीतसम्यगर्थस्य तदर्थावमर्शो घटते'—इत्यनेन ग्रन्थेनागृहीतं बाह्यं वस्तु मनसा न गृह्यत इति । ततः किमित्यत्राह—इन्द्रियेण च तद्ग्रहणात् । स एवायमिति ग्रहणात् । अनेकत्वं नास्तीति प्रत्यक्षेणा-वसितम् । बाह्येन्द्रियेण चानेकत्वस्याग्रहणात् मनसाप्यनेकत्वग्रहणं नैवोप-पद्यते । आक्षेप्ताह—किमालम्बनमस्याः, किञ्चेन्द्रियमनेकत्वप्रतिपत्तेः ? इदमिन्द्रियमिदं चालम्बनम्—नानादेशोत्था हि ध्वनयो युगपदागच्छन्त

---

१. Omitted. तत्. ग.
२. वचनात् भ्रान्तिं. ग.
३. Omitted. तु. ग.
४. कत्वावगतेः । समाधत्ते. ग.

भाष्यम्

अत एव व्यामोहः---यत् नानादेशेषु शब्द इति । आकाश-देशश्च शब्दः----इति, एकं च पुनराकाशम्, अतोऽपि न नानादेशेषु । अपि च ऐकरूप्ये सति देशभेदेन कामं देशा एव भिन्नाः ; न तु शब्दः । तस्मादयमप्यदोषः ॥

बृहती

एव युगपत् संस्कारानारभन्ते श्रोत्रस्य ; तत्संस्कारानुरोधाच्चैकमपि शब्दमनेकमिव गृह्णाति । एकैकसंस्कारोपजननाच्छक्तेः नायनशक्तिरिवाङ्गु-लिभिन्ना एकमपि भिन्नमिव गृह्णाति । तस्माच्छक्तिभेदाग्रहनिबन्धनोऽयं

पञ्चिका

इतरेतरनिरपेक्षा एव युगपत्संस्कारमारभन्ते श्रोत्रस्य ; तत्संस्कारानु-रोधाच्चैकमपि शब्दमनेकमिव गृह्णातीति । अस्यार्थः—अन्योन्यनिरपेक्षा बहवो ध्वनयो बहूनेव संस्कारान् श्रोत्रस्य जनयन्ति[1] ; तत्संस्कारवशेन च श्रोत्रेन्द्रियवर्तिना[2] नानाशब्दबुद्धय उपजायन्ते ; तत्र प्रतिपत्तिभेदात् प्रतिपत्तव्ये शब्देऽपि प्रतिपत्ता भेदप्रतिपत्तिव्यवहारं करोति । अनेकमिव गृह्णातीति । यथानेकं गृह्यमाणमनेकव्यहारं प्रवर्तयति, तथेदमपि प्रतिपत्ति-भेदेन भेदव्यवहारं प्रवर्तयतीत्यर्थः । कस्मात्पुनः प्रतिपत्तिभेद इत्यत्राह— एकैकसंस्कारोपजनानाच्छक्तेः नायनशक्तिरिवाङ्गुलीविभिन्ना एकमपि भिन्नमिव गृह्णाति । एकैकेन संस्कारेण ध्वनिना श्रोत्रशक्तेरुपजायमानत्वा-च्छक्तिस्तावत् भिद्यते ; तथैकमपि[3] भिन्नं गृह्णाति ; यथा नयनशक्तिरङ्गुली-विभिन्ना अभिन्नमपि चन्द्रमसं भिन्नमिव गृह्णातीति । उपसंहरति— तस्माच्छक्तिभेदाग्रहनिबन्धनोऽयं भ्रमः । शक्तिभेदमगृह्णन्नानाशब्दव्यवहारं प्रवर्तयति[4] ; भिन्नां शक्तिमजानन् प्रतिपत्तिभेदापरिकल्पनात् प्रत्येतव्यमेव भिन्नं मन्यते । यस्तु शक्तिभेदं मन्यते, स जानाति—प्रतिपत्तिरेव केवला

---

१. -न्तीति तत्संस्कार. ग.
२. -जनिताः. ग.
३. भिन्ना च शक्तिः. ग.
४. करोति. ग.

बृहती

भ्रमः । अनेन सान्तरालग्रहणं प्रत्युक्तम् । कथं पुनरनेन सान्तरालग्रहणं प्रत्युच्यते ? युक्तं तावत् संस्कारभेदात् शक्त्युद्बोधः । तदनुरोधिनी भिन्ना च शक्तिरेकमपि विषयं भेदेन समर्पयन्ती स्वभेदाग्रहणादनेकग्रहणभ्रममुत्पादयतीति । अन्तरालग्रहणे को हेतुः ? तस्मात् कारणान्तरं ब्रूहि । नोच्यते ; इदमेव कारणम् । कथमिदं कारणम् ? नानादेशोत्था ध्वनयो भेदेन संस्कारमारभमाणा आ मूलं शक्तेरुद्बोधं जनयन्ति । अतः श्रोत्राकाशस्थितोऽपि शब्दोऽनुग्राहकानुरोधात्तद्देशस्थ इव गृह्यते । ननु चान्त्य एव संयोगविभागः संस्करोति ।

पञ्चिका

भिद्यते, प्रतिपत्तव्यं तु तदेवेति । अनेन सान्तरालग्रहणमपि प्रत्युक्तम् । यदिदं विच्छिन्नं शब्दग्रहणं तदनुपपन्नमिति शङ्का, शब्दस्य श्रोत्राकाशे समवेतस्य ग्रहणात् । तत्रेदमुच्यते—अनेन सान्तरालग्रहणेऽपि प्रतिवचनं दत्तम् । इयमपि भ्रान्तिरित्यर्थः । अत्र चोदयति—कथं पुनरनेन सान्तरालग्रहणं प्रत्युच्यते ? एकग्रन्थेनाह—युक्तं तावत्संस्कारवशाच्छक्त्युद्बोधः ; तदनुरोधिनी भिन्ना च शक्तिरेकमपि विषयं भेदेन समर्पयन्ती स्वभेदाग्रहणादनेकग्रहणभ्रममुत्पादयतीति । अन्तरालग्रहणे को हेतुः ? तस्मात्कारणान्तरं ब्रूहीति । परिहरति—नोच्यते । कारणान्तरम् । इदमेव हि कारणम् । चोदयति—कथमिदं कारणम् ? उत्तरम्—नानादेशोत्था ध्वनयो भेदेन संस्कारमारभमाणा आ मूलं शक्तेरुद्बोधं जनयन्तीति । अतः श्रोत्राकाशस्थितोऽपि शब्दोऽनुग्राहकानुरोधात्तद्देशस्थ इव गृह्यते । अस्यार्थः—येऽमी नानादेशोत्था[1] ध्वनय आगच्छन्तः श्रोत्रशक्तेरुद्बोधं जनयन्ति, ते आ मूलं मूलत आरभ्य—मूलभूतसंयोगविभागसहिता[2] इति यावत्—अतश्चानुग्राहक[3]ध्वनिवशेन ध्वनिमूलदेशस्थित इव शब्दः प्रतिभाति ; यद्यपि परमार्थतः श्रोत्राकाशस्थित एव शब्दो गृह्यते, बाह्येन्द्रियत्वेन श्रोत्रस्य प्राप्यकारित्वात् ; ते[4]नाभिव्यञ्जकवशादेषा

---

१. -देशस्थाः ग.
२. Omitted. विभाग. ग.
३. Added. भूत. ग.
४. ते नानुग्रह. ग.

बृहती

केयं मन्दता भवतः ? अननुगृहीतपूर्वसंयोगविभागोऽन्त्यः संस्करोतीति नोपपद्यते ; तदनुग्राहकवशादुत्पत्तिरिव कार्यम् । अत एव च

पञ्चिका

भ्रान्तिरिति मन्तव्यम् । एषा चात्र दर्शनस्थितिः—शब्दः स्वदेशरहितः श्रोत्रेण गृह्यते, तस्य श्रोत्रदेशत्वादिन्द्रियाणां स्वानुभवा[1]समर्थत्वात् ; श्रोत्रं तु यद्यपि देशं स्वातन्त्र्येण न गृह्णाति, तथापि शब्दं गृह्णदेव शब्दाभिव्यञ्जकमूलदेशमपि गृह्णातीत्यनुभवबलेन कल्प्यते । तत्र[2] शब्दस्य देशरहितस्य देशमपेक्षमाणस्य तेन देशेन सहासम्बन्धमगृह्णतस्तद्देशसम्बन्धग्रहणव्यवहारो[3] भवतीति । ननु चान्त्य एव संयोगविभागः संस्करोति । तेन ध्वनिमूलदेशो नाभिव्यञ्जकदेशः ; न चासम्बन्धग्रहणं श्रोत्रस्य, अतिप्रसङ्गादित्युक्तम् । परिहरति—केयं मन्दता भवतः ? [4]अननुगृहीतपूर्वसंयोगविभागोऽन्त्यः संस्करोतीति नोपपद्यते । अननुगृहीतः पूर्वः संयोगविभागो येन सोऽननुगृहीतपूर्वसंयोगविभागः । अनुगृहीतः पृष्ठवर्तितया सहायत्वेन गृहीत उच्यते । एतदुक्तं भवति—पूर्वान् संयोगविभागानङ्गीकृत्यान्त्योऽभिव्यनक्तीति । इदमत्राकूतम्—कोष्ठ्यो वायुरुरःप्रभृतिष्वष्टसु स्थानेषु संयोगविभागौ जनयन् क्रमेण श्रोत्रदेशं प्राप्तासीदन्नपेक्षितपूर्वसंयोगविभागः श्रोत्रं संस्करोति, अन्यथा विशेषशब्दाभिव्यक्त्यभावप्रसङ्गात् ; स्थानविशेषाभिघातवशेन हि वर्णविशेषोपलब्ध्यनुगुणसंस्कारोदयो नान्यथेति । स्थानाभिघातवशेन वायुविशेष एवोत्पन्नो विशिष्टशब्दोपलब्धये निमित्तमिति चेत्तत्राह—तदनुग्राहकवशादुत्पत्तिरिव कार्यम् । यदि तदनु[5]ग्राहकवशादुत्पत्तिः, तदा कार्यमेव परं तदनुग्राहकवशादस्तु । यत एव स्थानाभिघातापेक्षा, अत एव च पूर्ववेगानुवर्त्युपरमः संस्काराणाम् । पूर्वो यो

---

१. स्वदेशानुभवा-ग.
२. ततः ग.
३. Added. अपि. ग.
४. Added. न हि. क.
५. तदनुग्रहवशात्. ग.

बृहती

पूर्ववेगानुवर्त्युपरमः संस्काराणाम् । तस्मादात्मोदयानुरूपमुपजनयन्तस्तथा तथा तमवगमयन्ति ।

"कामं देशा एव भिन्नाः स्युः" इति किमर्थोऽयमुपन्यासः ?

पञ्चिका

वेगस्तदनुवर्त्युपरमः संस्काराणां वायूनाम् । संस्क्रियते यैः श्रोत्रं ते संस्काराः । अयमाशयः——बलवताभिघातेन यो वायुः प्रेर्यते, तस्य चिरकालानुवर्ती वेगो भवति ; वेगाख्याच्च संस्काराद्वायुषूत्तरकर्माण्युत्पद्यन्ते ; चिरकालानुवर्तिनि च वेगे वायुः दूरं दूरतरं च प्रसर्पति ; तस्य तु वेगविनाशे वायूनां गतिविच्छेदलक्षण उपरम इति । तस्मादात्मानुरूपं शक्त्युद्बोधमुपजनयन्तः संयोगविभागास्तथा तथा भिन्नमिव देशान्तरवर्तिनमिव चार्थमवगमयन्ति ॥

"कामं देशा एव भिन्नाः स्युः" [१]इति भाष्यमनुभाषितम् । आक्षिपति —**किमर्थोऽयमुपन्यासः ?** अत्र हि भाष्ये "ऐकरूप्ये सति देशभेदेऽपि कामं देशा एव भिन्नाः स्युर्न शब्दः" इत्युपन्यस्तम् ; स चायमुपन्यासः किमर्थः ? नन्वस्येदं प्रयोजनम्, यद्देशभेदेऽपि शब्दो न भिद्यत इति । उच्यते—नेदमस्य प्रयोजनं संभवति, शब्दस्य दे[२]शभेदाभावात् ; श्रोत्रस्थ एव सर्वः शब्दो गृह्यते ; नाभिव्यञ्जकदेशस्थः, श्रोत्रस्य प्राप्यकारित्वात् । अथाभिव्यञ्जकदेश एव शब्द उपलभ्यते ; तदनुपपन्नम्, शब्दसंस्कारपक्षप्रसङ्गात् ; अभिव्यञ्जकदेशे हि शब्दस्य यदुपलम्भनम्, तत्रेदमेव कारणं यदुत तत्र शब्दोऽभिव्यक्त इति ; श्रोत्राभिव्यक्तिपक्षे हि श्रोत्रं स्वसमवेतमेव शब्दं गृह्णीयात् । न

---

१. Omitted. इति. ग. २. Omitted. देश- ग.

### बृहती

प्राप्नोति, यदि श्रवणेन्द्रियं संयोगविभागदेशमागच्छेत् ; न चैतदस्ति, भाष्य एव प्रत्युक्तत्वात् । अत एव "कामम्" इत्युक्तम् । सत्त्वान्तर-पक्षेऽपि तावत् भेदो न प्राप्नोतीत्यभिप्रायः । ननु एकस्यानेकत्रोप-लब्धिः । मूर्खप्रलपितमेतत् ; एकस्यानेकत्रोपलब्धिः परिचोदिता परिहृता ॥

### पञ्चिका

च वाच्यम् 'भवतु शब्दसंस्कारः' इति । कुतः ? [1]तस्मादेव हि शब्द-संस्कारः प्राप्नोति युक्तो भवति ; यदि श्रवणेन्द्रियं संयोगविभाग-देशमागच्छेत् । संयोगदेशगमनेन हि तस्मिन् पक्षे श्रोत्रस्य प्राप्यकारिता निर्वहति, नान्यथा । न चैतदस्ति । श्रोत्रस्य गमनम् । भाष्य एव प्रत्युक्तत्वात् ; "प्रत्यक्षा हि कर्णशष्कुली तद्देशा गृह्यते" इत्युक्तम् । तस्मा-दनर्थकोऽयमुपन्यासः । समाधत्ते—यत एव परमार्थतो देशभेदो नास्ति, अत एव "कामम्" इत्युक्तम् । अभ्युपगम्यवादप्रदर्शनार्थम् । सत्त्वान्तर-पक्षेऽपि । यद्यपि सत्त्वान्तरे शब्द उपलभ्यते, तथापि तावद्भेदो नास्ति ; ऐक्यप्रतीतेः—इत्यभिप्रायो भाष्यकारस्य "कामं देशा एव" इति वदतः । [2]तत्र कश्चिच्चोदयति—नन्वेकस्य पुरुषस्यानेकत्रोपलब्धिः पूर्वपक्ष उक्ता ; अत्र पुनरादित्ये अनेकेषां पुरुषाणामनेकत्रोपलब्धि[3]ः ; तस्मादादित्यदृष्टान्तो न तुल्य इति । परिहरति—मूर्खप्रलपितमेतत् । यस्मादे[4]कस्य पदार्थस्या-नेकत्रोपलब्धिः परिचोदिता परिहृता च सैव ; एकेन वा पुरुषेण बहुभिर्वा पुरुषैरिति नायं भेदो विवक्षितः सर्वथा ; कथमेकस्यानेकत्रोपलब्धिरिति चोदितम् ; तच्चादित्यदर्शनेन समर्थितमिति नानुपपन्नं किञ्चित् ॥

---

१. यस्मात्. ग.
२. अत्र चोदयति. ग.
३. Added. परिचोदिता. ग.
४. एकस्य एकेन. ग.

## शब्दान्तरमविकारः ॥ १६ ॥

भाष्यम्

न च 'दध्यत्र' इत्यत्र प्रकृतिविकारभावः। शब्दान्तरमिकाराद्यकारः। न हि यकारं प्रयुयुक्षमाणा इकारमुपाददते यथा कटं चिकीर्षन्तो वीरणानि। न च सादृश्यमात्रं दृष्ट्वा प्रकृतिर्विकृतिर्वोच्यते। न हि दधिपिटकं दृष्ट्वा कुन्दपिटकं च प्रकृतिविकारभावोऽवगम्यते। तस्मादयमप्यदोषः॥

बृहती

"शब्दान्तरमविकारः" नैवेह "इको यणचि" इति प्रकृतिविकारभाव उपदिश्यते; न हि लोके यकारं प्रयुयुक्षमाणा इकारमुपाददते। लोकसिद्धस्य चादेशा भवन्ति। तस्मादयमर्थ आदेशिकः—अचि परत इकारस्य स्थाने यकारः। सादृश्यं तु प्रकृतिविकारभावेऽनैकान्तिकम्।

पञ्चिका

"शब्दान्तरमविकारः" इति सूत्रं पठितम्। नैवेह "इको यणचि" इति प्रकृतिविकारभाव उपदिश्यते। येन पाणिनेरनुशासनं-विरोधः[1] स्यात्। कस्मात्प्रकृतिविकारभावो नोपदिश्यत इत्यत्राह—न हि लोके यकारं प्रयुयुक्षमाणा इकारमुपाददते। तथापि किमित्याह—लोकसिद्धस्य चादेशा[2] भवन्ति। यद्यस्तु लोके सिद्धं तस्यैवादेशः सूत्रेणोपदेशो भवति। यत एवम्, तस्मादयमर्थ आदेशिकः। अचि परत इकारस्य स्थाने प्रसङ्गे यकारः प्रयोक्तव्य इति; तेन पाणिनिवचनात् प्रकृतिविकारभावो नावगम्यते। सादृश्यं तु प्रकृतिविकारभावेऽनैकान्तिकम्।

---

१. अनुशासनं विरोधि. ग. २. आदेशो भवति. ग.

## नादवृद्धिः परा ॥ १७ ॥

भाष्यम्

यच्चैतत् बहुभिर्भेरीमाघ्नद्भिः गोशब्दमुच्चारयद्भिः महान् शब्द उपलभ्यते ; तेन प्रतिपुरुषं शब्दावयवप्रचय इति गम्यते । नैवम् ; निरवयवो हि शब्दः, अवयव-

बृहती

दधिपिटककुन्दपिटकयोरदर्शनात् इत्युक्तम्, अतः सिद्धं शब्दान्तरत्वम् ॥

"नादवृद्धिः परा" तुल्यं भेदपरिहारेण ; यथैव हि तत्र भिन्ना भिन्नमिवावगमयन्ति, एवमत्रापि प्रचिताः प्रचितमिव, विभागस्थिता विभक्तमिव । अतो महानिव अवयववानिव च भ्रान्तिरुपपद्यते ।

पञ्चिका

दधिपिटककुन्दपिटकयोरदर्शनात् प्रकृतिविकारभावस्येत्युक्तं भाष्ये । अतः सिद्धं शब्दान्तरत्वम् । यकारस्य, न पुनरिकारविकारत्वं यकारस्य ॥

"नादवृद्धिः परा" इति सूत्रं पठितम् । तुल्यं भेदपरिहारेण । नादवृद्ध्या महत्त्वं वर्णानाम् । तदेव दर्शयति—यथैव हि तत्र भेदपरिहारे भिन्ना नादाः शब्दं भिन्नमिवावगमयन्ति, एवमत्रापि प्रचिताः महान्तः प्रचितमिव महान्तमिव, विभागस्थिताः विभागेन अवयवेन स्थिताः, सावयवा इति यावत्, विभक्तमिव सावयवमिव । अतो महानिव अवयववानिव च भ्रान्तिरुप[1]पद्यते । अत्रेदं तत्त्वम्—बहवो वायवः समानस्थानकरणप्रेरिताः परस्परनिरपेक्षा युगपदेव कृत्स्नां कर्णशष्कुली-मण्डलस्य नेमिं प्राप्नुवन्तो निरन्तराः श्रोत्रदेशमेव शब्दं निरन्तरं ग्राहयन्तो महान्तमिव शब्दं प्रतिपादयन्ति, यथा निरन्तरेषु गृह्यमाणेषु वृक्षेष्वेकमिव

---

१. उत्पद्यते. ग.

भाष्यम्

भेदानवगमात् ; निरवयवत्वाच्च महत्त्वानुपपत्तिः ; अतो न वर्धते । मृदुवच्च हि बलवच्चोच्चार्यमाणे तावन्त्येवाक्षराणि ; कर्णष्कुलीमण्डलस्य सर्वां नेमिं व्याप्नुवद्भिः संयोगविभागैर्नैरन्तर्येण अनेकशो ग्रहणात् महानिव, अवयववानिवोपलभ्यते ; संयोगविभागा नैरन्तर्येण क्रियमाणाः शब्दमभिव्यञ्जन्तो नादशब्दवाच्याः । तेन नादस्यैषा वृद्धिः, न शब्दस्येति ॥

बृहती

संस्कारानुरोधाच्छक्तेरुद्बोधः—इत्युक्तम् । तस्मादयमपि संस्कारभेदाग्रहणनिबन्धन एव भ्रमः । अतः स्थिते सप्रत्यभिज्ञप्रत्यक्षे पूर्वोक्तमनैकान्तिकीकृतमनित्यत्वे हेतुजातम् ॥

पञ्चिका

महान्तमवयविनं मन्यत इति । कथं पुनरेवमित्यत्राह—संस्कारानुरोधाच्छक्तेरुद्बोध इत्युक्तम् । वायवीयसंयोगविभागानुरोधाच्छक्तेः श्रोत्रवर्तिन्या उद्बोध इत्युक्तम् ; तेन तदनुरोधेन भ्रान्तिरुपजायत इति । तस्मादयमपि संस्कारभेदाग्रहणनिबन्धन एव भ्रमः । यो हि संस्कारभेदं जानाति, स तद्वशेन 'बहवः शब्दबुद्धयो युगपदुत्पन्नाः, न पुनरेक एव महाञ्छब्द उपलभ्यते' इति कल्पयति ; तेन संस्कारानभिज्ञस्येयं भ्रान्तिरिति । उपसंहरति—अतः सिद्धे सप्रत्यभिज्ञप्रत्यक्षे पूर्वोक्तमनैकान्तीकृतमनित्यत्वे हेतुजातम् । प्रत्यभिज्ञाशब्देनात्र ज्ञानधर्मः पूर्वानुभवभावनावमर्शेन 'स एवायम्' इति वस्तुग्राहकत्वमुक्तम्, न ज्ञानमेव ॥

---

१. Omitted. अनुरोध. ग. ३. अनित्यत्वज्ञानम्. ग.

२. उद्बोधक. ग.

# नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥१८॥

भाष्यम्

नित्यः शब्दो भवितुमर्हति । कुतः ? दर्शनस्य परार्थत्वात् । दर्शनमुच्चारणम्, तत् परार्थम्, परमर्थं

बृहती

इदानीं सप्रत्यभिज्ञप्रत्यक्षस्य शब्दविषयतोच्यते—"नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्" इति । "दर्शनस्य परार्थत्वात्" इति कस्यायं हेतुः ? नित्यतायाः शब्दस्य । ननु चायमपक्षधर्मः ; अपक्षधर्मस्य चास्य हेतुत्वं नास्तीति नैयायिकाः । अश्रुतशास्त्रा हि ते । दर्शनमेवात्र परार्थतयोपन्यस्यते ; तच्च निर्विषयं नास्तीति शब्दोऽत्र विषयतयोपन्यस्यते । ततः

पञ्चिका

इदानीं सप्रत्यभिज्ञस्य प्रत्यक्षस्य शब्दविषयतोच्यते । शब्दविषयेऽपि सप्रत्यभिज्ञं प्रत्यक्षमस्तीत्युच्यते । "नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्" इति सूत्रं पठितम्, आक्षिपति— दर्शनस्य परार्थत्वादिति कस्यायं हेतुः ? उत्तरम्—शब्दनित्यतायाः । आक्षेप्ताह—ननु चायं परार्थत्वलक्षणो धर्मोऽपक्षधर्मः ; सिसाधयिषितधर्मो हि धर्मी पक्षशब्देनोच्यते ; अत्र च शब्दस्य नित्यतालक्षणो धर्मः साधयितुमिष्ट इति शब्दः पक्षः । न च तस्य परार्थत्वं धर्मः । किं तर्हि ? दर्शनस्य । तथापि किमित्याह—अपक्षधर्मस्य चास्य हेतुत्वं नास्तीति नैयायिकाः । न्यायविदो मन्यन्ते । समाधाताह—अश्रुतशास्त्रा हि ते । न तैर्मीमांसाशास्त्रं श्रुतम्, य एवं मन्यन्ते । कथं तर्हि शास्त्रार्थ इत्यत्राह—दर्शनमेवात्र परार्थतयोपन्यस्यते । दर्शनविशेषणतयात्र परार्थतोपन्यस्यते । तच्च दर्शनं निर्विषयं क्वचिदपि नास्तीति शब्दोऽत्र विषयतयोपन्यस्यते ; विषयतया शब्दः परार्थदर्शनसम्बन्धीत्यर्थः । ततः

भाष्यम्

प्रत्याययितुम् ; उच्चरितमात्रे हि विनष्टे शब्दे न चान्योऽन्यानर्थं प्रत्याययितुं शक्नुयात् ; अतो न परार्थमुच्चार्येत । अथाविनष्टः, ततो बहुश उपलब्धपूर्वत्वादेवार्थावगमः—इति युक्तम् । अर्थवत्सादृश्यादर्थावगमः—इति चेत् ;

बृहती

किम् ? इदं ततः—परार्थदर्शनसम्बन्धिता हेतुः । एतदुक्तं भवति —परार्थं दर्शनं यस्य । तस्य किम् ? नित्यता । कस्य यथा ? सर्वस्येति ब्रूमो धूमादेः । ननु च स्वप्रतिपत्त्यर्थमपि दर्शनं धूमादेः । भवतु ; परप्रतिपत्त्यर्थतापि, अनिराकरणीयं चैतदविरोधात् । शब्देऽपि

पञ्चिका

किम् ? उत्तरम्—इदं वक्ष्यमाणं ततो भवतीत्यर्थः । परार्थदर्शनसम्बन्धिता हेतुः । इति भवति । एतदुक्तं भवति—परार्थं दर्शनं यस्येति । मध्य एव पृच्छति—तस्य किम् ? उत्तरम्—नित्यता । पुनः पृच्छति —कस्य यथा ? उत्तरम्—सर्वस्य धूमादेर्यथेति ब्रूमः । तेनेत्थमिदं साधनं प्रयोक्तव्यम्—शब्दो धर्मी, नित्य इति साध्यो धर्मः, परार्थदर्शनसम्बन्धित्वात् यो यः परार्थदर्शनसम्बन्धी स नित्यः, यथा धूमादिरिति । अत्र हेत्वसिद्धिमाशङ्कते—ननु च स्वप्रतिपत्त्यर्थमपि धूमादेर्दर्शनमिति । परार्थत्वमसिद्धमिति भ्रान्तस्याशङ्का । परिहरति—भवतु स्वप्रतिपत्त्यर्थता, परप्रतिपत्त्यर्थताप्यस्ति । तेन नासिद्धिर्हेतोः । ननु च परार्थता नास्त्येव मीमांसकमते ; तत्राह—अनिराकरणीयं चैतदविरोधात् । न हि परार्थत्वे [1]धूमादीनामङ्गीक्रियमाणे किञ्चिद्विरुध्यते । शब्दे च विद्यमानत्वात् । परार्थतायाः । धूमादिष्वपि यदि भवति, तदा का क्षतिः ? ननु च नित्यत्वे साध्ये न धूमादेर्दृष्टान्तता तेषामनित्यत्वादित्यत्राह—

१. Omitted. अङ्गीक्रियमाणे—अत्र चोदयति. ग.

भाष्यम्

न कश्चिदर्थवान्, सर्वेषां नवत्वात् । कस्यचित्पूर्वस्य

बृहती

विद्यमानत्वात् । कालान्तरावस्थायित्वं च नित्यशब्देनोच्यते, न सदकारणत्वम् । ननु च सन्नकारणश्च शब्द इष्यते । बाढमिष्यते ; स तु परार्थमात्रतयैव दर्शनस्य सिध्यति । किमिति तर्हि विशेष उच्यते ? कथं नामानित्यस्यापि धूमादेर्दृष्टान्तता स्यात् । ननु

पञ्चिका

कालान्तरावस्थायित्वमुच्चारणकालात्कालान्तरावस्थायित्वं नित्यशब्देनोच्यते ; न **सदकारणत्वम्** । नित्यशब्देन हि स्वशक्त्या सदकारणमुच्यते ; 'यत्सदकारणं तन्नित्यम्' इति लोकप्रसिद्धम्, यथा गगनमात्मेत्यादि । यथाह भगवान् काश्यपः "सदकारणं नित्यम्" इति । तदिदं न नित्यशब्देनोच्यते ; अपि तु लक्षणया कालान्तरावस्थायित्वमेव । अत्र चोदयति—**ननु च सन्नकारणश्च शब्द इष्यते** । तेन श्रौतमेव नित्यत्वं नित्यशब्देन किमिति नोच्यत इति भावः । परिहरति—**बाढमिष्यते ; स तु पारार्थमात्रतयैव दर्शनस्य सिध्यति** । यदैव हि कालान्तरावस्थायित्वेन शब्दस्योच्चारणस्य परप्रतिपत्त्यर्थता स्थिता, न शब्दकारणता, तदैवं सिध्यतीति न प्रयत्नेन साध्यते । अत्र चोदयति—यदि हि तावदिष्यते सदकारणता शब्दस्य, किमिति तर्हि प्रयत्नेन नित्यशब्देऽप्युच्चारिते कालान्तरावस्थायितैव साध्यत इति विशेष उच्यते ; यावता नित्यतैव साध्यताम् ; न कालान्तरावस्थायितेति । परिहरति—**कथं नामानित्यस्यापि धूमादेर्दृष्टान्तता स्यादिति** । यदि हि नित्यतैव साध्येत तदा धूमादीनां दृष्टान्तता न स्यात्, साध्यविकलत्वात् ; धूमादिव्यक्तयो हि सामान्येनोपाधिना अग्निसम्बन्धव्याप्ता अग्निव्यक्तिमेव गमयन्ति । न च धूमादिव्यक्तीनां सदकारणता, किन्तु कालान्तरावस्थायिता । तस्मात् दृष्टान्तलाभाय कालान्तरावस्थायितैव साध्या । अपरश्चोदयति —ननु चास्यापि शब्दस्यानित्यता प्राप्नोति, प्रसिद्धे धूमादौ दर्शनात् ।

भाष्यम्

**कृत्रिमः सम्बन्धो भविष्यति इति चेत्, तदुक्तम् ।**

बृहती

चास्याप्यनित्यता प्राप्नोति, प्रसिद्धे दर्शनात् । अत एव कालान्तरावस्थायित्वमात्रं साध्यतयोच्यते । कालान्तरावस्थायितया च सिद्धं शब्दस्य सदकारणत्वम् । दर्शनमेव हि तस्य कारणतया शङ्कितं परैः ; तच्च परार्थतया अकारणतां गतम् । तस्मात् परार्थदर्शनसम्बन्धितामात्रस्य हेतुत्वं शब्दस्य सदकारणत्वं सिद्धम् । ननु च तत्तुल्योपादानमभेदमुपादाय सिध्यति पारार्थ्यं दर्शनस्य । सत्यं

पञ्चिका

यथाभूतो हि दृष्टान्ते धर्मो दृष्टः, तथाभूतेनैव दार्ष्टान्तिकेऽपि भवितव्यम् ; तेन धूमवदनित्यता शब्दस्य प्राप्नोति । परिहरति—**अत एव कालान्तरावस्थायित्वमात्रं साध्यतयोच्यते** । यत एव दृष्टान्तेऽनित्यता दृश्यते , अत एव कालान्तरावस्थायित्वमात्रं साध्यतयोच्यते ; अन्यथा दृष्टान्ताभावप्रसङ्गात् । ननु भवतु कालान्तरावस्थायिता, नित्यता तु तद्वदेव न स्यादित्यत्राह—**कालान्तरावस्थायितया च सिद्धं सदकारणत्वं शब्दस्य** । तेनानित्यता न प्रसज्यते । तदा कथं सदकारणता सिध्यतीत्यत्राह—**दर्शनमेव हि तस्य कारणतया शङ्कितं परैः** । उच्चारणमेव हि शब्दस्य कारणतया शङ्कितम् ; तच्च कालान्तरावस्थायित्वे सिद्धे द्वितीयश्रवणे परार्थतया परप्रतिपत्त्यर्थतया अकारणतां शब्दं प्रति गतम्, किन्तु अभिव्यञ्जकमेव ; ततश्च प्रथमश्रवणेऽपि तदभिव्यञ्जकमेवेति सिद्धमकारणत्वम् । उपसंहरति—**तस्मात् परार्थदर्शनसम्बन्धिमात्रस्य** धूमादेर्दृष्टान्तत्वं शब्दस्यापि **सदकारणत्वं सिद्धम्** । अत्र चोदयति—**ननु च तत्तुल्योपादानमभेदमुपादाय सिध्यति पारार्थ्यं दर्शनस्य** । अस्यार्थः—उच्चारितमात्रे हि विनष्टे शब्दे परार्थमुच्चारणं न घटते, सङ्केतितस्य शब्दस्य पुनर्व्यवहारकालेऽसत्त्वादसङ्केतितस्य चाप्रतिपादकत्वात् ; यदा पुनः सङ्केतिते

भाष्यम्

**'सदृशः' इति चावगम्यते व्यामोहात्प्रत्ययो व्यावर्तते ;**

बृहती

**सिध्यति ; किन्तु नेत्थंभूतत्वे प्रमाणमस्ति । न कस्यचिदप्यासंसारं जन्तोः 'पूर्वोक्तसदृशमुच्चारयामि, तत्सदृश एवायम्' इति ज्ञानोत्पादो दृष्टः । अत एव चाविपरीतं प्रतिपद्यन्ते । अन्यथा मालाशब्दप्रत्ययस्येव शालाशब्दसंवेदनाद्विपर्ययः स्यात् । ननु च न**

पञ्चिका

शब्दे विनष्टेऽपि तत्तुल्योऽपरो यः शब्द उत्पद्यते तत्सादृश्येन व्यामूढा अभेदमुपादायार्थं प्रतिपद्यन्त इति घटते, तदा तद्दर्शनस्य परार्थतापि सिध्यतीति नैकान्तेन कालान्तरावस्थायितां शक्नोति गमयितुम् । परिहरति— **सत्यं सिध्यति ; किन्तु नेत्थंभूतत्वे प्रमाणमस्ति ।** अस्य तत्प्रत्ययस्य प्रातिभासिकस्तावद्बाधकप्रत्ययो नास्ति शुक्तिकारजतादिवत् ; आनुमानिकोऽपि नास्तीत्युक्तम् "सतः परमदर्शनम्" इत्यत्र ; तेन तत्प्रत्ययोऽयं व्यामोह इति न शक्यते वक्तुमिति । प्रातिभासिकबाधाभावमाह—न कस्यचिदप्यासंसारं जन्तोः 'पूर्वोच्चरितसदृशमुच्चारयामि' इत्युच्चारयितुः 'तत्सदृशोऽयम्' इति श्रोतुर्वा विज्ञानोत्पादो दृष्टः । अनेन "कस्यचित्कृत्रिमो भविष्यति सम्बन्ध इति चेत् तदुक्तम्" इति भाष्यं व्याख्यातम् । भाष्ये चोक्तशब्देन "यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो नान्यः" इत्युक्तम् ; तेन कृत्रिमसम्बन्धशब्दाभेदभ्रमेणार्थप्रत्ययो न भवतीत्युक्तं भवति । यत एवायमभ्रान्तस्तत्प्रत्ययः, **अत एव चाविपरीतं प्रतिपद्यन्ते ।** अन्यथा भ्रान्तत्वे हि **मालाशब्दप्रत्ययस्येव शालाशब्दसंवेदनाद्विपर्ययः स्यात् ।** यथा मालाशब्दप्रत्ययस्य शालाशब्दविषयस्यार्थे विपर्ययो[1] भवति ; शालाशब्दविषयात् सत्यसंवेदनात्—येन हि शालाशब्दं मालाशब्दबुद्ध्या गृहीत्वा मालार्थः प्रतिपन्नः, तस्य च पुनः शालाशब्दे

---

१. विषयः ग.

भाष्यम्

शालाशब्दान्मालाप्रत्ययवत् । यथा गावीशब्दात् सास्ना-दिमति प्रत्ययस्यानिवृत्तिः, तद्वद्भविष्यति इति चेत् । न हि गोशब्दं तत्रोच्चारयितुमिच्छा ; नेहान्यशब्दोच्चिचार-यिषा ; न चैकेनोच्चारणयत्नेन संव्यवहारश्चार्थसम्बन्धश्च शक्यते कर्तुम् । तस्माद्दर्शनस्य परार्थत्वात् नित्यः शब्दः ॥

बृहती

सादृश्येऽपि विपर्ययो दृश्यते यथा गोगावीशब्दयोः । तदेकग्राहिणां तु न दृश्यते विपर्ययः, न सादृश्यग्राहिणाम् ; तत्त्वविदां त्वनुत्पत्तिरेव । किमिदं तत्त्वविदामिति ? गोशब्दस्य गाव्यादयोऽपभ्रंशाः—इत्येवंविदः तत्त्वविदः । तेषां नैव गाव्यादिभ्योऽप्यर्थज्ञानमुत्पद्यते गोशब्दादेवार्थं प्रतिपद्यन्ते—इत्युक्तं व्याख्यातृभिः । न चानादितया संसारस्यादि-

पञ्चिका

तत्त्वतो ज्ञाते मालाप्रत्ययो निवर्तते ; न चेह तथा विपर्ययो भवति ; तस्मान्नेयं भ्रान्तिरिति । ननु च सादृश्येऽपि शब्दयोरवगतेऽर्थप्रत्ययविपर्ययो न दृश्यते यथा गोगावीशब्दयोः गोसदृशादपि गावीशब्दात्[१] गवार्थप्रत्ययो न विपर्येति, तथेहापि स्यादित्यर्थः । परिहरति—तदेक[२]ग्राहिणां तु न दृश्यते विपर्ययः, न सादृश्यग्राहिणाम् । अस्यार्थः—ये गावीशब्दमेवैकं वाचकं मन्वानाः प्रयुञ्जते शब्दमर्थं च प्रतिपद्यन्ते, तेषां नास्ति विपर्ययः ; ये पुनः गोशब्दसादृश्येन भ्रान्ताः, तेषां विपर्ययो भवत्येव । तत्त्वविदां तु अनुत्पत्तिरेव । गाव्यादिशब्देभ्यः । पृच्छति—किमिदं तत्त्वविदामिति ? गोशब्दस्य गाव्यादयोऽपभ्रंशाः—इत्येवंविदस्तत्त्वविदः ; तेषां नैव गाव्यादिभ्योऽप्यर्थज्ञानमुत्पद्यते, गोशब्दादेवार्थं प्रतिपद्यन्ते—इत्युक्तं व्याख्यातृभिः । अस्यार्थः—सर्वेऽप्येतेऽपभ्रंशा आदिमन्तः ; तद्[३] केनचि-

---

१. Added. अपि. ग.
२. एकत्व- क.
३. तत्र. ग.

बृहती

**शब्दता कस्यचित्कल्पयितुं शक्यते, यत्सदृशोपादानात् संव्यवहार-सिद्धिः । तस्मात् सप्रत्यभिज्ञप्रत्यक्षमूलोऽयं व्यवहार इति स्थितम् ।**

पञ्चिका

वृद्धेन गोशब्दमुच्चारयितुकामेन प्रमादात् गावीत्युच्चारितम् ; तत्रापरो वृद्धोऽर्थ-प्रकरणादिवशेन तदीयां विवक्षामवगम्य 'गोशब्दमुच्चारयितुकामो गावीत्यु-च्चरितवान्' इत्युच्चिचारयिषितात् गोशब्दादेव गवार्थं प्रतिपद्यते ; न पुन-र्गावीशब्दादिति । **न चानादितया संसारस्यादिशब्दता कस्यचित्कल्पयितुं शक्यते, यत्सदृशोपादानात् संव्यवहारसिद्धिः** । यदि संसार आदि-मान्, तदाद्यः शब्दोऽर्थवान् सङ्केतवशेन, तत्सादृश्यादपरेभ्योऽर्थप्रतीतिः कल्प्यते ; न चैतदस्ति । तस्मादियमपि कल्पना नोपपद्यते—अर्थवत्सादृश्या-[1]दर्थावगम इति । **तस्मात्सप्रत्यभिज्ञप्रत्यक्षमूलोऽयं व्यवहार इति स्थितम्** । व्यवहारदर्शनेन प्रत्यभिज्ञैव लोकानामस्तीति साधितम् ।

अत्र केचित् चोदयन्ति—प्रत्य[2]भिज्ञानरूपं प्रत्यक्षं न भवतीति, तदुदये कारणाभावात् ; इन्द्रियमात्रेण हि तावदिदं जनयितुं न शक्यते, तस्य पूर्वानुभूतार्थविषयीकरणासामर्थ्यात् । न च पूर्वानुभवभावितभावना-सचिवेनेन्द्रियेण जनयितुमिदं शक्यते, भावनाया इदानीन्तनेऽर्थेऽव्यापारात् ; यदेव हि पूर्वानुभवेन विषयीकृतम्, तदेव भावनावशेन स्मर्यते ; न पुनरपूर्वमेव गृह्यत इति । तदिदमयुक्तम् ; स्थापितो हि सर्वानुभव-समवायी पुरुष एको विषयाणामनुभविता । स च प्रतिबुद्धपूर्वानुभव-भावनो व्याप्रियमाणकरणः पूर्वापरानुसन्धानसमर्थः 'तदिदम्' इत्येकेनैव स्मरणग्रहणच्छायावाहिना ज्ञानेन कालान्तरावस्थायि वस्तु गृह्णाति । केवला भावना स्मृतिहेतुः ; केवलं चेन्द्रियं ग्रहणमात्रकारणम् ; परस्परोप-कारकतया[3] तु विलक्षणं कार्यं जनयत इति नानुपपन्नम् । तदुक्तम् "विषयप्रत्यभिज्ञा चैतन्निबन्धना" इति । एतत्त्वत्र वक्तव्यम्—क्षणिक-त्वादभिव्यक्तेः कथं शब्दे प्रत्यभिज्ञेति । गृहीते हि वस्तुनि संस्कारो-

---

१. सादृश्यपदेऽर्था- ग.
२. प्रत्यक्षज्ञान- ग.
३. कारमात्रतया. ग.

बृहती

अन्यदेव च साधितम्, अन्यच्चोपसंहृतम्; कालान्तरावस्थितिः साधिता, सप्रत्यभिज्ञं प्रत्यक्षमुपसंहृतम्; अन्यदेवोपन्यस्तम्, अन्यच्चोपनिपतितम्। तदेवेदम्; प्रत्यभिज्ञानादेव हि कालान्तरावस्थायिता सिध्यति। कालान्तरावस्थितिश्च सप्रत्यभिज्ञप्रत्यक्षगम्येत्युक्तम्। यदि प्रत्यभिज्ञयैव कालान्तरावस्थायित्वं साध्यते, किमिति तर्हि परार्थदर्शन-सम्बन्धिता हेतुरित्युक्तम्? यत एव प्रत्यभिज्ञयैव कालान्तरावस्थायिता, अत एव परार्थदर्शनसम्बन्धिता हेतुरित्युक्तम्; प्रत्यभिज्ञैव ह्यभिन्नार्थ-

पञ्चिका

द्बोधे सति प्रत्यभिज्ञा; न च शब्दोऽगृहीतः प्रतिबुद्धसंस्कारेण प्रत्यभिज्ञातुं शक्यते, तावत्कालमभिव्यक्तेरनवस्थानात्। उच्यते, न वस्तुग्रहणमेवैकं संस्कारोद्बोधकम्; नानाप्रकारत्वात्तदुद्बोधहेतूनामिति कारणान्तरोद्बुद्धसंस्कारः प्रथमसन्निपात एव शब्दं प्रत्यभिजानातीति सकलमविकलम्।

अत्र चोद्यमाह—अन्यदेव साधितमन्यच्चोपसंहृतम्। अत उपक्रमोपसंहारौ परस्परविरुद्धौ। तदेवाह—कालान्तरावस्थितिः साधिता। नित्यस्त्विति वदता। सप्रत्यभिज्ञं प्रत्यक्षमुपसंहृतम्। अन्यदेवोपन्यस्तमन्यच्चोपनिपतितम्। यथान्यस्मिन्नस्त्रे क्षिप्तेऽन्यदुपनिपतति, तादृशमेवेदमिति। समाधानमाह—तदेवेदम्। यदुपक्रान्तम्, तदेवोपसंहृतम्; नान्यत्। कुतः? प्रत्यभिज्ञानादेव हि कालान्तरावस्थायिता सिध्यति[1]। अयमाशयः—कालान्तरावस्थायिताया एव सिद्धये या प्रत्यभिज्ञा साधिता, सैवोपसंहृतेति नास्ति विरोधः। यदि प्रत्यभिज्ञयैव कालान्तरावस्थायित्वं साध्यते, किमिति तर्हि परार्थदर्शनसम्बन्धिता हेतुरित्युक्तम्? उत्तरम्—यत एव प्रत्यभिज्ञयैव कालान्तरावस्थायिता, अत एव परार्थदर्शनसम्बन्धिता हेतुरित्युक्तम्। प्रत्यभिज्ञया[2] हि शब्दे प्रत्युच्चारणं परापरत्वे निराकृते दर्शनस्य[3] परार्थता भवति; अन्यथा हि शब्दोत्पत्त्यर्थतैव स्यादुच्चारणस्य। नन्वभिन्नार्थदर्शन-

१. Omitted. सिध्यति. ग. ३. Omitted. दर्शनस्य. ग.

२. प्रत्यक्षया. ग.

# सर्वत्र यौगपद्यात् ॥ १९ ॥

भाष्यम्

गोशब्दे उच्चरिते सर्वगवीषु युगपत् प्रत्ययो भवति ; अत आकृतिवचनोऽयम् । न चाकृत्या शब्दस्य सम्बन्धः

बृहती

दर्शनमित्युच्यते, न पुनरन्यत् । स्वरूपस्य दर्शनान्तरसिद्धत्वात् तत्पूर्वकत्वाच्च प्रत्यभिज्ञायाः । न च स्वार्थपरार्थतामेको यत्नः प्रतिपत्तुं क्षमः ॥

"सर्वत्र यौगपद्यात्"—इति । अनेनान्वयव्यतिरेकसमधिगम्यमर्थावगतिहेतुत्वं दर्शयति शब्दस्य । किमतो यद्येवम् ? कालान्तराव-

पञ्चिका

निबन्धनोऽयं शब्दानां प्रत्युच्चारणं परापरभावनिषेधः ; न प्रत्यभिज्ञानिबन्धन इत्यत्राह—प्रत्यभिज्ञैव ह्यभिन्नार्थदर्शनमित्युच्यते, न पुनरन्यत् । ननु भवतु शब्दविषया प्रत्यभिज्ञा, तथापि कथं तद्बलेन दर्शनस्य परार्थतेत्यत्राह—स्वरूपस्य दर्शनान्तरसिद्धत्वात्, तत्पूर्वकत्वाच्च प्रत्यभिज्ञायाः । न च स्वार्थपरार्थतामेको यत्नः प्रतिपत्तुं क्षमः । अस्यार्थः—प्रथमे तावदुच्चारणे शब्दस्वरूपं तेनैव प्रथमेन दर्शनान्तरेण उच्चारणान्तरेण सिद्धं जनितमिति वक्तव्यम् ; तत्पूर्विका च द्वितीयोच्चारणे प्रत्यभिज्ञा ; तस्यां च सत्यामुत्पादितस्य शब्दस्वरूपस्य पुनरुत्पादनं न संभवतीति प्रयत्नस्य शब्दाभिव्यञ्जकतया परार्थत्वम् ; एवं च निश्चितपारार्थ्यः प्रयत्नो न प्रथमश्रवणे स्वार्थः शब्दस्वरूपनिष्पत्त्यर्थो भवितुमर्हति ; अपि तु द्वितीयश्रवणवदभिव्यञ्जक एवेति सिद्धं प्रत्यभिज्ञयैवोच्चारणस्य पारार्थ्यम् ॥

सर्वत्र यौगपद्यादिति । अनेनान्वयव्यतिरेकसमधिगम्यमर्थावगतिहेतुत्वं दर्शयति शब्दस्य । आकृत्यन्वये व्यक्त्यन्तरे[3]ऽपि शब्दप्रयोगात्

---

१. परापरता भाव. ग.
२. Omitted. उच्चारणे—द्वितीय. ग.
३. Omitted. अपि ग.

भाष्यम्

शक्यते कर्तुम् ; निर्दिश्य हि आकृतिं कर्ता संबध्नीयात् ; गोपिण्डे च बहूनामाकृतीनां सद्भावाच्छब्दमन्तरेण गोशब्दवाच्यां विभक्तामाकृतिं केन प्रकारेणोपदेक्ष्यति ? नित्ये तु सति गोशब्दे बहुकृत्व उच्चरितः श्रुतपूर्वश्चान्यासु गोव्यक्तिषु अन्वयव्यतिरेकाभ्यामाकृतिवचनमवगमयिष्यति ; तस्मादपि नित्यः ॥

बृहती

स्थायिता सिध्यति ; न हि कालान्तरानवस्थायिनोऽन्वयव्यतिरेकनिश्चयः ; अतः कालान्तरावस्थायिता सिध्यति । कालान्तरावस्थितिश्च सप्रत्यभिज्ञ-प्रत्यक्षसमधिगम्येत्युक्तम् । कथं पुनरन्वयव्यतिरेकसमधिगम्यमस्यार्थावगति-हेतुत्वम् ? आकृतेः पदार्थत्वात् । न चैकप्रयोगावगम्या आकृतेः पदार्थता, स्वातन्त्र्येणाग्रहणात् द्रव्याश्रितानाम् ; अगृहीतानां च पृथङ्निर्देशा

पञ्चिका

तदाकृतिव्यतिरेके चान्याकृतिकेऽप्रयोगादाकृतिवचनः शब्द इत्यवगम्यते ; अतोऽन्वयव्यतिरेकसमधिगम्यमर्थावगतिहेतुत्वं शब्दस्य । किमतो यद्येवम् ? उत्तरम्—कालान्तरावस्थायिता सिध्यति ; न हि कालान्तरानवस्थायिनोऽ-न्वयव्यतिरेकनिश्चयः ; अतः कालान्तरावस्थायिता सिध्यति । तथापि किमित्याह[1]—कालान्तरावस्थितिश्च सप्रत्यभिज्ञप्रत्यक्षसमधिगम्येत्युक्तम् । अतोऽनेनापि प्रकारेण शब्दे सप्रत्यभिज्ञं प्रत्यक्षमस्तीति साध्यते । कथं पुनरन्वयव्यतिरेकसमधिगम्यमस्यार्थावगतिहेतुत्वम्[2] ? यावताङ्गुलिनिर्देशेनैव किमिति न भवति 'इयं गौः' इति ? उत्तरम्—आकृतेः पदार्थत्वात् । भवत्वेवं तथापि किमित्याह—न चैकप्रयोगसमधिगम्या आकृतेः पदार्थता । कुतः ? स्वातन्त्र्येणाग्रहणात् द्रव्याश्रितानाम् । ये हि द्रव्याश्रिताः, न ते

१. किमित्यत्राह ग. २. Omitted. अस्य. ग.

## संख्याभावात् ॥ २० ॥

भाष्यम्

'अष्टकृत्वो गोशब्द उच्चरितः' इति वदन्ति, न 'अष्टौ गोशब्दाः' इति । किमतः, यद्येवम् ? अनेन वचनेना-

बृहती

योग्यत्वात् । तस्मात् व्यवहारसमधिगम्यैवाकृतिपदार्थता, न निर्देश-समाधिगम्या । व्यवहारश्चान्वयव्यतिरेकसमधिगम्य इति सिद्धा प्रत्यभिज्ञा ॥

"संख्याभावात्" तदेवेदं सप्रत्यभिज्ञं प्रत्यक्षं पुनरुपन्यस्यते हेतुप्रचयदर्शनार्थम् । हेतुप्रचये पुनः कोऽर्थोऽभ्यधिकः सिध्यति हेत्वन्तरनिरपेक्षत्वाद्धेतूनां स्वार्थसिद्धौ ? न खलु कश्चित् । अनर्थकस्तर्हि

पञ्चिका

स्वातन्त्र्येण गृह्यन्ते शौक्ल्यादिवत् ; द्रव्याश्रिता चाकृतिः ; स्वातन्त्र्येणा-गृहीतानां च पृथङ्निर्देशायोग्यत्वात् । तेन 'अस्य शब्दस्य वाच्या' इति न शक्यत आकृतिर्निर्देष्टुम् । तस्माद्व्यवहारसमधिगम्यैवाकृतिपदार्थता, न निर्देशसमधिगम्या । वृद्धव्यवहारादेवाकृतिवचनता गम्यते । व्यवहारश्चान्वय, व्यतिरेकज इत्यन्वयव्यतिरेकक्षमतया कालान्तरावस्थितिनिश्चयात् । प्रत्यभिज्ञया च विना कालान्तरावस्थित्यनिश्चयात् सिद्धा प्रत्यभिज्ञा ॥

"संख्याभावात्" इत्यनेनापि सूत्रेण—तदेवेदं सप्रत्यभिज्ञं प्रत्यक्षं पुनरुपन्यस्यते । किमर्थः पुनरुपन्यास इत्यत्राह—हेतुप्रचयदर्शनार्थम् । पुनरुपन्यस्तम् । अत्र चोदयति—प्रचये पुनः कोऽर्थोऽभ्यधिकः सिध्यति ? हेतुना हि साध्यं साधयितव्यम् ; तच्चैकेनापि हेतुना सिध्यतीति नास्त्यधि-कोऽर्थः, हेत्वन्तरनिरपेक्षत्वाद्धेतूनां स्वार्थसिद्धौ । यदि हि यावत्परस्पर-सव्यपेक्षा एव साध्यं साधयेयुः, तदा भवेदर्थो हेत्वन्तरोपन्यासस्य ; न चैतदस्ति । उत्तरम्—न खलु कश्चित् । अर्थः । चोदयति—अनर्थकस्तर्हि

भाष्यम्

वगम्यते—प्रत्यभिजानन्तीति ; वयं तावत्प्रत्यभिजानीमः ; न नः करणदौर्बल्यम् ; एवमन्येऽपि प्रत्यभिजानन्ति—स

बृहती

प्रचयोपन्यासः । न चानर्थकः ; प्रचये सति दार्ढ्यमाहार्यधियां भवति ; तदर्थश्चायं प्रयासः, न कृतधियाम् । तस्मादस्ति प्रयोजनम् । कथमसौ कृत्वसुच् प्रत्यभिज्ञायां हेतुः ? एकस्यावृत्तौ दर्शनात् । सत्यमेकस्य ; स तु क्रियायाः "क्रियाभ्यावृत्तिगणने" इत्यादेशात् ; न हि शब्दः क्रिया । किं तर्हि ? द्रव्यं गुणो वा स्यात् । तदिदमन्यदीयमन्यस्योच्यमानं

पञ्चिका

प्रचयोपन्यासः । परिहरति—न चानर्थकः । प्रयोजनं दर्शयति—प्रचये बाहुल्ये सति हेतूनां दार्ढ्यमाहार्यधियामपि संस्कार्यधियामपि भवति ; आहार्यबुद्धिपुरुषानुग्रहार्थश्चायं प्रयासः, न कृतधियाम् ; तस्मान्मन्दबुद्धिप्रबोधनमस्ति प्रयोजनम् । इदानीमाक्षिपति—कथं पुनरसौ कृत्वसुच् प्रत्यभिज्ञायां हेतुः ? उत्तरम्—एकस्यावृत्तौ दर्शनात् । तेन 'अष्टकृत्वो गोशब्द उच्चरितः' इति कृत्वसुच्प्रत्यययोगादेकस्य शब्दस्यावृत्तिः प्रतीयते ; एकताप्रतीतिः प्रत्यभिज्ञेति भवति कृत्वसुच्प्रयोगः प्रत्यभिज्ञाहेतुः । पुनराक्षेप्ताह—सत्यमेकस्यावृत्तौ ; स तु क्रियायाः । एकस्या आवृत्तौ ; "क्रियाभ्यावृत्तिगणने" इत्यादेशः । पाणिनेर्भगवतः सूत्रम् । न च शब्दः क्रिया । किं तर्हि ? द्रव्यं गुणो वा स्यात् । एतच्चानास्थयाभिहितम् ; परमार्थतस्तु गुण एवायम्, अन्यथा ग्रहणानुपपत्तेः ; नित्यत्वे हि यदि शब्दो द्रव्यं स्यात्, तदा तस्याकाशवत् विभुत्वमङ्गीकरणीयम् ; अन्यथा सर्वत्रोपलम्भो न स्यात् ; विभुत्वे च सत्याकाशस्य श्रोत्रत्वात् तेन सह सम्बन्धो वाच्यः प्राप्यकारित्वाद्बहिरिन्द्रियाणाम् ; न च द्वयोर्विभुनोर्द्रव्ययोः संयोगोऽस्ति, संयोगहेत्वभावात् ; अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगो भवति ; न च द्वयोरपि सर्वगतयोः कर्मास्ति ; न चानवयवानां संयोगजोऽपि संयोगो घटते ; न च समवायोऽपि

भाष्यम्

एवायमिति । प्रत्यभिजानाना वयमिवान्येऽपि 'नान्यः' इति वक्तुमर्हन्ति । अथ मतम्, अन्यत्वे सति सादृश्येन

बृहती

मातुलधनकथनन्यायमावहति । अत्रोच्यते—वस्तुस्वभावानभिज्ञो भवान् । वस्तुस्वभावापेक्षिणो ह्यादेशा भवन्ति । अनुमानगम्या च क्रिया । ततः किम् ? न चानुमानगम्यस्य स्वरूपमुपलभ्यत इत्युक्तम् । अनुपलब्धस्वलक्षणस्यावृत्तिः केनावगन्तुं शक्यते ? ननु च येनैवास्ति ; कार्यतः ;

पञ्चिका

युक्तः, द्वयोर्द्रव्ययोरारभ्यारम्भकभावहीनयोः परस्परासमवायात् 'इह' इति बुद्ध्यनुत्पादात्[1] । गुणभूतस्तु शब्दो गगनात्मके श्रवणेन्द्रिये समवेत इति युज्यते श्रोत्रेण ग्रहणम् । न चेदं वाच्यम्—पार्थिवी कर्णशष्कुली संयोगलक्षणेन संनिकर्षेण[2] शब्दं गृह्णातीति, पार्थिवत्वेन श्रवणेन्द्रियस्य गन्धोपलम्भकत्वप्रसङ्गात् इति कृतमतिमहता तन्त्रान्तरानुसरणायासेन । उपसंहरति—तदिदमन्यदीयं क्रियासम्बन्ध्यभ्यावृत्तिगणनमन्यस्य शब्दस्योच्यमानं मातुलधनकथनन्यायमावहति । समाधत्ते—अत्रोच्यते, वस्तुस्वभावानभिज्ञो भवान् । ननु किं वस्तुस्वभावेन ज्ञातेनेत्यत्राह—वस्तुस्वभावापेक्षिणो ह्यादेशा भवन्ति । तेन वस्तुस्वभावं ज्ञात्वा तेषामर्थो वर्णनीयः । तथापि किमित्याह—[3]अनुमानगम्या च क्रियेति । दर्शितमनुमाने । ततः किम् ? उत्तरम्—न चानुमानगम्यस्य स्वरूपमुपलभ्यत इत्युक्तम् । सामान्यतो दृष्टस्य 'किमपि' इति ग्राहकत्वात् । अनुपलब्धस्वभावस्य च कर्मणः केनावृत्तिः शक्यतेऽवगन्तुम् ? तेन क्रियाभ्यावृत्तिस्तावदाञ्जसी नास्ति । ननु येनैव प्रमाणेनास्तित्वं गृह्यते[4] कमर्णः, तेनैवावृत्तिरपि ग्रहीष्यते । स एवाह—कार्यतः ।

१. पादनात्. ग.
२. Omitted. संनिकर्षेण. क.
३. Omitted. अनु—तेन. ग.
४. गृह्यते तेनैषा क.

भाष्यम्

व्यामूढाः 'सः' इति वक्ष्यन्ति । तन्न ; न हि ते 'सदृशः' इति प्रतियन्ति । किं तर्हि ? 'स एवायम्' इति ।

बृहती

आवृत्तिरपि ततो भवतु । मैवम् ; कार्यावृत्तावावृत्तिः शक्यतेऽवगन्तुम्, न कार्यतः । कार्यस्य तु कार्यतया आवृत्तिर्दुर्लभा ; कार्यान्तरतैव तत्र स्यात् । ज्ञाप्ये पुनरिदं संभवति । ज्ञाप्यश्च शब्द उच्चारणस्येत्युक्तम् । तस्मात् पुनः पुनः ज्ञाप्यमानता शब्दस्य गम्यते, नोत्पद्यमानता । अतो भङ्गित्वे कर्मणो ज्ञाप्यैक्यादावृत्तिरित्युच्यते ; न स्वतः, कार्यस्वाभाव्यात् । कृतस्य करणं नास्तीति कृतिनः । तस्मादेवंविषय एवायं

पञ्चिका

अस्तित्वमवगम्यते ; आवृत्तिरपि तत एव भवतु । परिहरति—मैवम् ; कार्यावृत्तावावृत्तिः शक्यतेऽवगन्तुं न कार्यतः । कार्यतो हि स्वरूपमात्रावगतिः ; अतः कार्यावृत्तावेव कर्मावृत्तिरवगमनीया । कार्यस्य च कार्यतयावृत्तिर्दुर्लभा । कार्यस्य च कार्यत्वादेवावृत्तिर्नास्ति ; अवस्थितस्य कार्यतानुपपत्तेः । कार्यान्तरतैव तत्र स्यात् । आवर्तमानं हि कार्यं कार्यान्तरमेव स्यात् ; न पुनस्तदेव, कृतक्रियमाणयोर्भेदात् । तस्मात् कार्यपक्षे कृत्वसुजनुपपत्तिः । ज्ञाप्ये पुनरिदं क्रियाभ्यावृत्तिगणनं संभवति । ननु च सिद्धान्तविरुद्धमिदमिति कश्चिन्मन्यते, तं प्रत्याह—ज्ञाप्यश्च शब्द उच्चारणस्येत्युक्तम् । तस्मात्कृत्वसुच्प्रयोगात् पुनःपुनः प्रयोगज्ञाप्यमानतात्र शब्दस्य गम्यते ; नोत्पद्यमानता । अतो भङ्गित्वेऽपि कर्मणः स्वभावतः ज्ञाप्यैक्यादावृत्तिरित्युच्यते ; न स्वतः, कार्यस्वभावत्वात् कर्मणः । तथापि कथं न स्वभावत आवृत्तिरित्यत्राह[1]—कृतस्य करणं नास्तीति कृतिनः । पण्डिताः । ........ज्ञाप्याव.......नकां (तेनैकज्ञाप्यावमर्शेनैकां) क्रियामङ्गीकृत्य क्रियाभ्यावृत्तिराश्रयणीया । तददिमुप-

१. आवृत्तेरेव. ग. २. Omitted. कृतस्य—इत्यर्थः ग.

भाष्यम्

विदिते च स्फुटेऽन्यत्वे 'व्यामोहः' इति गम्यते। न च

बृहती

कृत्वसुच्। कार्यैक्यं च प्रत्यभिज्ञानादित्युक्तम्। तस्मात् युक्तः कृत्वसुजर्थस्य हेतुतोपन्यासस्तद्ग्रहणे। "अन्यत्वेऽपि सति सादृश्येन व्यामूढाः 'सः' इति वक्ष्यन्ति"—इति किमिदमुपन्यस्तम्? इदमेवोपन्यस्तम्। न ब्रूमो नोपन्यस्तमिति; किमनेन निराकृतं प्रत्यभिज्ञाया इति न विद्मः। इदमनेन निराक्रियते—भेदाग्रण-निबन्धनेयं 'सः' इति बुद्धिः; भेदस्य चाग्रहणमतिसादृश्यादजाविकानां ज्वालादीनां दृष्टम्; अग्रहणे च भेदस्य नान्यत्वं व्यपदेष्टुं शक्यते;

पञ्चिका

संहरति—तस्मादेवंविषय एवायं कृत्वसुच्। कार्यैक्यनिबन्धनां कर्मण आवृत्तिमाश्रित्येत्यर्थः। ननु च तथापि कथं कृत्वसुच्प्रत्ययो हेतुरित्यत्राह—कार्यैक्यं च प्रत्यभिज्ञानादित्युक्तम्। तस्माद्युक्तः कृत्वसुजर्थस्य हेतुत्वेनोपन्यासस्तद्ग्रहणे। प्रत्यभिज्ञायामित्यर्थः। सादृश्येन व्यामूढाः 'सः' इति वक्ष्यन्तीति। भाष्यमनुभाषितम्। आक्षिपति—किमिद-मुपन्यस्तमिति। समाधत्ते—इदमेवोपन्यस्तम्। नात्र किञ्चित्तिरोहित-मस्तीति। आक्षेप्ताह—न ब्रूमो नोपन्यस्तमिति; प्रत्यभिज्ञायास्तु किमनेन निराकृतमिति न विद्मः। समाधत्ते—इदमनेन निराक्रियते। 'सः' इतिबुद्धेरभेदसाधकत्वं निराकृतमित्यर्थः। यस्माद्भेदाग्रहणनिबन्धनेयं 'सः' इति बुद्धिः शब्दस्याधुनोत्पन्नस्य[1] भिन्नस्यापि पूर्वोत्पन्नात् भेदमगृह्णतः 'सः' इति व्यपदेशोऽयं व्यवहारश्च प्रवर्तते; भेदस्याग्रहणं चाति-सादृश्यादजाविकानां ज्वालादीनां च दृष्टम्। कथं पुनर्भेदाग्रहणात् 'सः' इति व्यपदेश इत्यत्राह—अग्रहणे च भेदस्य नान्यत्वं शक्यते व्यपदेष्टुम्;

---

१. स्याभिन्नस्य पू. ग.

भाष्यम्

'अयमन्यः' इति प्रत्यक्षम्, अन्यद्वा प्रमाणास्ति ।

बृहती

अन्यत्वाव्यपदेशे च किमन्यदवशिष्यते 'स एव' इति व्यपदेशात्? विवेकाग्रहणमेवात्रापराध्यते मणिमुक्तादिष्विव विवेकशून्यानाम् ; तस्माद्विवेके यत्न आस्थीयताम् ; "अविवेकः परमापदां पदम्" ; आपत्सु जातोद्वेगानां विवेक एवैकः शरणं परम् । सत्यं यथा भवानाह ; किन्तु अत्र विवेकाग्रहणे ज्वालादीनामिव हेतुर्नास्ति—इति "अस्थानात्" इत्यस्मिन् सूत्रे लिखितं विस्तरेण ।

"स्यादेतत् बुद्धिकर्मणी अपि हि ते प्रत्यभिज्ञायेते ; ते अपि नित्ये प्राप्नुतः"—इति किमिदं कूश्माण्डपतनम्? उत्तरेणापि कूश्माण्डतैव

पञ्चिका

अन्यत्वाव्यपदेशे च किमन्यदवशिष्यते 'स एव' इति व्यपदेशात्? तस्माद्विवेकाग्रहणमेवात्र भ्रान्तावपराध्यते, तद्वशेनैव विपरीतव्यवहारो मन्दधियाम् । मणिमुक्तादिष्विव विवेकशून्यानाम् । रत्नपरीक्षायामकृतपरिश्रमाणाम् । तस्माद्विवेके यत्न आस्थीयताम् । यतः "अविवेकः परमापदां पदम्" आपत्सु जातोद्वेगानां विवेक एवैकः शरणं परम् । समाधत्ते—सत्यं यथा भवानाह । अविवेकनिबन्धन एव भ्रान्तिव्यवहार इति । किन्त्वत्र विवेकाग्रहणे ज्वालादीनामिव हेतुर्नास्तीति "अस्थानात्" इत्यस्मिन् सूत्रे लिखितं विस्तरेण । यथा ज्वालादीनां विवेकाग्रहणनिश्चये हेतुरस्ति, तथेह नास्तीत्युक्तम् "अस्थानात्" इत्यस्मिन् सूत्रे, पूर्वपक्षस्य परिहारपर्यन्तत्वात्, "सतः परमदर्शनम्" इत्यनेन सह "अस्थानात्" इत्यस्यैकसूत्रत्वात् "सतः परमदर्शनम्" इत्यत्रोक्तमेव "अस्थानात्" इत्यत्रोक्तमित्याह ।

स्यादेतत्, बुद्धिकर्मणी अपि हि ते प्रत्यभिज्ञायेते ; ते अपि नित्ये प्राप्नुत इति । भाष्यमनुभाषितम् । अक्षिपति—किमिदं कूश्माण्ड-

भाष्यम्

स्यादेतत्—बुद्धिकर्मणी अपि हि ते प्रत्यभिज्ञायेते ; ते अपि नित्ये प्राप्नुतः। नैष दोषः ; न हि ते प्रत्यक्षे।

बृहती

प्रदर्शिता—"अथ प्रत्यक्षे, नित्ये एव" इति ; प्रत्यभिज्ञा हि कालान्तरावस्थायित्वे हेतुरुक्तः। यदि कर्मण्यपि सास्ति, कोऽयमुपालम्भः ? अथायमभिप्रायः—अभ्युपगमहानं प्राप्नोति इति ; सत्यमनित्यत्वमभ्युपगतमस्माभिः ; आनुमानिकत्वमपि। न चानुमानिकेऽर्थे प्रत्यभिज्ञा भवति। स्वरूपग्रहणे हेत्वभावादसम्बद्धोऽयमुपालम्भः। यदि अस्मदभ्युपगमज्ञानमस्ति, सर्वाकारमस्तु ; किमिदमर्धजरतीयम् ? उच्यते

पञ्चिका

पतनम् ? उत्तरेणापि कूश्माण्डतैव प्रदर्शिता—"अथ प्रत्यक्षे, नित्ये एव" इति। अनेन। अत्रैव हेतुमाह—प्रत्यभिज्ञा हि कालान्तरावस्थायित्वे हेतुरुक्तः। यदि कर्मण्यपि सास्ति प्रत्यभिज्ञा, भवतु कालान्तरावस्थितिः कर्मणोऽपि ; कोऽयमुपालम्भः—कर्मापि कालान्तरावस्थायि भवतीति ? न हि कर्मणि कालान्तरावस्थायिनि शब्दस्य कालान्तरावस्थितिर्विपद्यते। अथायमभिप्रायः—अभ्युपगमहानं प्राप्नोतीति। कर्मविषये उपालम्भः। दूषयति—सत्यमभ्युपगतं कर्मणोऽनित्यत्वं कालान्तरानवस्थायित्वमस्माभिः, आनुमानिकत्वमप्यभ्युपगतम्। न चानुमेयेऽर्थे प्रत्यभिज्ञास्ति, स्वरूपाग्रहणात् ; यस्य हि स्वरूपं स्वलक्षणं गृह्यते, तत्र भवति प्रत्यभिज्ञा ; न च नित्यानुमेयानां स्वरूपग्रहणमस्ति ; नित्यानुमेयं च कर्म ; अतः प्रत्यभिज्ञालक्षणकालान्तरावस्थायित्वहेत्वभावादसम्बद्धोऽयमुपालम्भः—यदि प्रत्यभिज्ञया कालान्तरावस्थितिः, तदा कर्मणोऽपि प्रत्यभिज्ञया कालान्तरावस्थितिः प्राप्नोतीति। अथ कर्मण्यनुमेयतामजानत एवायमुपालम्भ इति तत्राह—यद्यस्मदभ्युपगमज्ञानमस्ति, सर्वाकारमस्तु ; किमिदमर्धजरतीयम् ?

भाष्यम्

## अथ प्रत्यक्षे, नित्ये एव। ह्यस्तनस्य शब्दस्य विनाशात्

बृहती

—यद्येककार्यत्वात् कर्माभ्यासं कृत्वसुजाचष्टे, कारणान्यतापि न सिध्यति ; न ह्यन्यत्वावगतावभ्यासावगतिः। गम्यमानैकत्वाच्च तद्बुद्धेरपि नानात्वमवगम्यमेव। तदिदमुक्तम् "बुद्धिकर्मणी अपि हि ते प्रत्यभिज्ञायेते, ते अपि नित्ये प्राप्नुतः"—इति। स्यातां नित्ये, यदि ते प्रत्यक्षे ;

पञ्चिका

यदि 'कर्म कालान्तरानवस्थायि' इति मीमांसकमतं ज्ञायते, तदा 'न प्रत्यभिज्ञायते' इत्यपि ज्ञायत इत्यर्थः। उत्तरमपि "न हि ते प्रत्यक्षे" इत्यसम्बद्धमेव ; प्रत्यभिज्ञा हि निराकरणीया, न पुनः प्रत्यक्षता। अथ प्रत्यक्षतानिराकरणेन प्रत्यभिज्ञैव निराक्रियत इति, तन्न ; अप्रत्यक्षेऽपि प्रत्यभिज्ञासम्भवात्। "अथ प्रत्यक्षे, नित्ये एव" इति चानुपपन्नम्, प्रत्यक्षेऽपि कस्मिंश्चित् प्रत्यभिज्ञानुत्पादे कालान्तरावस्थितिनिश्चयाभावादिति। उच्यते—**यद्येककार्यत्वात् कर्माभ्यासं कृत्वसुजाचष्टे, तर्हि कारणान्यतापि न सिध्यति।** कारणभूतस्य कर्मणोऽप्यन्यता न सिध्यति नावगम्यते। कुतः? **न ह्यन्यत्वावगतावभ्यासावगतिः।** तस्मादभ्यासावगतिमिच्छता त्वया कर्मापि नानाभूतं नावगम्यत इत्यङ्गीकरणीयम्। गम्यमानैकत्वाच्च गम्यमानस्यैकत्वाच्च बुद्धेरपि नानात्वमवगम्यमेव ; तेन बुद्धिकर्मणोरन्यत्वं नावगम्यते ; अन्यत्वानवगमश्च प्रत्यभिज्ञा। अतो यदि प्रत्यभिज्ञया शब्दस्य कालान्तरावस्थितिः, तदा बुद्धिकर्मणोरपि प्राप्नोति ; न च त्वयेष्यत इत्यभ्युपगमविरोधेन शब्दनित्यतापक्षोऽनुपपन्न इत्याक्षेपः। तदिदमुक्तम्—**बुद्धिकर्मणी अपि हि ते प्रत्यभिज्ञायेते ; ते अपि नित्ये प्राप्नुतः इति।** तेन चोद्यभाष्यं तावत्समर्थितम् ; उत्तरभाष्यमपि समर्थयमान आह—**स्यातां नित्ये, यदि ते प्रत्यक्षे।** अस्यार्थः—यदेव हि प्रत्यक्षं तदेव हि प्रत्यभिज्ञायते, नान्यत् ; न बुद्धिकर्मणी

भाष्यम्

अन्योऽद्यतनः—इति चेत् ; नैष विनष्टः, यत एनं

बृहती

न ह्यप्रत्यक्षेऽर्थे प्रत्यभिज्ञा प्राप्नोति । ननु च भेदाग्रहणं प्रत्यभिज्ञा ; सा च बुद्धिकर्मणोरप्यस्तीत्युक्तम्, कार्यगम्यत्वादनुमेयानाम् । सत्यम्, यदि भेदाग्रणं प्रत्यभिज्ञा ; तद्ग्रहणं तु प्रत्याभिज्ञा ; कार्यं हि कारण-मस्तीत्येतावति ज्ञानमुत्पादयति, न पुनस्तद्वा अन्यद्वेति । प्रत्यभिज्ञा तु 'तदेवेदम्' इति प्रसिद्धा लोके ।

"ह्यस्तनस्य शब्दस्य विनाशादन्योऽद्यतन इति चेत्" इति ।

पञ्चिका

प्रत्यक्षे तस्मान्न ते प्रत्यभिज्ञायेते; अप्रत्यभिज्ञायमाने च कथं कालान्तराव-स्थायिनी भवतः ? कस्मात्पुनरप्रत्यक्षत्वेनाप्रत्यभिज्ञेत्यत्राह—न ह्यप्रत्यक्षेऽर्थे प्रत्यभिज्ञा भवति । स्वरूपाग्रहणात् । ननु च भेदाग्रहणं प्रत्यभिज्ञा ; तच्च बुद्धिकर्मणोरप्यस्तीत्युक्तम्, कार्यगम्यत्वादनुमेयानाम् । स्वरूपाग्रहणे च भेदो न गृह्यते ; अतोऽनुमेयत्वेऽपि प्रत्यभिज्ञासम्भवात् कालान्तरा-वस्थायित्वापातः । परिहरति—सत्यम्, यदि भेदाग्रहणं प्रत्यभिज्ञा ; तद्ग्रहणं तु प्रत्यभिज्ञा । सा च कर्मणि नास्ति । कुतः ? कार्यं हि [1]कारणमस्तीत्येतावति विज्ञानमुत्पादयति, न पुनस्तद्वा अन्यद्वेति । प्रत्यभिज्ञा तु 'तदेवेदम्' इति लोके प्रसिद्धा । यावता हि विना कार्यं न सिध्यति, तावदेव हि कार्यमवकल्पयति[2], न पुनस्तत्त्वमतत्त्वं वा स्पृशति; प्रत्यभिज्ञा तु 'तदेवेदम्' इति पूर्वानुभूततया वस्तुग्रहणम् । अतो बुद्धिकर्मणोः कार्यैकगम्ययोः प्रत्यभिज्ञा नास्तीति समर्थितं भाष्यम् "न हि ते प्रत्यक्षे" इति । अथ प्रत्यक्षे, नित्ये एवेति । अस्याप्ययमर्थः—यदि प्रत्यभि-ज्ञायेते ततो नित्ये एवेति; प्रत्यक्षशब्देन च प्रत्यभिज्ञायमानतोच्यते ।

"ह्यस्तनस्य शब्दस्य विनाशादन्योऽद्यतन इति चेत्" इति ।

---

१. Added. यस्मात्. क. २. -कल्पते. ग.

भाष्यम्

पुनरुपलभामहे ; न हि प्रत्यक्षदृष्टं मुहूर्तमदृष्ट्वा पुनरुपलभ्यमानं प्रत्यभिजानन्तो विनष्टं परिकल्पयन्ति ; परिकल्पयन्तो वा द्वितीयादिसंदर्शने मातरि जायायां पितरि

बृहती

किमत्रानुक्तमुक्तं[1] भाष्यकारेण ? ननु सत्यां प्रत्यभिज्ञायामनुपलम्भे कारणान्तरं कल्पनीयमित्युक्तम् ; कल्पिताः स्तिमिता वायवः ; तदपगमे चोपलब्धिरिति; संयोगवियोगा अपगमहेतवः ; किमन्यदवशिष्यते ? इदमवशिष्यते— उपलब्धं ह्यनुपलभ्यमानं 'नास्ति' इत्यस्य ज्ञानस्य गोचरतामापद्यते ; न ह्यत्यन्तानुपलभ्यमानं 'नास्ति' इति ग्रहमास्कन्दति । यद्युपलब्धमपि न

पञ्चिका

भाष्यमनुभाषितम्, आक्षिपति—किमत्रानुक्तमुक्तं भाष्यकारेण ? स एवाह—ननु सत्यां प्रत्यभिज्ञायामनुपलम्भे कारणान्तरं कल्पनीयमित्युक्तम् ; कल्पिताश्च स्तिमिता वायवः । श्रोत्रपिधायकाः अनुपलम्भहेतवः । तदपगमे चोपलब्धिरिति । कल्पितम् । संयोगविभागाश्च वायवीयास्तदपगमे हेतव इति च कल्पितम् ; किमन्यदवशिष्यते ? अस्यार्थः— उपलब्धस्य शब्दस्य मध्ये पुनरनुपलब्धस्य प्रत्यभिज्ञायमानस्य मध्यकालेऽपि नाशो नाश्रयणीयः, कारणान्तरवशादनुपलब्धिसंभवात् ; यदि समग्र एवोपलम्भकारणे पुनरनुपलम्भः स्यात्, तदा विनाशः कल्प्येत ; न च शब्दस्योपलम्भकारणं समग्रमस्ति, स्तिमितवाय्वपनयस्यापि तदुपलम्भकारणत्वात् । एतच्च प्रत्यभिज्ञाबलेन कल्प्यते । तदेतच्च "सतः परमदर्शनम्" इत्यत्रोक्तम् । अतः किमपरमनिराकृतम्, यन्निराकरणाय पुनरिदं भाष्यकारेणोच्यते ? समाधत्ते—इदमवशिष्यते, उपलब्धं ह्यनुपलभ्यमानम् 'नास्ति' इत्यस्य ज्ञानस्य गोचर[2]तामापद्यते । यदेवोपलब्धं नोपलभ्यते, तदेव 'नास्ति' इत्यस्य ज्ञानस्य विषयः । उपलब्धानुपलब्धिरेव 'नास्ति' इति ज्ञायते व्यपदिश्यते चेत्यर्थः । कस्मादुपलब्धानुपलब्धिरेव नास्तीत्यत्राह

---

१. उपन्यस्तम्. ग. २. Omitted. गोचर—तदेव. ग.

भाष्यम्

वा नाश्वस्युः । न ह्यनुपलम्भमात्रेण 'नास्ति' इत्यवगम्य 'नष्टः' इत्येव कल्पयन्ति । अप्रमाणतायां

बृहती

गोचरीभवति, अनास्पदमेवेदमभ्युपगतं भवति । अभ्युपगतं चैतत् "नास्तीत्यस्यार्थस्यासन्निकृष्टस्य" इति । तस्मादभावो निर्विषयोऽनेन वा विषयेण विषयी वक्तव्यः । तस्माज्ज्वालादिष्विव शब्देऽप्यापतिता प्रत्यभिज्ञा । अहो बतानुपलब्धावविवेकोऽयम् ; यथैवात्यन्तानुपलब्धविषयानुपलब्धिः 'नास्ति' इत्यस्य ज्ञानस्योत्पत्तौ नेष्टे, तथा तद्ग्रहणविषयेऽप्यर्थे । तस्मादनुपलब्धिमात्रमेवेदम्, यदन्तरा शब्दे । तथा च लौकिका

पञ्चिका

—न ह्यत्यन्तानुपलब्धम् 'नास्ति' इति ज्ञानमास्कन्दति । तत्र यद्यप्युपलब्धमपि न गोचरीभवति, तदानास्पदं निर्विषयमेवेदम् 'नास्ति' इति ज्ञानमभ्युपगतं भवति ; निर्विषयत्वे चोच्छेद एव स्यात् । अभ्युपगतं चैतत् "नास्तीत्यस्यार्थस्यासन्निकृष्टस्य" इति । अनेन ग्रन्थेन । तस्मादभावो निर्विषयोऽनेन वोपलब्धानुपलम्भेन विषयेण विषयी वक्तव्यः । तस्माच्छब्द उपलब्धो मध्ये पुनरनुपलभ्यमानो नास्तीत्यभ्युपगमनीयः । ततश्च विनष्टः ; विनष्टे च शब्दे ज्वालादिष्विवायाता प्रत्यभिज्ञा भेदाग्रहणमात्ररूपा ; न पुनः परमार्थतस्तद्ग्रहणरूपेति । एवं चोद्यभाष्यं समर्थ्य चोद्यं परिहरति—अहो बतानुपलब्धा[1]वविवेकोऽयम् ; यथैवात्यन्तानुपलब्धविषयानुपलब्धिः 'नास्ति' इत्यस्य ज्ञानस्योत्पत्तौ नेष्टे । विषयतां न यातीत्यर्थः ; तथैव तद्ग्रहणविषयेऽपि प्रत्यभिज्ञायमानेऽर्थ इत्यर्थः । तस्मादनुपलब्धिमात्रमेवेदम्, यदन्तरा शब्दे । न पुनर्नास्तित्वरूपेयमनुपलब्धिः[2] ; यत एव तद्ग्रहणविषयो न नास्तितयोच्यते । तथा च लौकिकाः जायादिषु गृहावस्थितेषु गृहान्निर्गत्यानुपलब्धेषु पुनर्गृहं

---

१. अनुपलब्ध्यवि---ग. २. Added. पुनस्तद्ग्रहणात्. ग.

भाष्यम्

विदितायाम् 'नास्ति' इत्यवगच्छामः ; न हि प्रमाणज्येष्ठे प्रत्यक्षे सत्यप्रमाणता स्यात् । 'अस्ति' इति पुनरव्यामोहेनावगम्यमाने न कथंचिदप्यभावः ; न चासिद्धेऽभावे व्यामोहः ; न च सिद्धोऽभावः । तस्मादव्यामोहः । सति चाव्यामोहे नाभावः । तदेतदानुपूर्व्यसिद्धम् । तस्मात्पुर-

बृहती

जायादिषु नानुपलब्धिमात्रेण 'नास्ति' इत्यवगच्छन्ति, पुनर्दर्शने विश्वासदर्शनात् । तस्मात् सप्रत्यभिज्ञप्रत्यक्षसव्यपेक्षोऽयं प्रमाणाभावस्तत्र वक्तव्यः । कुतः ? सापेक्षत्वादभावस्य निरपेक्षत्वाच्च प्रत्यक्षस्य । तदेतत् "आनुपूर्व्यसिद्धम्"—इत्यनेनोक्तम् । यदप्यत्रानुमानं सर्वभाव-

पञ्चिका

प्रविश्य प्रत्यभिज्ञायमानेष्वनुपलब्धिमात्रतया 'नास्ति' इति नावगच्छन्ति । कथं पुनरवगम्यते नास्तीति नावगच्छन्तीति, तत्राह—**पुनर्दर्शने विश्वासदर्शनात्** । अन्यथा हि न विश्वासः स्यात् । तेन यदाहुः—यद्यपि प्रत्यभिज्ञायते ; तथापि मध्ये विनष्टो भविष्यतीति तन्निरस्तम्, अनुपलब्धिमात्रस्यापि नाशरूपत्वात् ; आत्यन्तिकी ह्यनुपलब्धिर्विनाश इति लोके दृष्टम् । **तस्मात् सप्रत्यभिज्ञप्रत्यक्षसव्यपेक्षोऽयं प्रमाणाभावस्तत्र वक्तव्यः** । यत्र प्रत्यभिज्ञापि नोत्पद्यते, तत्र प्रमाणाभावोऽभाव इति । **कुतः ? सापेक्षत्वादभावस्य** । प्रमाणाभावोऽभाव इति ; तेन प्रमाणापेक्षया वक्तव्यः । प्रत्यभिज्ञा च प्रमाणम् ; अतस्तदपेक्षयाभावो वक्तव्यः । **निरपेक्षत्वाच्च प्रत्यक्षस्य** । न प्रत्यक्षमनुपलम्भाभावमपेक्षते[1] ; तेन सत्यप्यन्तरानुपलम्भे भवत्येव प्रत्यक्षात् प्रत्यभिज्ञानरूपात् भावनिश्चय इति । एतच्च "तदेतदानुपूर्व्यसिद्धम्" इत्यत्र भाष्य उक्तम् । यदप्य-

---

१. उपलम्भाभावम् . ग.

भाष्यम्

स्तादुच्चरितमनुपलभमाना अपि 'न विनष्टः' इत्यवगन्तुमर्हन्ति । यथा गृहान्निर्गताः सर्वं गृहजनमपश्यन्तः पुनः प्रविश्य उपलभमानाः 'न प्राक् विनष्टः' इत्यवगच्छन्ति, तद्वत् । येऽपि सर्वेषां भावानां प्रतिक्षणं विनाशमभ्युपगच्छन्ति, तेऽपि न शक्नुवन्ति

बृहती

विषयमुक्तं नास्तितावगतौ, तदप्यत्र न संभवति ; अन्ते क्षयदर्शनात्—

पञ्चिका

त्रानुमानं सर्वभावविषयमुक्तं नास्तितावगतौ, तदप्यत्र न संभवति । सर्वभावविषयं नास्तितावगतौ यदनुमानमुक्तं बौद्धैः, तदप्यत्र शब्दे नास्ति । कुतः ? 'अन्ते च क्षयदर्शनात्' इति तत्रानुमाने हेतुः । न च शब्देऽन्ते क्षयोऽस्ति । अतस्तेनाप्यनुमानेन न ग्रस्यत[1] इयं प्रत्यभिज्ञा ; घटादिषु कदाचित्प्रत्यभिज्ञानमिदमनुमानमाकम्पयतीत्यपि संभाव्यते, तेषां क्षयदर्शनादिति ; न पुनस्तेष्वपि प्रत्यभिज्ञा शक्यत आकम्पयितुमित्यनन्तरमेव वक्ष्यामः । "अन्ते च क्षयदर्शनात्" इत्ययं हेतुर्बौद्धानामित्थमुपवर्णनीयो निराकरणीयश्च—इह घटादयो भावा विनाशभाज उपलभ्यन्ते ; तेषु चिन्ता—किं ते स्वहेतुभ्यो विनश्वरा जायन्ते, उत कारणान्तरेण तेषां विनाशो जन्यत इति । तत्रैषां न कारणान्तरायत्तो विनाशः, कारणान्तराधीनत्वे तस्य वस्त्वन्तरभूतस्योपनिपातेऽपि पूर्वभावस्य पूर्ववदुपलम्भादिप्रसङ्गात् । न च कारणान्तरायत्तजन्मा विनाशो भावस्वभावभूतो भवितुमर्हति, कारणभेदस्य कार्यभेदापादकत्वात् ; उत्पन्नोत्पद्यमानयोश्चैकत्वानुपपत्तिः । तस्मात् स्वहेतुत एव विनाशिनो भावा इति वेदितव्यम् । ततश्च विनाशं प्रत्यन्यानपेक्षया उदयानन्तरापवर्गिण इत्यापतितम् । अतः क्षणिकस्थिति-

---

१. बाध्यते. ग.

भाष्यम्

शब्दस्य वदितुम् ; अन्ते हि क्षयदर्शनात् ते मन्यन्ते ; न च शब्दस्यान्तः ; न च क्षयो लक्ष्यते ; 'सः' इति प्रत्यक्षः प्रत्ययः, 'सदृशः' इत्यानुमानिकः ; न च प्रत्यक्ष-

बृहती

इति हि तत्र हेतुः । न च शब्देऽन्ते क्षयोऽस्ति । अतो न तेनापि

पञ्चिका

धर्मिणो भावाः स्वहेतुभ्य आत्मानं लभन्ते ; ते च क्षणान्तरमारभन्ते ; तदपि क्षणान्तरमिति सदृशपरम्परोपजननजातविभ्रमाः पुमांसस्तत्त्वाध्यवसायिनो व्यवहरन्ति । यदा तु विलक्षणकारणान्तरोपनिपातो भवति, तदा विसदृशक्षणान्तरोदये[1] विनाशव्यवहारं प्रवर्तयन्ति । तस्मादन्ते विनाशो न स्वाभाविकं विनाशं विनोपपद्यत इति तद्दर्शनात् स्वाभाविकः कृतकानां विनाशोऽभ्युपगम्यते । सर्वे च भावाः कृतकाः, आकस्मिकत्वे देशकालप्रकृतिनियमायोगात् ; सहेतुको हि भावो हेतुशक्तिमनुरुध्यमानो नियतदेशकालप्रकृतिको भवतीत्युपपन्नम् । यच्च कृतकम्, तत्सर्वं विनाशि ; यच्च विनाशि, तत्सर्वं क्षणिकमिति सिद्धं सर्वभावानां क्षणिकत्वम् । तत्र तावदिदमेव वक्तव्यम्—न सर्वे भावाः कृतकाः, शब्दस्यैव हेत्वभावेनाकृतत्वात् ; यस्य हेत्वभावः, न तस्य कृतकत्वम्, यथा शशविषाणादेः ; अहेतुकश्च शब्द इति व्यापकानुपलब्धिरेव ; कृतकता हि हेतुमत्तया व्याप्ता ; तदभावे तस्याप्यभाव इति ; अहेतुकश्च शब्दः, संभाव्यमानस्य प्रयत्नस्य शब्दाभिव्यञ्जकत्वात्, द्वितीयश्रवणे प्रत्यभिज्ञायमानत्वात् ; न हि स एव प्रयत्नस्तस्योत्पादकोऽभिव्यञ्जकश्चेति युज्यते । न चैतदपि वक्तुमुचितम्—अकिञ्चित्करस्यानपेक्षणीयत्वादपेक्ष्यमाणः प्रयत्नः किं शब्दे जनयति ? न तावच्छब्दव्यतिरिक्तं किञ्चन ; तत्र जातेऽपि शब्दस्य पूर्ववदविचलितानुपजातातिशयस्यानुपलब्धिप्रसङ्गात् ; शब्दाव्यतिरेकिणि तूपजाते शब्द[2] एवोपजायत इत्यापतितमिति । यस्मान्न

१. विसदृशलक्षणा. क. २. Omitted. शब्द—जाते. ग.

भाष्यम्

**विरुद्धमनुमानमुदेति स्वकार्यं वा साधयति । तस्मान्नित्यः ॥**

बृहती

**बाध्यत इयं प्रत्यभिज्ञा घटादिषु कदाचिदाकम्पयत्यपि ॥**

पञ्चिका

प्रयत्नेन शब्दे किञ्चिज्जन्यते, अपि तु श्रोत्रे ; तस्मिंस्तु श्रोत्रवर्तिनि संस्कारे जाते शब्दविषया संवित् आत्मन्युदीयते, न पुनः शब्दस्य कश्चिदतिशयो जातो विपन्नो वेति । ननु निर्हेतुकत्वे देशकालप्रकृतिनियमो न स्यादित्युक्तम् । उच्यते—को नाम शब्दस्य देशकालनियममभ्युपैति, विभुत्वान्नित्यत्वाच्च ? प्रकृतिनियमस्त्वनादौ नास्त्येव ; आदिमति हि हेतुव्यापारोऽस्ति, न पुनरनादौ ; तेन कृतकत्वाच्छब्दस्य विनाशितेत्यसिद्धो हेतुः । न च येऽपि कृतका भावाः तेषामपि स्वाभाविको विनाशः, विनाशस्य प्राभाकरैरर्थान्तरभूतस्यानभ्युपगमात् ; यैव हि घटादीनामुपलब्धानां सत्यप्युपलम्भहेतुसाकल्येऽनुपलब्धिः, सैव तेषां विनाशः ; अनुपलब्धिरपि सैव तस्य, या तद्विविक्तस्य तुल्योपलम्भयोग्यस्य अवान्तरस्योपलब्धिः ; तस्यामेव चोपलब्धौ मुद्गरादीनां व्यापारः, अर्थान्तरभूतकपालोदये वेति सूक्ष्मदृशामेष पन्थाः । यदपि चेदमुच्यते—नित्यस्यार्थक्रिया क्रमेण वा यौगपद्येन वा नोपपद्यते, जननशक्तियुक्तस्य क्रमायोगात् यौगपद्यादर्शनाच्च । सहकारिसमवधानातिक्रमेणार्थक्रियाक्रम इत्यपि न युक्तम्, सहकारिणोऽकिञ्चित्करस्यानपेक्षणीयत्वात् ; तादृशापेक्षायां चापेक्षानुपरमप्रसङ्गात् ; किञ्चित्करत्वेऽपि व्यतिरिक्तकरत्वे तत एव व्यतिरिक्तात् कार्योदयः स्यात्, न पुनः पूर्वस्मात् भावादित्यर्थक्रियाशून्यत्वादत्यन्तासत्तापातः[1] पूर्वस्य, तल्लक्षणत्वात्सत्तायाः । अव्यतिरिक्तकरत्वे तु तदुदये भावस्याप्युत्पत्तेरनित्यतापातः । तदप्यनुपपन्नम्, सर्वस्योत्पत्तिमत एव कार्योत्पादाभ्युपगमात् । तदुक्तम्—"उत्पत्तिमतः फलस्य दर्शनात्" इति । न चैतावता स्थिर-

---

१. सत्यतापातः ग.

# अनपेक्षत्वात् ॥ २१ ॥

भाष्यम्

येषामनवगतोत्पत्तीनां भावानां भाव एव लक्ष्यते, तेषामपि केषाञ्चिदनित्यता गम्यते, येषां विनाशकारणमुपलभ्यते, यथा अभिनवं पटं दृष्ट्वा ; न चैनं क्रियमाणमुपलब्धवान्, अथ चानित्यत्वमस्याध्यवस्यति रूपमेव दृष्ट्वा । तन्तुव्यतिषङ्गजनितोऽयं तन्तुव्यतिषङ्गविनाशात् तन्तुविनाशाद्वा विनङ्क्ष्यति—इत्यवगच्छति । नैवं शब्दस्य किञ्चित्कारणमवगम्यते, यद्विनाशाद्विनङ्क्ष्यतीत्यवगम्यते ॥

बृहती

"अनपेक्षत्वात्" इति । सत्यामपि प्रत्यभिज्ञायां कदाचिदसमवायिकारणोपब्धेः अनित्यताशङ्क्येत घटादीनामिव; तदप्यत्र दर्शनाभावान्नास्तीति स्थिता प्रत्यभिज्ञा ; तत्प्रमेयतया च नित्यत्वं शब्दस्य ॥

पञ्चिका

स्याकारकत्वम्, तदाश्रितात्तस्मात्कार्योदये लोके तस्यैव कारकव्यवहारात् । कथं पुनरसौ तदाश्रितः ? तत्रैव स्वहेतुना जनितत्वादिति कृतमतिविस्तरेण ॥

"अनपेक्षत्वात्" इति सूत्रान्तरानुभाषणम् । सत्यामपि प्रत्यभिज्ञायां कदाचिदसमवायिकारणोपलब्धेरनित्यतां शङ्क्येत घटादीनामिव ; तदप्यत्र दर्शनाभावान्नास्ति । घटादयो हि प्रत्यभिज्ञायमाना अप्यवयवसंयोगलक्षणस्यासमवायिकारणस्य दर्शनादनित्याः, तद्विनाशे विनाशसंभवात् ; शब्दे तु न किञ्चिदसमवायिकारणमस्ति, यद्विनाशाद्विनश्यन्ननित्यः स्यादित्यर्थः । प्रकृतमुपसंहरति—इति स्थिता प्रत्यभिज्ञा ; तत्प्रमेयतया च नित्यत्वं शब्दस्येति ॥

---

१. Omitted. अनित्यता—दर्शनात् . ग.

## प्रख्याभावाच्च योगस्य ॥ २२ ॥

भाष्यम्

इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम् । ननु वायुकारणकः स्यादिति ; वायुरुद्गतः संयोगविभागैः शब्दीभवतीति ; तथा च शिक्षाकारा आहुः "वायुरापद्यते शब्दताम्" इति । नैतदेवम् ; वायवीयश्चेत् शब्दो भवेत्, वायोः सन्निवेशविशेषः स्यात् । न च वायवीयानवयवान् शब्दे

बृहती

"प्रख्याभावात्" इति । अनपेक्षतायामसिद्ध्याशङ्कां निराकरोति । सेयमाशङ्कोपन्यस्यते—"वायुरुद्गतः संयोगविभागैः शब्दीभवति" इति । तथा च शिक्षाक्षराण्यनुगुणानि दृश्यन्ते—"वायुरापद्यते शब्दताम्" इति । तदिदं निराक्रियते—यदि वायवीयः शब्दः स्यात्, वायोरवयव-सन्निवेशविशेषः स्यात् ; न च वायवीयान् सन्निवेशविशेषान् शब्द

पञ्चिका

"प्रख्याभावात्" इति सूत्रमनुभाषितम् । व्याचष्टे—अनपेक्षताया-मसिद्ध्याशङ्कां निराकरोति । सेयमाशङ्कोपन्यस्यते—वायुरुद्गतः संयोग-विभागैः शब्दीभवतीति । वायवीयँ[1] एव शब्दः ; तेनानपेक्षत्वादित्यसिद्धो हेतुः । तथा च शिक्षाक्षराण्यनुगुणानि दृश्यन्ते "वायुरापद्यते शब्दताम्" इति । तदिदं निराक्रियते—यदि वायवीयः शब्दः स्यात्, वायोरवयव-सन्निवेशविशेषः स्यात् ; न च वायवीयान् सन्निवेशविशेषान् शब्द उपलभामहे । यदि वाय्वारब्धः शब्दः स्यात्, तदीया अवयवा वाय्वात्मका उपलब्धा भवेयुः ; न चोपलभ्यन्ते । तस्मान्न वायवीयः शब्दैः[2] । ननु

१. वीया एव शब्दाः. ग. २. Added. इति. ग.

भाष्यम्

सतः प्रत्यभिजानीमः यथा पटस्य तन्तुमयान् । न चैवं भवति । स्याच्चेदेवम्, स्पर्शनेनोपलभेमहि । न च वायवीयानवयवान् शब्दगतान् स्पृशामः । तस्मान्न वायुकारणकः । अतो नित्यः ॥

बृहती

उपलभामहे । ननु न चाक्षुषो वायुः । स्पर्शनमप्युपलम्भनमेव, तेनोपलब्धाः स्युः ; न चोपलभामहे । तस्मादप्रतिपक्षा प्रत्यभिज्ञा । कथं तर्हि

पञ्चिका

न चाक्षुषो वायुः । अनेनेदमाह—यदि वायुश्चाक्षुषः स्यात्, तदा प्रत्यक्षो भवेत् ; द्रव्यं हि प्रत्यक्षं चाक्षुषमेव ; न चेद्वायुश्चाक्षुषः, प्रत्यक्षोऽपि[1] न भवतीति । तथा चाचाक्षुषत्वे[2] स्पर्शनमात्रेण प्रतीतेऽपि न शक्यते द्रव्यस्य प्रत्यक्षता वक्तुम्, गुणमात्रस्यैवैन्द्रियकत्वनिराकरणकारणाभावात् ; दर्शनस्पर्शनाभ्यां हि गुणत्यागेनापि द्रव्यग्रहणेनान्वयव्यतिरेकाभ्यां द्रव्यस्यापि प्रत्यक्षता भवति[3] ; अचाक्षुषत्वे तु वायोः स्पर्शाद्व्यतिरेचयितुमशक्यत्वान्न प्रत्यक्षतेति । उत्तरम्—स्पर्शनमप्युपलम्भकमेव । न केवलं चक्षुः । अयं चाशयः—यद्यपि वायुरचाक्षुषः, तथापि स्पर्शनेन्द्रियान्वयव्यतिरेकानुविधायित्वात् तत्प्रतिपत्तेः प्रत्यक्षत्वमेव ; तथा स्पर्शान्तरेऽपि तद्द्रव्यबुद्धेः स्पर्शादपि व्यतिरेकः शक्यत एव वक्तुम् । यद्यपि शीतोष्णस्पर्शावाप्यतैजसावेव, न वायवीयौ ; तथापि तयोरुपलम्भे वायवीयस्यानुष्णाशीतस्याप्यनुलम्भे तद्द्रव्यप्रतीतेः शक्यत एव व्यतिरेकः कर्तुमिति । अतश्च स्पर्शनत्वे वायोर्यदि वायवीयः शब्दः स्यात्, तेन स्पर्शनेन्द्रियेण तत्सन्निवेशा उपलब्धाः स्युः ; न चोपलब्धाः । तस्मादप्रतिपक्षा प्रत्यभिज्ञा । कथं तर्हि शिक्षाक्षराणि ?

१. Omitted अपि. ग.
२. त्वे. अस्पर्शतामात्रेण. ग.
३. Added. इति. ग.
४. विवेचयितुम्. ग.

# लिङ्गदर्शनाच्च ॥ २३ ॥

भाष्यम्

लिङ्गं चैवं भवति "वाचा विरूपनित्यया" इति । अन्यपरं हीदं वाक्यं वाचो नित्यतामनुवदति । तस्मान्नित्यः शब्दः ॥

बृहती

शिक्षाक्षराणि ? तदायत्तत्वात् तच्छब्दोपलब्धेस्तदुपचारः ॥

तथा च वेदाक्षराण्यस्मिन् पक्षेऽनुगुणतराणि दृश्यन्ते "वाचा विरूपनित्यया" इति । कोऽत्रातिशयः ? नित्यताभिधानं श्रुत्या । तस्मात् प्रत्यभिज्ञाप्रमेयत्वान्नित्यतावस्थिता शब्दे ॥

पञ्चिका

तदायत्तत्वात् वाय्वायत्तत्वाच्छब्दोपलब्धेस्तदुपचारो वायवीयोपचारः ॥

तथा च वेदाक्षराण्यस्मिन्[1] पक्षेऽनुगुणतराणि दृश्यन्ते "वाचा विरूपनित्यया" इति । कोऽत्रातिशयः ? येनानुगुणतराणीत्युच्यते । उत्तरम्—नित्यत्वाभिधानं श्रुत्या । नित्यशब्देन श्रुत्यैव नित्यतोच्यते ; "वायुरापद्यते शब्दताम्" इति । न तु श्रुत्या अनित्यतोच्यते । तस्मात्प्रत्यभिज्ञाप्रमेयत्वान्नित्यतावस्थिता[2] शब्दे ॥

इति शब्दनित्यतावादस्थानकम् ।

---

१. अस्मत्पक्षे. ग. २. नित्यता स्थिता. ग.

# उत्पत्तौ वावचनाः स्युरर्थस्यातन्निमि-त्तत्वात् ॥ २४ ॥

भाष्यम्

यद्यौत्पत्तिको नित्यः शब्दः सम्बन्धश्च, तथापि न चोदनालक्षणो धर्मः ; चोदना हि वाक्यम् ; न हि

बृहती

"उत्पत्तौ वावचनाः स्युरर्थस्यातन्निमित्तत्वात्"। "यद्यौत्पत्तिको नित्यः शब्दः सम्बन्धश्च, तथापि न चोदनालक्षणो धर्मः" इति । किमिदमारब्धम् ? इदमारब्धम्— वृद्धव्यवहारादौत्पत्तिकत्वमुक्तं शब्दार्थज्ञानस्य । वृद्धव्यवहारश्च प्रमाणान्तरावगम्यं वाक्येनार्थं प्रतिपादयतः कस्यचित् कश्चिदन्यः प्रतिपद्यते । तत्प्रतिपत्त्या

पञ्चिका

"उत्पत्तौ वावचनाः स्युरर्थस्यातन्निमित्तत्वात्" । "यद्यौत्पत्तिको नित्यः शब्दः सम्बन्धश्च, तथापि न चोदनालक्षणो धर्मः" इति भाष्यमनुभाष्य आक्षिपति—किमिदमारब्धमिति । समाधत्ते—इदमारब्धम्, वृद्धव्यवहारादौत्पत्तिकत्वमुक्तं शब्दार्थज्ञानस्य । शब्दाद्यदर्थज्ञानं तदौत्पत्तिकं पुरुषप्रयत्नानपेक्षमसामयिकं वृद्धव्यवहारादेव शब्दस्य वाचकशक्तिपरिज्ञानेन समयनिरपेक्षेण तदुत्पत्तेरित्युक्तम्[1] । वृद्धव्यवहारश्चायमुच्यते, यः प्रमाणान्तरावगम्यमर्थं कस्यचित्प्रतिपादयतो वाक्येन, कश्चिदन्यः प्रतिपद्यते । प्रमाणान्तरेणावगन्तुं शक्यमर्थं प्रतिपादयतो वृद्धस्य वाक्यादपरो वृद्धः प्रतिपद्यते, स वृद्धव्यवहार उच्यते । तस्य प्रतिपत्त्या शब्दश्रवणानन्तरभाविन्या बालोऽपि[2] जानाति 'अनेन शब्देनैव तद्वस्तु प्रतिपादितम्' इति शब्दे वाचकशक्तिमवगच्छतीत्यर्थः । शब्दार्थप्रतिपत्तिश्च प्रतिपत्तृ-

---

१. तदुत्पत्तिरि. ग. २. बाले विजानाति. ग.

बृहती

बालोऽपि जानाति 'अनेनैव तत्प्रतिपाद्यते' इति । प्रतिपत्तिश्च हानोपादानादिकार्यावगम्या । हानोपादानादि च प्रमाणान्तरप्रमितविषयमेव शक्यतेऽवगन्तुम्, नाप्रमितविषयम् । अतश्च प्रमाणान्तरप्रमितविषयमेवौत्पत्तिकत्वं शक्यतेऽवगन्तुम्; न पुनर्यत्र शब्दावगमपूर्वको व्यवहारः, तत्रौत्पत्तिकत्वं शक्यावगमम् । तस्माद्वैदिकानामग्निहोत्रा-

पञ्चिका

वृद्धवर्तिनी तदर्थविषयोपादानादिकार्यगम्या ; स्वविषये हि बालेन हानोपादाने प्रतिपत्तिपूर्वके दृष्टे इति हानोपादाने दृष्ट्वा वृद्धस्य प्रतिपत्तिरनुमीयते । **हानोपादानादि च प्रमाणान्तरप्रमितविषयमेव शक्यतेऽवगन्तुम्, नाप्रमितविषयम्** । प्रमाणान्तरेण योऽर्थोऽवगम्यते, तद्विषयमेव यद्धानोपादानादि तदवगन्तुं शक्यते, न पुनरप्रमितविषयम् । **अतश्च प्रमाणान्तरप्रमितविषयमेवौत्पत्तिकत्वं शक्यतेऽवगन्तुम्** । तस्मात्प्रमाणान्तरप्रमितविषयाद्धानोपादानात् प्रतिपत्तिरनुमीयते ; प्रतिपत्त्या च प्रतिपादकशक्तिः ; प्रतिपादकशक्त्या च ज्ञातया शब्दार्थावगमः ; तेन य एव प्रमाणान्तरगम्योऽर्थः, स एव पुरुषसमयानपेक्षः शक्यतेऽवगन्तुम् । **न पुनर्यत्र शब्दावगमपूर्वको व्यवहारः, तत्रौत्पत्तिकत्वं शक्यावगमम्** । वेदे हि शब्दादर्थमवगम्य वृद्धव्यवहारः, नान्यथा ; एवं च यदाशङ्क्यते—वेदेऽपि वैदिकार्थविषयं व्यवहारं दृष्ट्वा प्रतिपत्तिमनुमाय शब्दस्य शक्तिं ज्ञात्वार्थः प्रतीयत इति, तदपि निराकृतम् ; यदेव हि प्रमाणान्तरेण शक्यतेऽवगन्तुम्, तद्विषयमेव हानोपादानं शक्यावगमम् । अतः कथमनुन्मीलितागमविलोचनो बालः शब्दैकगम्यविषयं हानोपादानं बुध्येत ? अनवबुद्धहानोपादानश्च कथं तद्विषयां प्रतिपत्तिं वृद्धस्यानुमिमीते ? अननुमिततद्विषयवृद्धप्रतिपत्तिश्च कथं तद्विषयां शब्दस्य शक्तिमवधारयेत् ? अनवधारिततद्विषयशक्तिश्च तदर्थं कथं शब्दादवगच्छेत् ? अनवगच्छंश्च कथं व्यवहरेदिति । तस्माद्वैदिकानामग्निहोत्रादिवाक्यानां प्रमाणान्तरानवगम्यार्थ-

---

१. विषयवृद्धसम्बन्धिहानोपादानादि. ग. २. Omitted. तस्मात्—अवगन्तुम्. ग. ३. पराकृतम्. ग.

बृहती

दीनामौत्पत्तिकत्वं दुरवगमम् । तस्मादौत्पत्तिकत्वक्लेशोऽनर्थकः ; वेद-प्रामाण्यसिद्ध्यर्थमौत्पत्तिकत्वमिष्यते स्वतन्त्रागमवादिभिः । न च वृद्ध-व्यवहारात् सिद्धमौत्पत्तिकत्वं वेदार्थप्रतिपत्तावभ्युपायतां प्रतिपत्तुं क्षमम् । किमिति न क्षमम् ? समुदायाद्धि वृद्धव्यवहारेऽर्थोऽवगम्यते ; न चासौ समुदायो वेदे प्रयुक्तः । तस्मान्न निमित्ततां प्रतिपद्यते । ननु चान्वयव्यतिरेकाभ्यां वृद्धव्यवहारादेव पदार्थपूर्वको वाक्यार्थोऽव-गम्यते । आवापोद्धाराभ्यां हि 'देवदत्त गामभ्याज शुक्लाम्, देवदत्त गामभ्याज कृष्णाम्, विष्णुमित्र गां बधान रक्ताम्' इत्येकत्वान्वित-

पञ्चिका

विषयाणामौत्पत्तिकत्वं दुरवगमम् । तस्माद्वृद्धव्यवहारनिबन्धनौत्पत्तिकशब्द-शक्तिप्रतिपादनक्लेशोऽनर्थकः । वेदप्रामाण्यसिध्यर्थमौत्पत्तिकत्वमिष्यते स्वतन्त्रागमवादिभिः । मीमांसकैः । न च वृद्धव्यवहारसिद्धं प्रमाणान्तराव-गम्यार्थविषयमौत्पत्तिकत्वं प्रमाणान्तरानवगम्यवेदार्थप्रतीतौ निमित्ततां प्रतिपत्तुं क्षमम् । किमिति न क्षमम् ? समुदायाद्धि वृद्धव्यवहारेऽर्थोऽवगम्यते । यतश्चार्थोऽवगतः तस्यैव शक्तिनिश्चयः । न चासौ समुदायो लौकिकः 'गामानय' इत्यादिर्वेदे प्रयुक्तः ; तस्मान्न निमित्ततावगम्यते । अत्र चोदयति—ननु चान्वयव्यतिरेकाभ्यां वृद्धव्यवहारादेव पदार्थपूर्वको वाक्यार्थोऽवगम्यते । अस्यार्थः—यदि समुदाय एव वाक्यार्थप्रतिपादको भवेत्, तदा समुदायान्तरस्याव्युत्पन्नशक्तिकतयावगमकत्वं न स्यात् ; यदा तु पदान्येव पदार्थप्रतिपादनेन वाक्यार्थं प्रतिपादयन्ति, तदा वेदेऽपि तेषां पदानां भावात् पदार्थप्रतिपत्तिपूर्वको वाक्यार्थोऽवगन्तुं शक्यते ; पदानां च पदार्थप्रतिपादकत्वं कथमवगम्यते ? उत्तरमन्वयव्यतिरेकाभ्यां तावेव दर्शयति—आवापोद्धाराभ्यां हि 'देवदत्त गामभ्याज शुक्लाम्, देवदत्त गामभ्याज कृष्णाम्, विष्णुमित्र गां बधान रक्ताम्'

---

१. व्यवहारेण. ग.

बृहती

शुक्लार्थः, अन्यत्रापोद्धृतशुक्लार्थोऽन्वितकृष्णार्थश्च, अन्यत्रापोद्धृताभ्याजार्थोऽन्वितबधानार्थश्च वाक्यार्थोऽवगम्यते । अतोऽवगम्यते—पदेभ्यः पदार्था एवावगम्यन्ते, न वाक्यार्थः ; पदार्थसमुदायेन वाक्यार्थोऽवगम्यते । अन्यथा ह्येकपदोद्धारे सकलवाक्यार्थानवगतिरेव स्यात्, न पदार्थमात्रस्य । तस्मात् पदेभ्यः पदार्थाः, पदार्थेभ्यः परस्परान्वितावगतिः । यदि पदेभ्यः पदार्था अवसीयन्ते, पदार्थेभ्यः परस्परान्वयः, किं पदार्थनिमित्तक एव वाक्यार्थः ? ओम् इत्युच्यते । कस्य पदार्थस्य कस्मिन्नन्वये हेतुत्वम् ? सर्वस्य सर्वस्मिन्निति ब्रूमः । एवं तर्हि सर्ववाक्यार्थावगतिः सर्वस्मात् । नियमे वा

पञ्चिका

इति एकत्रान्वितशुक्लार्थः, अन्यत्रापोद्धृतशुक्लार्थोऽन्वितकृष्णार्थश्च, अन्यत्रापोद्धृताभ्याजार्थोऽन्वितबधानार्थश्च[1] वाक्यार्थोऽवगम्यते । एतच्चोपलक्षणम् ; तेनेदमपि ग्राह्यम्—एकत्रान्वितदेवदत्तार्थोऽन्यत्रापोद्धृतदेवदत्तार्थोऽन्वितविष्णुमित्रार्थश्चेति । यस्य पदस्यावापेन प्रक्षेपेण यस्य पदार्थस्यान्वयः यस्य च पदस्योद्धारेणापनयेन यस्य पदार्थस्यापनयः तस्मिन् पदार्थे तस्यैव पदस्य प्रतिपादकत्वम् । अतोऽवगम्यते—पदेभ्यः पदार्था एवावगम्यन्ते, न वाक्यार्थः ; पदार्थसमुदायेन वाक्यार्थोऽवगम्यते । अन्यथा ह्येकपदोद्धारे सकलवाक्यार्थानवगतिरेव स्यात् । यथा पदाद्वर्णोद्धारे सकलपदार्थानवगतिः । न पुनः पदार्थमात्रस्यानवगतिः । तस्मात्पदेभ्यः पदार्था अवगम्यन्ते ; पदार्थेभ्यः परस्परान्वितवाक्यार्थावगतिः । पूर्वपक्षी परिहरति —यदि पदेभ्यः पदार्था एवावगम्यन्ते ; पदार्थेभ्यः परस्परान्वयः । स एवाह—किं पदार्थनिमित्तक एव वाक्यार्थ इति । चोदयिताह—ओमित्युच्यते । पूर्वपक्ष्याह—कस्य पदार्थस्य कस्मिन्नन्वये हेतुत्वम् ? चोदयिताह—सर्वस्य सर्वस्मिन्निति ब्रूमः । सर्वस्य पदार्थस्य सर्वस्मिन्नन्वये हेतुत्वमिति ब्रूमः । पूर्वपक्ष्याह—एवं तर्हि सर्ववाक्यार्थावगतिः

१. बन्धनार्थः. ग. २. अन्वयः. ग.

बृहती

हेतुर्वक्तव्यः 'इत्थंभूतेनेत्थंभूतोऽन्वयः प्रतिपाद्यते' इति । न चात्र वृद्धव्यवहारं मुक्त्वान्यत्कारणमुपलभामहे । तस्माद्यत्र समुदायः प्रयुक्तः, तत्रैव पदं पदार्थमवगमयति; पदार्थश्च पदार्थान्तरेणान्वितमात्मानमिति प्रयोगप्रतिपत्तिमूलेयं कल्पना । अतोऽन्वयव्यतिरेकावपि प्रतिपत्तिविषयावेव ; सत्यां हि प्रतिपत्तावावापोद्धारावगतिर्व्यवहारे व्युत्पाद्यस्य । अवगतिश्च प्रमाणान्तरप्रमितविषयैव, हानोपादानावगम्यत्वात्

पञ्चिका

सर्वस्मात् । यदि सर्वस्य पदा[1]र्थस्य सर्वस्मिन्नन्वये हेतुत्वम्, तदैकस्मात् पदादुच्चरितात् पदार्थेऽवगते सर्वार्थान्वयप्रतीतेः सर्ववाक्यार्थावगतिः स्यात् ; नियमे वा हेतुर्वक्तव्यः—इत्थंभूतेनेत्थंभूतोऽन्वयः प्रतिपाद्यत इति । सन्निहितोच्चारितपदप्रतिपादितसाकाङ्क्षान्वययोग्येन तथाभूतपदार्थान्तरान्वयः प्रतिपाद्यत इत्यस्मिन्नियमे हेतुर्वक्तव्यः । न चात्र वृद्धव्यवहारं मुक्त्वान्यत्कारणमुपलभामहे । वृद्धव्यवहारे हि तादृशेन पदार्थेन तादृशान्वयप्रतिपादनदर्शनात् तत्रैव हेतुत्वम्, नान्यत्रेति नियमः सिध्यति ; न पुनरत्र कारणान्तरमस्ति । यत एवं वृद्धव्यवहारस्य कारणत्वम्, तस्माद्यत्र प्रयुक्तः समुदायः, तत्रैव पदं पदार्थमवगवयति ; पदार्थश्च पदार्थान्तरेणान्वितमात्मानमिति प्रयोगप्रतिपत्तिमूलेयं कल्पना । यत्रैव प्रमाणान्तरगम्येऽर्थे वृद्धव्यवहारविषये समुदायः प्रयुक्तः, तत्रैव पदं पदार्थमवगमयति पदार्थश्च पदार्थान्तरेणान्वितमात्मानमिति प्रयोक्तुः प्रयोगात् प्रतिपत्तुश्च प्रतिपत्तेरिदं कल्प्यते ; तेन यत्र प्रयोगप्रतिपत्ती न दृष्टे प्रमाणान्तराविषये वेदार्थे, तत्र न पदात्पदार्थावगतिः । न च पदार्थस्यापि पदार्थान्तरान्वितात्मप्रतिपादकता । उपसंहरति—अतोऽन्वयव्यतिरेकावपि प्रतिपत्तिविषयावेव । यत्रैवाशाब्दज्ञस्य प्रमाणान्तरगम्येऽर्थे प्रतिपत्तिः, तत्रैवान्वयव्यतिरेकावपि । कस्मादित्याह—सत्यां हि प्रतिपत्तावावापोद्धारावगतिर्व्यवहारे व्युत्पाद्यस्य । यस्मादस्मिन्नर्थे प्रतिपत्तिर्वृद्धस्यास्ति, व्युत्पाद्यस्य तस्मिन्नेव व्यवहार आवापोद्धारावपि । तथापि किमित्याह—अवगतिश्च प्रमाणान्तरप्रमितविषयैव,

---

१. Omitted. पदार्थस्य. ग.

## बृहती

वृद्धप्रतिपत्तेरित्युक्तम् । यत्र पुनः प्रमाणेन 'अस्मिन्नर्थे प्रयुक्तः' इति न ज्ञायते, प्रयोगादेवार्थोऽवगन्तव्यः, तत्र कथं निमित्तता शक्यते कल्पयितुं पदपदार्थयोः, प्रतिपात्तिपूर्वकत्वान्निमित्तभावस्य ?

## पञ्चिका

हानोपादानावगम्यत्वाद्[1]वृद्धप्रतिपत्तेरित्युक्तम् । एतदु[2]क्तं भवति—प्रमाणान्तरेण योऽर्थः प्रतीयते, तत्सम्बन्धिनी एव हानोपादाने शक्ये अवगन्तुम् ; यद्विषये एव हानोपादाने अवगते, तद्विषये वृद्धस्यापि प्रतिपत्तिरनुमीयते ; यद्विषया च प्रतिपत्तिरनुमीयते तद्विषय एव निमित्तत्वं प्रतीयत इति प्रमाणान्तर-प्रतिपाद्यविषयमेव पदपदार्थयोर्निमित्तत्वम्, न पुनः प्रमाणान्तरावेद्यविषयमिति । यत्र पुनः प्रमाणेन 'अस्मिन्नर्थे प्रयुक्तः' इति नावगम्यते, प्रयोगादेवार्थोऽव-गन्तव्यः, तत्र कथं निमित्तता शक्या कल्पयितुं पदपदार्थयोः ? यत्र पुनर्वेदे प्रमाणान्तरानवगम्यविषये 'अस्मिन्नर्थे अयं शब्दः प्रयुक्तः' इति प्रमाणेन नावगम्यते, शब्दप्रयोगादेव केवलादर्थोऽवगम्यः, तत्र कथं निमित्तता पदपदार्थयोः, निमित्तभावग्रहणाभावात् ? निमित्तत[3]यावगतौ पदपदार्थौ निमित्तं भवतः ; न पुनरन्यथा, प्रथमश्रुतादप्रतीतेः ; सर्वस्माच्च सर्वप्रतीति-प्रसङ्गात् । निमित्तभावग्रहणमेव कथं नास्तीत्यत्राह—प्रतिपत्तिपूर्वकत्वा-न्निमित्तभावस्य । प्रतिपत्तिं गृहीत्वा वृद्धसम्बन्धिनीं तद्विषयं शब्दस्य निमित्तभावं गृह्णाति ; नान्यथा । न च प्रमाणान्तरानवगम्यविषया वृद्धप्रति-पत्तिरनुमातुं शक्या, तद्विषयहानोपादानादर्शनात् । न च तस्मिन्नप्रतीते तद्विषये हानोपादाने अवगम्येते इति न प्रमाणान्तरानवगम्ये व्युत्पत्ति-सम्भवः । प्रतिपत्तिपूर्वको निमित्तभाव इत्यतो व्यतिरेकमाह—न पुनर्निमि-त्तावगमादेव नैमित्तिकावगतिः । निमित्तभावावगमपूर्विका नैमित्तिकी

---

१. व्युत्पाद्यानाम्. ग.

२. या चासावावापोद्धारावागतिः सा प्रमाणान्तरेण योऽर्थोऽवगम्यते तद्विषयैव व्युत्पाद्यानां हानोपादानावगम्यत्वाद्वृद्धप्रतिपत्तेरित्युक्तं भवति । ग.

३. भाव. ग.

## बृहती

न पुनर्निमित्तावगमादेव नैमित्तिकावगतिः । यस्मिन् हि सति यद्भवति तद्दर्शनात् 'अस्येदं निमित्तम्' इति भवति मतिः ; न पुनस्तत्सम्भवादेव । केन वोक्तमन्यथा ? नैमित्तिकावगमादेव निमित्तावगतिः । अवगम्यते च "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति पदार्थान्वितो वाक्यार्थः । अतोऽत्रापि पदपदार्थयोर्निमित्तता केन वार्यते ? कथं पुनर्गम्यते 'अन्वितपदार्थको वाक्यार्थः' इति ? नन्वेतस्मादेव वाक्यात् । तर्हि निमित्ततावगमादेव नैमित्तिकावगतिरित्युक्तम् ।

## पञ्चिका

शब्दार्थे प्रतिपत्तिः पुनर्न संभवति ; किन्तु प्रतिपत्तिपूर्वक एव निमित्तभावावगम इति । कुत इत्याह—यस्मिन् हि सति यद्भवति तद्दर्शनात् 'अस्येदं निमित्तम्' इति भवति मतिः ; न पुनस्तद्भावादेव । कार्यतो हि निमित्ततावगतिः, न[1] स्वरूपमात्रत एव । तेन प्रतिपत्तिपूर्वको निमित्तभावः, निमित्तभावावगमपूर्विका च स्वयं शब्दादर्थप्रतिपत्तिः । तेनानवगते[2] वेदार्थं प्रमाणान्तरानवगम्यं प्रति निमित्तत्वे कथं वेदाद्वाक्यार्थावगतिरिति । अत्र चोदयति—केन वोक्तमन्यथा ? एकग्रन्थेनाह—नैमित्तिकावगमादेव निमित्तावगतिः । नैमित्तिकवाक्य[3]ार्थावगमे सत्येव निमित्ततावगम्यते । अवगम्यते च "अग्निहोत्रं जुहुयात् स्वर्गकामः" इति पदार्थान्वितो वाक्यार्थः । अतोऽत्रापि पदपदार्थयोर्निमित्तता केन वार्यते ? पूर्वपक्षी परिहरति—कथं पुनर्गम्यते 'अन्वितपदार्थको वाक्यार्थः' इति ? अन्विता एव पदार्था यस्मिन् सोऽत्र वाक्यार्थ इति कथं ग[4]म्यते ? चोदयिताह —नन्वेतस्मादेव वाक्यात् । पूर्वपक्ष्याह—यद्येतस्मादेव वाक्यात् 'एवंविधो वाक्यार्थः' इत्यवगतिः, तर्हि निमित्ततावगमादेव नैमित्तिकावगतिरित्युक्तं त्वया भवति ; 'वाक्यादे[5]वमवगम्यते, अयमर्थो नैमित्तिकः[6]'

१. न तत् ग.
२. न तेनावगतेरर्थं प्रति निमित्त्वे कथं वेदार्थावगतिरिति ग.
३. Omitted. वाक्य. ग.
४. न मन्यते. ग.
५. देवेदम्. ग.
६. Added. इति. ग.

## बृहती

वृद्धव्यवहारे हि हानोपादानादिगम्यं नैमित्तिकत्वम् ; इह पुनर्वचनादेव हानोपादाने प्रवर्तेते ; तस्माद्विपरीतम् । ननु च वृद्धव्यवहारेऽपि प्रतिपत्ता वाक्यादेवार्थं प्रतिपद्यते ; बालस्तु पार्श्वस्थः शब्दार्थयोः सम्बन्धं हानोपादानाभ्यां वेत्ति । सत्यम् ; असावपि तु सम्बन्धज्ञानोत्तरकालं ततो विजानाति निमित्तान्नैमित्तिकम् ; वेदे पुनरविज्ञातनिमित्तनैमित्तिक-सम्बन्धः कस्य निमित्ततां विजानातु, कस्य वा नैमित्तिकत्वम् ? अथ

## पञ्चिका

इति त्वयोक्तं भवति । ननु च सर्वत्रैवम्, कोऽयमस्माकमुपालम्भ इत्यत्राह—**वृद्धव्यवहारे हि हानोपादानादिगम्यं नैमित्तिकत्वम्** । लोके हि शब्द-श्रवणानन्तरं विशिष्टार्थविषयं हानोपादानं दृष्ट्वा 'शब्देनायमर्थः प्रतिपादितः' इत्यत्रगम्यते ; न पुनः शब्दत एव । नन्वत्राप्येवमेव भवतीत्यत्राह—**इह पुनर्वचनादेव हानोपादाने** [1]**प्रवर्तेते ; तस्मात्तद्विपरीतम्** । वचनादेवार्थ-मवगम्य हानोपादानाभ्यां भवितव्यम् ; हानोपादानाभ्यां च निमित्त-नैमित्तिकसम्बन्धोऽवगन्तव्यः ; तस्मान्निमित्तादेव नैमित्तिका[2]र्थावगतिरिह प्राप्नोति ; लोके तु प्रतिपत्तिपूर्वकं निमित्तत्वमिति । चोद्यमाह—**ननु च वृद्धव्यवहारेऽपि प्रतिपत्ता वाक्यादेवार्थं प्रतिपद्यते ; बालस्तु पार्श्वस्थः शब्दार्थयोः सम्बन्धं हानोपादानाभ्यां वेत्ति** । तेन '[3]वृद्धप्रतिपत्ता प्रागभूतत्वा-च्छब्दार्थप्रतिपत्तेर्न प्रतिपत्तिपूर्वकं निमित्तभावमवबुध्यते' इति मन्यते । परिहरति —**सत्यम्, असावपि तु सम्बन्धज्ञानादुत्तरकालं ततो नि**[4]**मित्तान्नैमित्तिकं विजानाति** । वृद्धोऽपि वृद्धान्तरप्रतिपत्त्या बालवन्निमित्तभावमेवावगम्य पश्चादर्थमवबुध्यते, प्रथमश्रवणेऽर्थानवगतेरित्यर्थः । **वेदे पुनरविज्ञात-निमित्तनैमित्तिकसम्बन्धः पुरुषः कस्य निमित्ततां जानातु, कस्य वा नैमित्तिकत्वम् ?** निमित्तनैमित्तिकसम्बन्धज्ञानाभावे प्रतिपत्तावनुत्पन्नायां निमित्तनैमित्तिकसम्बन्धोऽवगन्तुं न शक्यत इत्यर्थः । पुनश्चोद्यमाशङ्कते

---

१. प्रवर्तते क.
२. Omitted. अर्थ. ग.
३. च प्रतिपत्ता. ग.
४. Omitted. निमित्तात्. ग.

बृहती

सामान्यतोदृष्टानुमानं क्रियते--वृद्धव्यवहारे पदपदार्थयोर्निमित्तभावो दृष्टः, वेदेऽपि त एव पदार्थाः, तस्माद्वेदेऽपि स्वार्थान्वितौ निमित्तत्वम्—इति ; एवं तर्हि कियन्तः कस्यामित्यत्र प्रमाणं नास्ति । यावन्तो यस्यामवगतौ प्रतीयन्ते—इति चेत्, अवगतिपूर्वकमेव तर्हि निमित्तत्वम् ; न सामान्यतोदृष्टनिमित्तकम् ; न चावगतेः प्रमाणमस्तीत्युक्तम् । तत् सामान्यतोदृष्टनिबन्धनैवेयं भ्रान्तिः । सामयिकी वा दृष्टव्यवहारपूर्विकादृष्टावगतिः ; लोकसिद्धैर्वा संज्ञासंज्ञिसम्बन्धं

पञ्चिका

--अथ सामान्यतोदृष्टानुमानं क्रियते—वृद्धव्यवहारे पदपदार्थयोर्निमित्तभावो दृष्टः ; वेदेऽपि त एव पदार्थाः ; तस्माद्वेदेऽपि स्वार्थान्वितौ निमित्तत्वमिति । अस्यार्थः—वेदवर्तिनः पदार्थाः स्वार्थान्वितौ निमित्तमिति साध्यते, पदार्थत्वात् ; ये ये पदार्थास्ते ते पदार्थान्वितौ निमित्तं यथा लौकिकवाक्यार्थवर्तिनः—इति सामान्यतोदृष्टेनावगतनिमित्तभावाः स्वान्वयमवबोधयिष्यन्तीति । दूषयति[1]--यदि सामान्यतोदृष्टम्, एवं तर्हि कियन्तः कस्यामन्विताविव्यत्र नास्ति नः प्रमाणम् ; वेदे ह्यनेकसहस्रसंख्यपदजातार्थानामवगतानां न ज्ञायते के पदार्थाः कियन्तो वा कस्यामन्वितौ निमित्तमिति । न च वृद्धव्यवहारानुसारेण आकाङ्क्षासन्निधियोग्यता नियामिकाः, तदनुसारेण प्रमाणान्तरावेद्यार्थान्वयप्रतिपत्त्यभावप्रसङ्गात् । चोद्यमाशङ्कते—यावन्तो यस्यामन्वितौ प्रतीयन्त इति चेदिति । दूषयति—अवगतिपूर्वकं तर्हि निमित्तत्वम्, न सामान्यतोदृष्टनिमित्तकम् । यावन्तो यस्यामवगतावन्विताः प्रतीयन्ते, तावन्तस्तस्यामवगतौ निमित्तमित्याश्रीयमाणेऽवगतिदर्शनादेव तर्हि निमित्तत्वं पदार्थानां ज्ञायते, न सामान्यतोदृष्टेन । भवत्वेवम्, को दोष इत्यत्राह—न चावगतेः प्रमाणमस्तीत्युक्तम् । उपसंहरति—तस्मात्सामान्यतोदृष्टेनैवात्र भ्रान्तिः । पदानि पदार्थाश्च लोकवेदयोः साधारणा इति लोकवद्वेदेऽपि वाक्यार्थः प्रतीयत इति भ्रान्तिः । परमार्थतस्तु वेदार्थावगतौ कारणमेव नास्त्युक्तेन न्यायेन । सामयिकी वा दृष्टव्यवहारपूर्विकादृष्टावगतिः । अस्यार्थः—

---

१. Omitted. दूषयति. ग.

## बृहती

**कृत्वा वैदिको व्यवहारः प्रवर्तितः कैश्चित् । ननु कार्यैक्यनिबन्धन-मेकवाक्यत्वं भविष्यति । कार्यैक्यं च नियोगैक्यात् । नियोगैक्यं**

## पञ्चिका

यदा अलौकिकार्थप्रतिपादकता वेदानां नोपपद्यते, तदा प्रमाणान्तर-गोचरार्थविषयत्वात् पौरुषेया एव वेदाः । तथाच शब्दार्थसम्बन्धोऽपि नौत्पत्तिकः । तथाहि शक्यसमये विषये किमिति दृष्टविपरीतं शब्दस्य स्वातन्त्र्यं परिकल्प्यते ? अतः सामयिक्येव च शब्दार्थप्रतिपत्तिः । ननु समयोऽपि कथं शक्यते वक्तुम् ? अवश्यं ह्यनेन समयं प्रणयता पूर्वसिद्धसम्बन्धाः केचन शब्दा अङ्गीकरणीयाः । तथाच अङ्गीकृतं तावत् क्वचित्स्वातन्त्र्यम् ; अतः किं समयकरणेन ? उच्यते—**दृष्टव्यवहारपूर्विका-दृष्टावगतिरिति** । एतदुक्तं भवति—सामयिकशब्दैरेव व्यवहरमाणेषु व्युत्पन्नयोः समयो भविष्यति । ततश्च तौ व्यवहरिष्येते । तयोश्च व्यवहारेऽपरो व्युत्पद्यत इत्येवं पूर्वेषामपि व्यवहारव्युत्पत्तिः समयादुत्पन्ना । अतः सिद्धे समये अदृष्टमपि साध्यसाधनभावं वैदिकं प्रतिपादयितुं पुरुषैर्वेदाः प्रणीयन्त इति नानुपपत्तिः । एवमेव च लोकसिद्धैः कृतकसम्बन्धैरेव शब्दैः संज्ञासंज्ञिसम्बन्धं कृत्वा[१] वैदिको व्यवहारः प्रवर्तितः कैश्चित् । एतौ च समयकृतकसम्बन्धपक्षौ तुल्यन्यायावेव यथा भिन्नौ तथा दर्शितमेव सम्बन्धाक्षेपग्रन्थे पूर्वपक्ष एव । चोदयति—**ननु कार्यैक्यनिबन्धन-मेकवाक्यत्वं भविष्यति** । अस्यार्थः—वृद्धव्यवहार एव वेदार्थप्रतिपत्तावपि निमित्तम् । एवं हि वृद्धव्यवहारे प्रतिपन्नम्—कार्यान्वितं स्वात्मानं पदार्थाः प्रतिपादयन्तीति । लोके वेदे चैक एव कार्यात्मको नियोगार्थः । तेन व्युत्पत्तेर्विषयनानात्वं नास्ति । अतो यावन्तः पदार्था एकस्मिन् कार्येऽन्वीयन्ते, तावत्पदार्थप्रतिपादकः पदसमूह एकं वाक्यमिति कार्यैक्य-निबन्धनमेकवाक्यत्वं भविष्यति । ननु च लोके वेदे च कार्यात्मकोऽर्थ एक इति कुतः ? तत्राह—कार्यैक्यं च लोकवेदयोर्नियोगस्य लिङादिशब्दस्यैक्यात् ; वाचकैक्याद्वाच्यैक्यमित्यर्थः । ननु च केवलस्य लिङादेरनुबन्धशून्यस्यार्थ-

---

१. कृत्वा चावैदिकः. ग.

बृहती

चानुबन्धविनिर्मोकादित्युक्तम्। नियोगार्थश्च लोके वेदेऽपि स एव— इत्युक्तम्; प्राप्ताप्राप्तविवेकेन हि प्रेषणादयोऽभिहिताः। तस्मान्निमित्तपूर्वकेऽपि न दोषः। सिद्धं सामान्यतोदृष्टमनुमानं निमित्तावगतौ। तदिदमयुक्तम्; किं नियोगार्थः प्रमाणान्तरानिर्ज्ञातार्थतया लोकेऽर्थावगतौ निमित्ततया दृष्टः? नेति ब्रूमः; "प्रथमश्रुतः किं न

पञ्चिका

प्रतिपादकत्वाभावाल्लोके वेदे चानुबन्धभेदान्न वाचकमेकमित्यत्राह—**नियोगैक्यं चानुबन्धविनिर्मोकादित्युक्तम्**। यद्यपि केवलादर्थानवगतिः, तथाप्यन्वयव्यतिरेकाभ्यां शक्यत एवेदमवगन्तुम् 'कार्यार्थप्रतिपादका लिङादय एव' इत्यनुबन्धं निर्मुच्य वाचकैक्यं लोकवेदयोः। ननु भवतु लिङादिरेकः, तथापि लोके तस्य प्रेषणाध्येषणादिप्रतिपादकत्वात् वेदे च तेषां पुरुषधर्मभूतानामभावान्नैकार्थत्वमित्यत आह—नियोगार्थो लिङाद्यर्थश्च लोके वेदे च स एवेत्येतदप्युक्तम्। **प्राप्ताप्राप्तविवेकेन हि प्रेषणादयोऽभिहिताः**। प्रेषणाध्येषणादयो यल्लिङाद्यर्था भगवता पाणिनिनाभिहिताः, तत्प्राप्ताप्राप्तविवेकेन समहीनज्यायोभिः प्रयुज्यमानेऽपि लिङादौ कार्ये सर्वत्र प्राप्तेऽपि प्रेषणादयोऽप्राप्ता उपाधिभूता इति; कार्यं तु सर्वत्रार्थ इति। उपसंहरति—**तस्मान्निमित्तपूर्वकेऽपि न दोषः**। यद्यपि निमित्तं पूर्वमवगम्य पश्चादर्थः प्रतिपत्तव्यः; तथापि दोषो नास्ति, निमित्तभावस्य वृद्धव्यवहारेऽवगतत्वादिति। **सिद्धं सामान्यतोदृष्टमनुमानं निमित्तावगतौ**। निमित्तावगतौ सत्यां ये पदार्थाः, ते कार्यान्वयिनः स्वात्मानं प्रतिपादयन्ति; पदार्थाश्चैते—इति सामान्यतोदृष्टमनुमानं सिद्धम्। पूर्वपक्षी समर्थयते—**तदिदमयुक्तम्**। कुत इत्याह—**किं नियोगार्थः प्रमाणान्तरानिर्ज्ञातार्थतया लोकेऽर्थावगतौ निमित्ततया दृष्टः?** अस्यार्थः—नियोगः अर्थो वाच्यो यस्य लिङादेः, स नियोगार्थो लिङादिः किं प्रमाणान्तरानिर्ज्ञातार्थतया प्रमाणान्तरेणानिर्ज्ञातार्थः सन् लोकेऽर्थावगतौ निमित्ततया प्रसिद्धः, येन भवानेवं

---

१. अपि. ग.

बृहती

प्रत्याययति ?"—इत्यनतिक्रमणीयोऽयं हेतुः । एवं तर्हि तदर्थभेदस्यापि प्रमाणान्तरं मृग्यम् । अनुबन्धाश्च तद्भेदानुवर्तिनो लोके दृष्टाः, न पुनस्तदनुवर्ती भेदः । तस्मात् परस्परान्वयिता न प्रयोगावच्छेदमन्यतोऽविज्ञाय शक्यतेऽवगन्तुम् । न चासाववच्छेदः प्रमाणान्तराभावाद्वेदे

पञ्चिका

वदति ? यदि प्रमाणान्तरेणावेद्यमेवार्थं लिङादिः प्रतिपादयतीति लोके दृष्टं स्यात्, तदा वेदेऽपि प्रमाणान्तरागोचरमर्थं लिङादिः प्रतिपादयेत् ; न चैतदस्तीति भावः । आक्षेप्तर्ज्वाशय उत्तरमाह—नेति ब्रूमः । स एवाह—प्रथमश्रुतः किं न प्रत्याययतीत्यनतिक्रमणीयोऽयं हेतुः । अस्यार्थः—यदि प्रमाणान्तरावेद्यार्थविषयो लिङादिः, तदा सम्बन्धग्रहणमेव न स्यात्, अगृहीते सम्बन्धिनि सम्बन्धग्रहणाभावात् ; अगृहीतसम्बन्धस्य चार्थप्रतिपादकत्वे प्रथमश्रुतस्य प्रत्यायकत्वप्रसङ्गो दुष्परिहरः । तस्मान्न[1] प्रमाणान्तरावेद्यार्थविषयो लोके लिङादिः प्रतीयत इति । पूर्वपक्षी दूषयति—एवं तर्हि तदर्थभेदस्यापि प्रमाणान्तरं मृग्यम् । लिङाद्यर्थभेदस्य[2] प्रमाणन्तरावेद्यस्य लिङाद्यर्थस्य वेदे प्रमाणान्तरं मृग्यम् ; न हि तस्य लिङादिर्वाचकः, अगृहीतसम्बन्धत्वात् । अथोच्यते—य एवासौ लोके नियोगार्थः, स एव वेदेऽपि, यदि परमनुबन्धभेदात् भेद इत्यत्राह—अनुबन्धाश्च तद्भेदानुवर्तिनो लोके दृष्टाः, न पुनस्तद्भेदानुवर्ती भेदः । अस्यार्थः—लोकेऽपि भिन्नेष्वेव नियोगार्थेष्वनुबन्धाः संबध्यन्त इति दृष्टम्, न पुनरनुबन्धानुवर्ती भेदः । तस्मात्स्वरूपत एव नियोगार्थो भिन्नः । अतो लोके वेदे च नियोगार्थस्य भिन्नत्वात् सम्बन्धग्रहणेऽप्रतीते प्रमाणान्तरं मृग्यम् । यत एव वैदिको नियोगार्थो भिन्नः, तस्मात्परस्परान्वयिता न प्रयोगावच्छेदमन्यतोऽविज्ञाय शक्यतेऽवगन्तुम् । इयन्तः पदार्था अस्यामवगतावन्विताः—इति । यावत् प्रयोगावच्छेदोऽन्यतो न विज्ञातः, तावत्परस्परान्वयिता न शक्यतेऽवगन्तुम् ; न हि तदेदं शक्यते वदितुम्—यावन्तो यस्यामवगतौ लोके दृष्टा इति । ज्ञायतां तर्ह्यन्यतः प्रयोगावच्छेद इत्यत्राह—न चासाववच्छेदः

१. Omitted. न. ग. २. Added. भिन्नस्य. ग.

बृहती

विद्यते । तस्मात् दर्शनान्तरं मृग्यम् । न चेष्टं स्वतन्त्रागमवादिनामिदम् । न च स्वभावादर्थावगतिरित्युक्तम् । अतः प्रतीयमानपदार्थान्वयी वाक्यार्थः, न प्रमाणान्तरापेक्षा—इति गहनेयं न्यायपदवी । कथमिय-मवगाहनीयेति युक्ता संप्रधारणा । अत एक एवायं बहुधा विकल्प्या-वगम्यते लोके वेदे चेति ब्रह्मविदो मन्यन्ते । तस्माद्विवर्त एवायमिति

पञ्चिका

प्रमाणान्तराभावाद्वेदे विद्यते । तस्माद्दर्शनान्तरमत्र वेदार्थे मृग्यं सम्बन्ध-ग्रहणसौकर्याय । न चेष्टं स्वतन्त्रागमवादिनामिदम् । प्रमाणान्तरावगम्यार्थ-विषयत्वे स्वतन्त्रागमस्य प्रामाण्यं न सिध्यति इति स्वतन्त्रागमवादिनां दर्शनान्तरं वेदार्थे नेष्टम् ; न च दर्शनान्तरविरहेण सम्बन्धाग्रहणेऽपि स्वतोऽवगतिरित्युक्तम्—"सर्वत्र नो दर्शनं प्रमाणम्" इत्यत्र । पूर्वपक्ष्युपसंहरति—अतः प्रतीयमानपदार्थान्वयी वाक्यार्थः, न च प्रमाणान्तरापेक्षेति गहनेयं न्यायपदवी कथमवगाहनीयेति युक्ता संप्रधारणा । अस्यार्थः—ये तावद्वृद्धव्यवहारप्रसिद्धाः पदार्था वाक्यार्थे प्रतीयन्ते, ते तावदन्वयिनः ; न च प्रमाणान्तरापेक्षित्वं त्वयाभ्युपगतम् ; अतो गहनोऽयं न्यायमार्गः कथमवगाह्यताम्—किमन्वितार्थप्रतिपत्तिस्त्यज्यताम्, उत प्रमाणान्तरनिरपेक्षत्वमिति युक्ता संप्रधारणेति । तत्र दृष्टान्वयप्रतिपत्त्यनु-सारेण वरं प्रमाणान्तरापेक्षित्वमाश्रीयतामिति भावः । संप्रति राद्धान्तैकदेशी पूर्वपक्षमेवोपजीव्याह—यत एव मीमांसकमते स्वतन्त्रागमस्य[1] न प्रामाण्यं सिध्यति, अत एक एवायं बहुधा विकल्प्यावगम्यते लोके वेदे चेति ब्रह्मविदो मन्यन्ते । एक एवायं शब्दो बहुधा प्रकृतिप्रत्ययै[2]विभागेन विकल्प्य अविद्यमानभेद एवारोपितभेदः सन् लोके वेदे च प्रतीयत इति ब्रह्मविदो वेदविदो वैयाकरणा मन्यन्ते । अस्मिन् हि दर्शने वाक्यं प्रत्यस्तमितावयववि-भागम् ; न च तस्य स्वार्थेन सह वाच्यवाचकलक्षणः सम्बन्धः, किन्तु तादात्म्यलक्षण एव ; वाक्यमेव वाक्यार्थरूपतया विवर्तते शुक्तिकेव रजतस्वरूप-

१. -गमत्वं न सिध्यति. ग. २. Added. पद. ग.

बृहती

ब्रह्मविद्भिरवगन्तव्यम् । वेदविद्भिरित्यर्थः । कथं पुनः विवर्तपक्षे नायं दोषः? एकतावगतिस्तावन्नैवास्ति, "श्रोत्रग्रहणे ह्यर्थे लोके"—इत्यनेन प्रतिपादितत्वात् । तदेवेदं दुरुक्तम्, कार्यविरोधादित्युच्यते । किं कार्यतः प्रत्यक्षमात्मानं लभते? मा भूत्प्रत्यक्षम्; अनुमानमपि प्रमाणमेव। अनुमानादपि प्रमाणावगतिर्युक्तैव । भवद्भिरप्यानुमानिकमेव प्रामाण्यं सर्वत्रोक्तम् । अनुमानादवगतस्यार्थस्य कथमेकत्वम्? अन्यत्वं वा कथम्?

पञ्चिका

तया । तत्र यद्यपि वेदवाक्यार्थो मानान्तरागम्यतया अगृहीतसम्बन्धः, तथापि वेदवाक्यमेवार्थरूपतया विवर्तिष्यत इत्यध्यारोपितप्रकृतिप्रत्ययपदगतौ चान्वयव्यतिरेकावुपायमात्रं भवत इति । **तस्माद्विवर्त एवायमिति ब्रह्मविद्भिरवगन्तव्यम्** । परब्रह्मविदो वेदान्तविदो मा प्रत्येष्यन्त इत्याह—**ब्रह्मविद्भिर्वेदविद्भिरित्यर्थ इति** । मीमांसकैकदेश्याह—**कथं पुनर्विवर्तपक्षे नायं दोषः?** वक्ष्यमाणः । तमेवाह—**एकत्वावगतिस्तावन्नास्ति, "श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः" इत्यनेन ग्रन्थेन प्रतिपादितम्**; भिन्ना एव हि वर्णाः श्रोत्रेणावसीयन्ते । परिहरति—**तदेवैकत्वं नास्तीति दुरुक्तं कार्यविरोधादित्युच्यते,** अपूर्ववाक्यार्थप्रतिपत्तिलक्षणकार्यविरोधादित्युच्यते ; एकत्वे ह्यसति कार्यं विरुध्यते; तस्मात् कार्यादेकं वाक्यमिति गम्यते । मीमांसकैकदेश्याह—**किं कार्यतः प्रत्यक्षमात्मानं लभते?** येन भवानेकं वाक्यं मन्यते । यदि हि कार्यतः प्रत्यक्षमात्मानं लभते, तदा स्यादेवम्; न चैतदस्ति । परिहरति—**मा भूत् प्रत्यक्षम् ; अनुमानमपि प्रमाणमेव** । तेनानुमानेन वाक्यमेकमस्तीति गम्यते । ननु[1] कथमनुमानात् प्रमाणभूतस्यावगतिरित्यत्राह—**अनुमानादपि प्रमाणावगतिर्युक्तैव** । न कदाचिदनुपपत्तिरित्यर्थः । भवद्भिरपि मीमांसकैरानुमानिकमेव सर्वत्र प्रमाण्यमित्युक्तम् । अत्र चोदयति—**अनुमानादवगतस्यार्थस्य कथमेकत्वम्?** कार्यानुमानेन चेद्वाक्यमनुमीयते कथं तस्यैकत्वम्? कश्चिदाह—**अन्यत्वं वा कथम्?**

---

१. Added. न. ग.

## बृहती

**एकतया च विना किं न सिध्यति इदं न सिध्यति—न ह्युपायाः कल्पिताः प्राप्नुवन्ति ; एकत्वावगतौ श्रुत्यामवच्छेदाः कल्पिताः स्युः । न चैकतावगतिर्युक्तानुमानात्—इति चोदितम् । नैष दोषः ; अनुमानात् प्रमाणत्वमवच्छिद्य, ततः पुनरेकतामवयवैर्वेत्ति 'शुक्लः पटः' इत्येवमादिषु । तदिदमागमात् प्रतिपन्नमेकत्वम् 'प्रत्यस्तमिताशेषागमविकल्पं स्वयं ब्रह्म प्रकाशते' इति । यदुच्यते—"श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः" इति, तदप्यागमविरुद्धम् ; 'गौः' इति शब्दः, 'गौः' इत्यर्थः, 'गौः' इति**

## पञ्चिका

यथानुमानादेकत्वं न सिध्यति, तथा तवाप्यन्यत्वं कथं सेत्स्यति ? कार्यं[1] हि कारणमनुमापयति, न पुनरेकत्वमन्यत्वं वा तस्यं[1] स्पृशति । स एवाह—**एकतया च[2] विना किं न सिध्यति ?** तेन यद्येकत्वमवगन्तुमशक्यं मा शाकि ; अवगतेनापि तेन प्रयोजनं नास्तीति । चोदयिताह—**इदं न सिध्यति ; न ह्युपायाः कल्पिता भवन्ति ।** असति च पुनरेकत्वे नोपायाः कल्पिता भवन्ति ; तस्मादेकत्वं यत्नतो वाच्यम् । **न चैकतावगतिरनुमानाद्युक्तेति चोदितम् ।** अस्यार्थः—न मया 'अन्यत्वमनुमानादवगम्यते' इति चोदितम्, किन्तु 'एकत्वं कथमवगम्यते' इति चोदितम् ; तेन ममायमुपालम्भ एव नोपपद्यते 'अन्यत्वं वा कथम्' इति । वैयाकरणानुसारी[3] परिहरति—**नैष दोषः ; अनुमानात् प्रमाणत्वमवच्छिद्य, ततः पुनरवयवैरेकतां वेत्ति 'शुक्लः पटः' इत्येवमादिषु ।** अस्यार्थः—कार्यतः कारणमनुमाय पुनरपि तस्यैकत्वं विना कार्यानुपपत्तेरवयवैः सहैकतां विजानाति ; यावता हि विना कार्यं नोपपद्यते, तावदवकल्पयति । तदिदं कार्यानुमानगम्यमेकत्वमागमाद्व्याकरणात् प्रतिपन्नम् । कीदृशः पुनरयमागमार्थ इत्यत्राह—**प्रत्यस्तमिताशेषागमविकल्पं स्वयं ब्रह्म प्रकाशत इति ।** प्रत्यस्तमिता अशेषा आगमविकल्पा व्याकरणनिबन्धनाः प्रकृत्यादिविकल्पा यस्मिन्नित्यर्थः । **यदुच्यते[4] "श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः" इति, तदप्यागमविरुद्धम् ।** लोकव्यपदेशविरुद्धमित्यर्थः । तत्राह—**गौरिति शब्दो गौरिति चार्थो गौरिति**

---

१. Omitted. तस्य. ग.
२. तयापि विना. ग.
३. करणमतानुसारी. ग.
४. यदप्युच्यते. ग.

## बृहती

**विज्ञानम्, एकाभिधाननिर्देशात्; न हि भिन्नस्य युगपदेकाभिधानं संभवति। कथं पुनः यौगपद्यावगमः? वाचकज्ञानवाच्यानां परस्परापेक्षिणी स्वरूपावगतिर्यतः। अतश्च यदप्युक्तम्—सजातीयावमर्शशून्या न सामान्यावगतिरस्ति इति, तदयुक्तम्; भेदनिबन्धना ह्येषा युक्तिः। विद्यमानस्य ह्यवमर्शो भवति, न कल्पितस्य। उक्तं चैकत्वमेकाभिधाननिर्देशात्।**

## पञ्चिका

च ज्ञानम्। कुतः? **एकाभिधाननिर्देशात्; न हि भिन्नस्य युगपदेकाभिधानं संभवति।** ये हि भिन्ना अर्था एकशब्दव्यपदेश्याः, न ते युगपत्तेन शब्देनोच्यन्ते। यथा अक्षादिषु। इह च युगपदेकाभिधाननिर्देशः। तस्मादेकमेवेदं तत्त्वं वाच्यवाचकज्ञानरूपतया विवर्तत इति। **कथं पुनर्यौगपद्यावगमः?** कथं पुनर्युगपदयं व्यपदेश इत्यवगम इत्यर्थः। उत्तरम्—**वाचकज्ञानवाच्यानां परस्परापेक्षिणी स्वरूपावगतिर्यतः।** वाचकज्ञानवाच्यानि तावत्परस्परापेक्षाणि प्रतिभान्ति; तेन तेषां तावद्युगपदवगतिः; एकश्च[1] व्यपदेशस्तस्मिन् काले; तस्माद्युगपदेकव्यपदेशप्रवृत्तिरिति[2] सिद्धमेकत्वम्। **अतश्च यदप्युक्तं सजातीयावमर्शशून्या न सामान्यावगतिरस्तीति।** अस्यार्थः—सर्वशब्देषु सजातीया ये वर्णाः तदवमर्शशून्या सामान्यावगतिर्नास्तीति—यावदर्थ[3] इव केवलं सवर्णेषु भेदानपरित्यज्य गवाकृतिः, शब्दत्वं न प्रतीयत इति—यदप्युक्तम्, तदप्ययुक्तम्। कस्मात्? **भेदनिबन्धना ह्येषा युक्तिः।** भेदे पारमार्थिके सत्येषा युक्तिः। **विद्यमानस्य ह्यवमर्शो भवति, न कल्पितस्य।** तेन यदि भेदः पारमार्थिकः स्यात्, तदेदमुपपद्यते—भेद एव प्रतीयते, न सामान्यमिति; न च पारमार्थिको भेदोऽस्ति; तदाह—उक्तं चैकत्वं सर्वशब्दानां शब्दः शब्द इत्येकाभिधाननिर्देशात्। तस्मादेक एव शब्दो वाक्यात्मक इति स्थितम्। संप्रति येनाभिप्रायेणोक्तम् 'कथं पुनर्विवर्तपक्षे नायं दोषः' इति, तमभिप्रायमुद्गिरति—ततः **किमिति।**

---

१. एकत्वव्यपदेशस्त्वस्मिन् काले. ग.

२. युगपदेव व्यप. क, ग.

३. यावदर्थ एव केवलं सवर्णेषु भेदान् परित्यज्यगवाकृति च. ग.

बृहती

ततः किम्? इदं ततः—कल्पनयैव वृद्धव्यवहारस्य निमित्ततोच्यते। तच्चेदं कल्पनाबीजं बहुधोच्यते—"पदमाद्यम्" इत्येवमादि। तस्मात् पदार्थवेदनेन संस्कृतान्यभेदं प्रतिपद्यन्ते इत्यर्थः। न चैतावता अप्रामाण्यं श्रुतेः, प्रमेये शक्तिसद्भावादित्युक्तम्। ततोऽनागमिकी कल्पना प्रत्यवायाय, न वैदिकी, परमार्थपरत्वाद्वैदिकस्य। अतः सिद्धमौत्पत्तिकत्वमस्मत्पक्षे। भेदाभिधानपक्षे यथा न सिध्यति, तथा प्रदर्शितम्। अत एव च यथाविनियोगं मन्त्रार्थान् मन्त्रविदो वर्णयन्ति; भेदे हि नियतमभिधानं

पञ्चिका

यदि काल्पनिको भेदः, तथापि कथं वेदार्थप्रतिपत्तिरिति। उत्तरम्—**इदं ततः, कल्पनयैव वृद्धव्यवहारस्य निमित्ततोच्यते**। कल्पितावयवगता वृद्धव्यवहारव्युत्पत्तिर्निमित्तमात्रम्, अदृष्टव्यवहारस्याप्रतीतेः, दृष्टव्यवहारस्य चापूर्वादपि वाक्यात्प्रतीतेः। **तच्चेदं कल्पनाबीजं बहुधा कथ्यते "पदमाद्यम्" इत्यादि**। यया कल्पनया वृद्धव्यवहारो निमित्तम् अस्याः कल्पनाया यद्बीजं तद्बहुधा कथ्यते—पदमाद्यं वाक्यम्, सर्वाणि पदानि वाक्यम्, आख्यातपदं वाक्यमित्यादि। उपसंहरन्नाह—**तस्मात्पदार्थवेदनेन संस्कृतानि** भेदकल्पनया संस्कृतानि **अभेदम्** अभिन्नं वाक्यं **प्रतिपद्यन्ते**; अर्थरूपेण विवृत्तमित्यर्थः। नन्वेवं काल्पनिकभेदपूर्वकत्वादप्रामाण्यं श्रुतेरित्यत्राह—**न चैतावता अप्रामाण्यं श्रुतेः, प्रमेये शक्तिसद्भावादित्युक्तम्**। अविद्यमानोपायाश्रयणेनापि पारमार्थिके प्रमेये शक्तिसद्भावादित्युक्तं वैयाकरणैः। **अतोऽनागमिकी कल्पना प्रत्यवायाय, न वैदिकी**। यद्यपि वैदिकोऽर्थः शब्दविवर्ततया काल्पनिकः, तथापि न प्रत्यवायाय, परमार्थभूतमोक्षपरत्वाद्वैदिकस्यार्थस्य। **अतः सिद्धमौत्पत्तिकत्वमस्मिन् पक्षे**। भेदाभिधानपक्षे तु यथा न सिध्यत्यौत्पत्तिकत्वं तथा प्रतिपादितम्। यत एवापरमार्थो भेदः काल्पनिकः, **अत एव च यथाविनियोगं मन्त्रार्थान् मन्त्रविदो वर्णयन्ति; भेदे हि नियतमभिधानं स्यात्**। यदि हि भेदः स्यात्, तदा पदानां स्वशक्त्यनुसारेण योऽर्थः प्रतीयते, स एव स्यात्; यदा तु वाक्यात्मैव वाक्यार्थः, तदा यत्र[1] यत्र मन्त्रस्य वाक्यात्मनो विनियोगः, स तस्यार्थः स्यात्; न

१. Omitted. यत्र. ग.

बृहती

स्यात् । अतः "उणादयो बहुलम्" इत्येवमाद्यनागमपूर्वकमेव स्यात् । न चैतत्तवापीष्टम् । उपदेशश्चार्थवानङ्गविद्यानाम् ; भेदपक्षे हि लोकत एव नियतत्वाद्भेदानां किमन्यदाख्यायते ? अस्मत्पक्षे पुनरागमानुसारी विकल्पः ; आनन्त्याच्चागमस्य उपदेशोऽर्थवान् । अतश्चायं भेदव्यपदेशः —लौकिकानां वैदिकानां छन्दसि भाषायां निगम इति च । आगमभेदाश्चोपपन्ना भवन्ति । केनचित् क्वचिदवच्छिद्य तदेव प्रदर्शितं भवति । अत एव चैकादशद्वादशकपालमेकं कर्म । अन्यथा हि भेदावगमे

पञ्चिका

वाक्यस्य वृद्धव्यवहारेणार्थः प्रतीयते ; किन्तु यो यस्माद्वाक्यादर्थः प्रतीयते, स तस्यार्थः ; विनियोगवशेन चानेकार्थः अस्मात्प्रत्येतव्य इति श्रुतौ भवत्यनेकार्थः । यतोऽनियत एवालौकिकार्थः, अतः "उणादयो बहुलम्" इत्येवमाद्यनागमपूर्वकं स्यात् । विनियोगवशेन ह्यनेकधा मन्त्रार्थवर्णने "उणादयो बहुलम्" इत्याद्युपयुज्यते । वृद्धव्यवहारप्रसिद्धनियतार्थाभिधाने तु न तस्योपयोगः । न चैतत्तवापीष्टम् । मीमांसकस्य । उपदेशश्चार्थवानङ्गविद्यानाम् । निगमनिरुक्तव्याकरणादीनामङ्गविद्यानामुपदेशः कालपनिकभेदपक्षेऽर्थवान् । भेदपक्षे हि लोकत एव नियतत्वात् भेदानां किमन्यदाख्यायते ? अस्मत्पक्षे त्वागमानुसारी विकल्पः ; आनन्त्याच्चागमस्य उपदेशोऽर्थवान् । विकल्पकारस्य वारयितुमशक्यत्वादुपदेशोऽर्थवान् । अतश्चायं भेदव्यपदेशः लौकिकानाम्, वैदिकानाम्, छन्दसि, भाषायाम्, निगमे इति च । काल्पनिकभेदपक्षे चायं भेदः ; इतरथा वर्णात्मकतयैकरूपाणां भेदव्यपदेशो न स्यात् । आगमे व्याकरणे दर्शनभेदाश्चोपपन्ना भवन्ति । तथा हि— केचिदस्ति सकारमातिष्ठन्ते, केचिदस भुवीति पठन्ति ; तदुपपन्नं भवति । काल्पनिकभेदपक्षे केनचित्कथञ्चिदवच्छिद्यावधिविशेषं कल्पयित्वा तदेव वस्तु वाक्यात्मकं प्रदर्शितं भवति । यत एव भेदः काल्पनिकः, अत एव चैकादशद्वादशकपालमेकं कर्म । अन्यथा हि भेदस्य पारमार्थिकत्वे भेदावगमे

---

१. एव लौ- क. २. चाह भेद इति तथा वर्णात्मक—ग.

बृहती

एकत्वाभिधानं प्रलापः । न केवलमत्र, अभिधानसन्दर्भेऽपि । अपि च कार्यावगम्यत्वाच्च प्रमाणताया एकत्वाच्च कार्यस्य नानाभिधानं न प्रमाणेनोपपद्यते । वाक्यसमासयोश्चावगत्यन्यत्वेऽपि तुल्यकल्पनाप्रतिषेधार्थं वावचनमागमविकल्पज्ञापनायोपपन्नार्थं भवति । अन्यथा हि वस्त्वेव निरोधकम् । अत एवाभिधेयवशवर्तिशक्तिनिरूपणं नामाख्यातोपसर्गनिपातानाम्; भेदे हि स्वरूपभेदः पारमार्थिकः । तत्र प्रत्यभिज्ञाने सति 'विलम्बते' 'प्रलम्बते' 'विप्र' इत्यन्यत्वं न स्यात् ; तथा भवत्यादिषु

पञ्चिका

सति एकादशद्वादशकपालयोरेकाभिधानं प्रलापः स्यात् । न[1] केवलमत्र । कर्मण्येकाभिधाने प्रलापः, अभिधानसन्दर्भेऽपि । एकशास्त्राभिधानं प्रलापः ; शाखान्तरेऽपि ह्येकं शास्त्रमिच्छन्ति मीमांसकाः ; तदपि भेदे सति प्रलापः स्यात् । अपि च कार्यगम्यत्वात्प्रमाणतायाः एकत्वाच्च कार्यस्य वाक्यार्थप्रतिपत्तिलक्षणस्य नानाभिधानं नानार्थप्रतिपादनं न प्रमाणेनोपपद्यते, एकत्वनानात्वयोर्विरोधात् । वाक्यसमासयोश्चावग[2]त्यन्यत्वेऽपि तुल्यकल्पनाप्रतिषेधार्थं वावचनमागमविकल्पज्ञापनायोपपन्नार्थं भवति ; अन्यथा हि वस्त्वेव निरोधकं स्यात् । वाक्ये 'नीलमुत्पलमानय' इति क्रियासम्बद्धयोः पश्चात्परस्परसम्बन्धोऽवगम्यते ; समासे तु 'नीलोत्पलमानय' इति परस्परसम्बद्धयोः पश्चात्क्रियासम्बन्धः प्रतीयते ; तदेवमवगत्यन्यत्वेऽपि यदिदं वावचनं भगवतः पाणिनेः तुल्या एकरूपा सर्वत्र समासकल्पनैव मा भूदिति तत्प्रतिषेधार्थं तदागमाद्विकल्पः प्रवर्तत इति ज्ञापनार्थं सदुपपन्नार्थं भवति ; आगमे हि विकल्पा[3]प्रवृत्तौ समासकल्प एव स्यात् ; पारमार्थिकत्वे त्ववगमभेदादेवोपायद्वयेन भवितव्यम् । किं वावचनेन ? अत एवाभिधेयवशवर्तिशक्तिनिरूपणं नामाख्यातोपसर्गनिपातानाम् ; यतः भेदे हि स्वरूपभेदः पारमार्थिकः । तत्र प्रत्यभिज्ञाने सति 'विलम्बते' 'प्रलम्बते' 'विप्र' इत्यन्यत्वं न स्यात् । अस्यार्थः—वर्णात्मके शब्दे प्रत्यभिज्ञायमाने उपसर्गादिरूपतया भेदो न स्यात् ;

---

१. Omitted. न......प्रलापः स्यात्. ग.

२. अवगम्यत्वेऽपि. ग.

३. विकल्पप्रवृत्तौ समासविकल्प एव. ग.

बृहती

वर्णमात्रवादिनः । राज्ञः पुरुषस्य हस्तिनः—इति पदद्वयसम्बन्धोऽपि भवति, न—राजपुरुषस्य हस्तिनः इति । एवमुपगोरिदम्, अपत्यस्येदम्; न पुनः औपगवस्येदम्—इति । तथाच करणम्, करणेन—इति विभक्तेरुत्पत्तिरनुत्पत्तिश्च । तथा च सुब्धातवः—अश्वः गर्दभः इति, अश्वति गर्दभति इति च । तथा चाष्टादशप्रभेदमवर्णकुलमर्थ-प्रतिपत्तये । अन्यथा ह्येकत्वाद्वस्तुनः सर्वार्थप्रतिपत्तिरप्रतिपत्तिर्वा स्यात्;

पञ्चिका

काल्पनिकत्वे त्वेकत्वाभावादुपपद्यते । तथा भवत्यादिषु वर्णमात्र-वादिनः । न स्यात् । 'भवति' इति सम्बोधने सप्तम्यां च यद्व्याख्यायते, तद्वर्णमात्रवादिनो न स्यात्; वर्णस्वरूपाभेदात् । राज्ञः पुरुषस्य हस्तिन इति पदद्वयसम्बन्धोऽपि भवति; न राजपुरुषस्य हस्तिन इति । अस्यार्थः—वर्णमात्रवादिनो हि राज्ञ इत्यत्र यः शब्दः, स एव राजपुरुष इत्यत्रापि; ततश्च यथा असमासेऽपि पदद्वयेनापि सम्बन्धो भवति हस्तिन इत्यस्य—राज्ञो हस्तिनः, पुरुषस्य हस्तिन इति, तथा समासेऽपि स्यात् 'राजपुरुषस्य हस्तिनः' इति । न चात्र हस्तिना राज्ञः सम्बन्धः । मत्पक्षे तु राजपुरुषशब्दे परमार्थतो राजपदं नास्त्येव; केवलं कल्पनामात्रमिति न भवत्येष प्रसङ्गः । एवमुपगोरिदमपत्यस्येदमित्यर्थद्वयस्यापीदं-शब्दार्थेन सम्बन्धः; न पुनः औपगवस्येति उपगोरिदमर्थेन सम्बन्धः । तथा करणं करणेनेति विभक्तेरुत्पत्तिरनुत्पत्तिश्च । यदि करणशब्दे विभक्तेरुत्पत्तिः 'घटेन करणेनोदकमानय' इति तदा 'उदकानयने घटः करणम्' इत्यत्रापि स्यात्; अथ करणमित्यत्र न भवति, करणेनेत्यत्रापि न स्यात् । मत्पक्षे तु वाक्यभेदा-न्नायं पर्यनुयोगः, पदानां वाक्येष्वभावात् । तथा सुब्धातवः अश्वो गर्दभः अश्वति गर्दभतीति च । सुबन्ता धातवश्च; अश्वो गर्दभ इति सुबन्ताः; अश्वति गर्दभतीति च धातवः । तथाष्टादशप्रभेदभिन्नमवर्णकुलमर्थप्रतिपत्तये । अवर्णकुलं ह्रस्वदीर्घप्लुताः सानुनासिका निरनुनासिकाः प्रत्येकं षट्, पुनस्ते तु त्रेधा उदात्तादिभिः इत्येवमष्टादशप्रभेदभिन्नं सदर्थप्रतिपत्तयेऽस्मन्मते घटते । अन्यथा हि पारमार्थिके पदवर्णविभागे एकरूपत्वाद्वस्तुनः सर्वार्थप्रतिपत्तिः

बृहती

व्यवस्था नोपपद्यते । प्रमाणान्तरप्रतीतेऽर्थ एकावगमो मृषा—सुरभि चन्दनम्, शीतो वायुरिति च । चन्दनस्य सुरभिः, वायोः शीतम् इत्येव स्यात् । उपसर्गनिपातानां क्वचिद्विशेषणार्थत्वं क्वचिदानर्थक्यं क्वचिद्विपरीतार्थता तद्भावे नोपपद्यते । पदार्थपूर्वकत्वाच्च वाक्यार्थस्य तद्वशादपि निर्णयो दुर्वचः । पदभेदे च पदार्थविनाशः स्यात् । आनर्थक्ये चैकवाक्यता कथम्? विभागज्ञानं च? वर्णोपजन एव स्यात् ।

पञ्चिका

सर्वदा स्यात् । अप्रतिपत्तिर्वा स्यात् । एकोऽप्यर्थो न प्रतीयेत । इतश्च शब्दविवर्तात्मकोऽर्थः ; यस्मात् प्रमाणान्तरप्रतीतेऽर्थे एकावगमो[1] मृषा ; 'सुरभि चन्दनम्, शीतो वायुः' इति च । घ्राणेन्द्रियेण सौरभमवगम्यते, चन्दनं तु दर्शनस्पर्शनाभ्याम् ; तथा स्पर्शेन्द्रियेण शैत्यम्, वायुरनुमानेनेति वैशेषिकमतेन । तेन भिन्नानि गन्धस्पर्शद्रव्याणि ; भिन्नेषु चाभिन्नावगतिर्मृषा । चन्दनस्य सुरभिर्वायोः शीतम् इत्येव सदा स्यात् । तस्माद्विवर्तात्मकोऽर्थः । उपसर्गनिपातानां क्वचिद्विशेषणार्थता प्रपचतीत्यादिषु क्वचिदानर्थक्यं प्रलम्बत इत्यादिषु क्वचिद्विपरीतार्थता प्रतिष्ठत इत्येवमादिषु तद्भावे तद्रूपत्वे एकरूपत्वे नोपपद्यते । काल्पनिकत्वे तूपपद्यते । अथोच्येत वाक्यार्थानुसारेण वैचित्र्यं भविष्यतीत्यत्राह—पदार्थपूर्वकत्वाच्च वाक्यार्थस्य तद्वशादपि निर्णयो दुर्वचः । पदाभेदे पदार्थभेदान्न वाक्यार्थप्रतिपत्तिभेदस्त्वन्मते स्यात् । अथोच्येत नानर्थकत्वं प्रलम्बत इत्येवमादिषु, किन्तु प्रशब्दसहितमेकमेवेदमित्यत्राह—पदभेदे च पदार्थविनाशः स्यात् । लम्बतेपदाद्भिन्ने प्रलम्बतेपदेऽङ्गीक्रियमाणे लम्बतेपदे गृहीतसम्बन्धस्य प्रलम्बत इत्यत्र पदार्थावगतिरेव न स्यात् । तस्मादनर्थक एव प्रशब्दो लम्बत इत्येवार्थबोधकम् ; तत्र आनर्थक्ये चैकवाक्यता कथम्? एकार्थप्रतिपत्तिव्यापृततयैकवाक्यता । अनर्थकस्य च नास्ति । व्यापारः । विभागज्ञानं च । कथमित्यनुषङ्गः । वर्णोपजन एव हि स्यात् । भिन्नार्थप्रतिपादकतया विभिन्नं पदं भवति । विभागेन त्वर्थाप्रतिपादकत्वे न पदविभागः स्यात् ; किन्तु तस्मिन्नेव पदे वर्णान्तर-

---

१. एकार्थावगातः. ग.

बृहती

आगमविकल्पपक्षे तु सर्वमुपपन्नम् । आगमविकल्पावगमः कुतः इति चेत्, आगमान्तरादेव । तदुक्तम्—"ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम्" । अनिदम्प्रथमता चास्यानादित्वात् संसारस्य शक्यतेऽवगन्तुम् । सेयमनपेक्षता प्रामाण्यहेतुः । भेदपक्षे सर्वमिदमसमञ्जसम् । दर्शयति च ज्ञानप्रधानवर्ती वेदः अच्छिद्यावबोधकत्वं वेदस्य । वेदान्ताः कथम् ? "अथ यदल्पम्, तन्मर्त्यम्" ; 'अथ यद्भूम, तदमृतम्'—इति । किं तदल्पम् ? अवच्छेदः । कल्पनीयस्यावच्छेदो

पञ्चिका

मिदमधिकमुपजातमिति स्यात् । आगमविकल्पपक्षे तु सर्वमुपपन्नम् । लम्बतेशब्दे व्युत्पत्तिरेव वाक्यार्थप्रतिपत्तिकारणं दृष्टत्वादिति कल्प्यते । आगमविकल्पावगमः कुत इति चेत् । इत्थं प्रकृतिप्रत्ययादिविभागेन विकल्पिताः शब्दभागाः प्रतिपत्त्युपाया इति कुतोऽवगतं पाणिनिप्रभृतिभिरिति चेत् । उत्तरम्—आगमान्तरादेव । अपरस्माद्व्याकरणागमादेव । तदुक्तं तैः—"ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् ।" इति । ननु च तेषामृषीणां कुतोऽवगतिरित्यत्राह—अनिदम्प्रथमता चास्यानादित्वात् संसारस्य शक्यतेऽवगन्तुम् । यदि हि कश्चित्प्रथमः स्यात्, ततो दोषो भवेत्—तस्य कुतो ज्ञानमिति ; यदा तु संसारस्यानादित्वात् 'अयं प्रथमः' इत्येव[1] नास्ति, तदा नास्ति दोषः । सेयमनपेक्षता प्रमाणत्वे हेतुः । भेदपक्षे पुनर्यस्मिन् पक्षे पदवर्णभेदोऽस्ति तस्मिन् पक्षे सर्वमिदमसमञ्जसं स्यात् । दर्शयति च ज्ञानप्रधानवर्ती वेदः अवच्छिद्यावबोधकत्वं वेदस्य । वेदान्ता हि ज्ञाने प्रधाने वर्तन्ते ; तत्र हि ज्ञानमेव विधिविषयः—ब्रह्म ज्ञातव्यमिति ; ते च अवच्छिद्य काल्पनिकं विभागं कल्पयित्वा वेदस्यावबोधकत्वमिति । केन ग्रन्थेन ? "अथ यदल्पं तन्मर्त्यम्," 'अथ यद्भूम तदमृतम्' इति । नन्वल्पस्यात्र मर्त्यतया अस्थायित्वं दर्शितम्, किं तदल्पम् ? उत्तरम्—अवच्छेदः । कथमवच्छेदा अस्थायिन

---

१. इत्येतन्नास्ति. ग.

## बृहती

दृष्टः, न पुनस्तत्त्वस्य । "यावद्वाचो गतम्"—इत्यादि सर्वमुपपन्नार्थं भवति । अन्यथा हि विरोधः स्यात् । विरोधे चाप्रामाण्यम् । तस्मादेकानुगुणमिदं ब्रह्मराशिमागमविदो व्याचक्षते । सोऽयमागमः । तदिदं तत्त्वम् । त इमे ब्रह्मविदः, य एवं विजानते । तस्मान्निवर्तस्वैतस्माद्भेदग्रहात् संसारानुपातिनः । ननु चात्रापि वृद्धव्यवहारव्युत्पत्तिर्नैवोपकारिका । आगमतश्चेद्विकल्पाः प्रवर्तन्ते, किं वृद्धव्यवहारेण? अथ वृद्धव्यवहारव्युत्पत्त्या अविकल्पिता नागमविकल्पान् प्रतिपद्यन्ते;

## पञ्चिका

इत्यत्राह—**कल्पनीयस्यावच्छेदो दृष्टः, न पुनस्तत्त्वस्य ।** तेन कल्पितविषयत्वादवच्छेदा अस्थायिनस्तत्त्वसाक्षात्करणे । **"यावद्वाचो गतम्" इत्यादि** च **सर्वमुपपन्नार्थं भवति ।** यदद्वैतप्रतिपादकं तदुपपन्नार्थं भवति । **अन्यथा हि विरोधः स्यात् ।** कर्मविधीनां भिन्नार्थप्रतिपादकत्वे, विरोधः कर्मविधीनां भिन्नार्थप्रतिपादकानां वेदान्तानां च स्यात्; शब्दविवर्तात्मकार्थपक्षे तु न विरोधः । **विरोधे चाप्रामाण्यम् ।** वेदानाम्, निश्चयाभावात् । **तस्मादेकानुगुणं** एकब्रह्मानुगुणं सकलमिदं ब्रह्मराशिं वेदराशिमागमविदो व्याचक्षते । **सोऽयमागमः ।** यद्व्याकरणम्, प्रामाणिकत्वात् । **तदिदं तत्त्वम् ।** यद्व्याकरणोक्तम्[1] । **त इमे** वैयाकरणा ब्रह्मविदः, य एवं विजानन्ते[2] । तस्मात् निवर्तस्वैतस्मात् मीमांसक! भेदग्रहणात् संसारानुपातिन इति । संप्रति पूर्वपक्षी दूषयति—**ननु चात्रापि वृद्धव्यवहारव्युत्पत्तिर्नैवोपकारिका ।** कस्मादित्याह—**आगमतश्चेद्विकल्पाः प्रवर्तन्ते, किं वृ[3]द्धव्यवहारेण?** आगमतश्चेद्विकल्पाः प्रवर्तिताः, तद्बलेन विनापि वृद्धव्यवहारं प्रतिपत्तिः स्यात्, यद्यागमविकल्पवशेनार्थप्रतिपत्तिः । **अथ वृद्धव्यवहारव्युत्पत्त्या** [4]**अविकल्पिताः** असंजातविकल्पा **नागमविकल्पान् प्रतिपद्यन्ते,** वृद्धव्यवहारविकल्पं विना व्याकरणमेव बोद्धुमलं न भवतीति व्यवहारोऽप्याद्रियते; **तदिदं भेदव्यवहारेऽपि तुल्यम् ।** अस्यार्थः—भेदव्यवहारेऽपि

---

१. Added. उपपन्नत्वात्. ग. ३. Added. च. ग.
२. Added. नान्ये. ग. ४. त्याविकल्पिता न संजात. क.

बृहती

**तदिदं भेदव्यवहारेऽपि तुल्यम् । अथागमत एव विकल्पाः प्रतिपद्यन्ते, वृद्धव्यवहारव्युत्पन्ना निमित्तावगतिः क्कोपयुज्यते ? तस्मादयमपि भेदपक्षपर्यवसित एव पक्षः । अथेदानीमयमपरः प्रकारः—जातिगुणयोरिवैकद्रव्यनिवेशादेकद्रव्यसम्बन्धः प्रतीयते ; तद्वज्जातिगुणशब्दयोरपि सन्निहिततयोच्चरितयोः तद्द्वारेणैकार्थतावगम्यत इति चेत् , तन्न ; व्युत्पत्तौ निमित्तमात्रतयावगतेः निमित्तमात्रतयैवावगतिः प्राप्नोति । एवमानर्थक्य-**

पञ्चिका

वृद्धव्यवहार एव व्युत्पत्तिनिमित्तम्, अत्रापि––इति तुल्यं तर्हि तेनेदम् । अथात्र वृद्धव्यवहारव्युत्पत्तिर्नाद्रियते, **आगमत एव विकल्पाः** परिगृह्यन्ते, **वृद्धव्यवहारव्युत्पन्ना निमित्तावगतिः क्कोपयुज्यते ?** अस्यार्थः—व्याकरणत एव विकल्पाः प्रवर्तन्ते ; व्यवहारस्तु व्याकरणप्रतिपत्तावेवोपाय इति । तदसत् ; अविद्यमानविभागविषया व्युत्पत्तिः वृद्धव्यवहारावगता क्कोपयुज्यते ? यदेव हि व्युत्पन्नं तदेव चेत्पुनरपि श्रूयते, तदा वाक्यार्थावगतिः स्यात् ; तदभावे तु कुतो व्याकरणावबोधोऽपि स्यात् ? तस्माद्वृद्धव्यवहारव्युत्पत्त्यपेक्षायामयमपि भेदपक्ष एव पतितः पक्षः, भेदं विना व्युत्पत्तिप्रतिपत्त्योरनुपपत्तेः । नन्वविद्याकल्पितभेदप्रतिपत्तिनिबन्धनमेतद्भविष्यति । न, भेदप्रतिपत्तेरविद्यारूपत्वे प्रमाणाभावात् । कार्यमेव प्रमाणमिति चेत्, न ; अन्यथापि वाक्यार्थप्रतिपत्त्यात्मककार्यसिद्धेः । **अथेदानीमयमपरः प्रकारः** । निरस्यते । **जातिगुणयोरिवैकद्रव्यनिवेशादेकद्रव्यसम्बन्धः प्रतीयते ; तद्वज्जातिगुणशब्दयोरपि सन्निहिततयोच्चरितयोः तद्द्वारेणैकार्थतावगम्यत इति चेत्** । अस्यार्थः—जातिगुणयोरर्थयोर्यथैकद्रव्यनिवेशादेकद्रव्यनिवेशलक्षणः सम्बन्धः, तथा जातिगुणशब्दयोरपि सन्निहितोच्चरितयोः सम्बन्धो भविष्यति ; तद्द्वारेण गुणान्वितद्रव्यात्मकैकार्थप्रतिपत्तिः सेत्स्यतीति । निरस्यति—नैतत्, व्युत्पत्तौ व्युत्पत्तिसमये, निमित्तमात्रतया पदार्थान्तरनिरपेक्षतया[1], आवापोद्धाराभ्यां व्युत्पत्तेः । **निमित्तमात्रतयैवावगतिः[2] प्राप्नोति** ; केवलादेव पदात्केवलपदार्थावगतिः

---

१. पदान्तर. ग. २. मात्रतयाव. क.

भाष्यम्

"अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यतो वाक्यादेकस्मात् पदात् 'अग्निहोत्रात् स्वर्गो भवति' इति गम्यते। गम्यते तु पदत्रये उच्चरिते। न चात्र चतुर्थः

बृहती

मिति चेत्; न ह्यानर्थक्यमर्थान्तरावगतौ हेतुः। तस्मादनर्थक एवायं वृद्धव्यवहारनिबन्धनः शब्दार्थयोरौत्पत्तिकसम्बन्धाभिधानक्लेशः। तस्मात् पूर्वोक्तमेव कृतकत्वं सामयिकत्वं वा सम्बन्धस्येति स्थितम्। "यद्यौत्पत्तिको नित्यः शब्दः सम्बन्धश्च, तथापि न चोदनालक्षणो धर्मः"—इति वृद्धव्यवहारस्यानिमित्तताप्रतिज्ञेयं वैदिके व्यवहारे; यथोक्तम्। 'चोदना हि वाक्यम्। न ह्यग्निहोत्रात् स्वर्गो भवतीति गम्यते'—इति

पञ्चिका

स्यात्, तावन्मात्रे व्युत्पत्तेः। एवमानर्थक्यमिति चेत्। पदार्थमात्रस्य सम्बन्धग्रहणसमय एवावगतत्वात् पदार्थमात्रप्रतिपादकत्वे आनर्थक्यमिति चेत्। दूषयति—न ह्यानर्थक्यमर्थान्तरावगतौ हेतुः। प्रमाणबलेन यद्यानर्थक्यम्, अस्तु; न पुनरर्थान्तरमवगन्तुं शक्यते। उपसंहरति—तस्मादनर्थक एवायं वृद्धव्यवहारनिबन्धनः शब्दार्थयोरौत्पत्तिकसम्बन्धाभिधानक्लेशः। तस्मात्पूर्वोक्तमेव कृतकत्वं [1]सामयिकत्वं वा सम्बन्धस्येति स्थितम्। एतच्च पूर्वमेव व्याख्यातम्। एवं पूर्वपक्षं [2]साधयित्वा भाष्यमधुना व्याचष्टे—यद्यौत्पत्तिको नित्यः शब्दः सम्बन्धश्च, तथापि न चोदनालक्षणो धर्म इति भाष्यं व्याचष्टे—वृद्धव्यवहारस्यानिमित्तताप्रतिज्ञेयं वैदिके व्यवहारे; यथोक्तम्। अस्माभिः। अत्रापरं भाष्यम्—"चोदना हि वाक्यम्" इत्यादि; तदनुपपन्नम्। यत्तावदेकस्मात् पदादनवगम्यमानत्वमुक्तम्, तत्सिद्धसाधनम्। यत्तु पदत्रयावगम्यमानत्वाभिधानम्,

---

१. Omitted. सामयिकत्वम्. ग. २. शोधयित्वा. ग.

भाष्यम्

शब्दोऽस्ति अन्यदतः। न चायं समुदायोऽस्ति लोके, यतोऽस्य व्यवहारादर्थोऽवगम्यते। पदानि ह्यमूनि प्रयुक्तानि, एषां नित्योऽर्थः ; अप्रयुक्तश्च समुदायः ; तस्मात् समुदाय-

बृहती

वाक्यात् प्रतिपत्तिर्योक्ता, हेत्वभिधानपातनिकेयम्। न चायं सामुदायो वृद्धव्यवहारासिद्धः, यः श्रुतौ प्रयुक्तः। तस्मादनिमित्तता पूर्वोक्ता अस्य भाष्यस्यार्थतया वर्णिता। "पदानि ह्यमूनि प्रयुक्तानि, एषां नित्योऽर्थः" इति वृद्धव्यवहारे हि पदानामौत्पत्तिकत्वं निमित्ततया सिद्धं

पञ्चिका

तत्पूर्वपक्षिणो विरुद्धम् ; तदिदमनुपपत्तिद्वयमपनुदन्नाह—**चोदना हि वाक्यम्**। न च 'अग्निहोत्रम्' 'जुहोति' इत्यतः एकस्मात् पदात् 'अग्निहोत्रात् स्वर्गो भवति' इति गम्यते, गम्यते तु पदत्रये उच्चरिते— इति ग्रन्थेन पदादप्रतिपत्तिः[1], वाक्याच्च प्रतिपत्तिर्योक्ता ; **हेत्वभिधान-पातनिकेयम्**। हेत्वभिधानं पातयितुमेतदुक्तमित्यर्थः। यद्येवं पदादप्रतीतिः वाक्याच्च प्रतीतिः, ततः किम्? **न चायं समुदायो वृद्धव्यवहारासिद्धः, यः श्रुतौ प्रयुक्तः। तस्मादनिमित्तता पूर्वोक्तास्य भाष्यस्यार्थतया वर्णिता**। एतस्यैव भाष्यस्यार्थोऽस्माभिः पूर्वमुक्तः या वृद्धव्यवहारस्या-निमित्तता। **"पदानि ह्यमूनि प्रयुक्तानि, एषां नित्योऽर्थः" इति**। भाष्यमनुभाषितम्। तत्रेयमनुपपत्तिः—यदि पदानां पदार्थमात्रे व्युत्पत्तिः, तदा अभिनवकविरचिताद्वाक्यादर्थो नावगम्येत ; अथ मा भूदेष दोष इति न पदार्थमात्रे व्युत्पत्तिः, अपि तु अन्विते, तदा वेदवाक्यादपि प्रतीतिः स्यादिति। तामपनेतुमाह—**वृद्धव्यवहारेऽपि पदानामौत्पत्तिकत्वं निमित्त-तया सिद्धम्** ; तस्मिन्नेव प्रमाणान्तराधिगमनीये नैमित्तिके। इह पुन-

---

१. पदादेरप्रति. क.

भाष्यम्

स्यार्थः कृत्रिमो व्यामोहो वा। न च पदार्था एव वाक्यार्थः; सामान्ये हि पदं वर्तते, विशेषे वाक्यम्; अन्यच्च सामान्यम्, अन्यो विशेषः। न च पदार्थाद्वाक्यार्थावगतिः,

बृहती

तस्मिन्नेव नैमित्तिके । इह पुनर्नैमित्तिकान्तरावगतावसिद्ध एव निमित्तभावः। कुतः? अप्रयुक्तः समुदायो यस्मात्। एवं सति कृत्रिमत्वमुपवर्णितम्। "न च पदार्था एव वाक्यार्थः"—इति परस्परानन्वयितां दर्शयति। परस्परान्वितता हि विशेष उच्यते। "सामान्ये हि पदं वर्तते, विशेषे वाक्यम्"—इत्यनेन व्यावहारिकी पदव्युत्पत्तिरनर्थिकेत्युक्तम्। विस्तरश्चात्रोक्त एव पूर्वम्। "न च पदार्थाद्वाक्यार्थावगतिः,

पञ्चिका

नैमित्तिकान्तरस्य प्रमाणान्तराविषयस्यावगतावसिद्ध एव निमित्तभावः। कुतः? अप्रयुक्तः समुदायो यस्मात्। यदि हि वैदिकोऽयं समुदाय एतस्मिन्नर्थे प्रयुक्त इति ज्ञातं भवेत्, ततोऽतीन्द्रियेऽपि निमित्तभावावगमात् स्यादेव वैदिकार्थावगतिः। एवं सति कृत्रिमत्वमुपवर्णितम्। "न च पदार्था एव वाक्यार्थः; सामन्ये हि पदं वर्तते" इति। तदनुपपन्नम्; न हि सर्वं पदं सामान्ये वर्तते; पाचकादिषु व्यभिचारादित्याशङ्क्य व्याचष्टे—परस्परानन्वयितां कथयति। सामान्यशब्देन परस्परानन्वयितोच्यते। कुतस्तत्सामान्यमित्यत्राह—परस्परान्वयिता हि विशेष इत्युच्यते। अन्वयावस्था ह्यसाधारणी, साधारणी ह्यनन्वितावस्थेति भवत्यनन्वितं सामान्यम्। सामान्ये पदं वर्तताम्, विशेषे वाक्यम्, तथापि किमित्याह—सामान्ये हि पदं वर्तते विशेषे वाक्यमित्यनेन व्यावहारिकी पदव्युत्पत्तिरनर्थिकेत्युक्तम्; विस्तरश्चात्रोक्त एव पूर्वम्। अस्यार्थः—

---

१. रान्वयिताम्. क.

भाष्यम्

असम्बन्धात् । असति चेत् सम्बन्धे कस्मिंश्चित् पदार्थेऽवगतेऽर्थान्तरमवगम्येत, एकस्मिन्नवगते सर्वमवगतं स्यात् । न चैतदेवं भवति । तस्मादन्यो वाक्यार्थः । अप्रयुक्तादपि

बृहती

असम्बन्धात्" इति । नन्वस्त्येव पदार्थानां वाक्यार्थेन सम्बन्धः, तदन्वयस्यैव वाक्यार्थत्वात् । न हि प्रयोगशून्या परस्परान्वितता शक्यतेऽवगन्तुमिति पूर्वोक्तानवगतिः एतद्भाष्यनिबन्धना । "असति चेत् सम्बन्धे कस्मिंश्चिदर्थेऽवगतेऽर्थान्तरमवगम्येत, एकस्मिन्नवगते सर्वमवगतं स्यात्"—इत्यपदार्थनिमित्तत्वे वाक्यार्थस्य हेतुः ; वर्णितश्चायम् । "अप्रयुक्तादपि वाक्यादसति सम्बन्धे स्वभावा-

पञ्चिका

अन्वयव्यतिरेकाभ्यां हि पदमनन्वितेऽर्थे वर्तते ; तेन वेदेऽपि पदात्पदार्थावगतिरेव स्यात्, न वाक्यार्थावगतिरित्युक्तम् । "न च पदार्थाद्वाक्यार्थावगतिः, असम्बन्धात्" इति भाष्यम् ; तत्रैवं चोदयति—नन्वस्त्येव पदार्थानां वाक्यार्थेन सह सम्बन्धः, तदन्वयस्यैव वाक्यार्थत्वात् । अत्र परिहारमाह—न हि प्रयोगशून्या परस्परान्वयिता शक्यतेऽवगन्तुमिति पूर्वोक्तानवगतिरेतद्भाष्यनिबन्धना । निमित्तनैमित्तिकसम्बन्धाभावोऽयमभिप्रेतः । प्रमाणान्तरावेद्यविषये प्रयोगाभावात् तदन्वितमात्मानं पदार्थः प्रतिपादयतीति निमित्तता नावधारिता ; अतः प्रयोगशून्या पदार्थानां परस्परान्वयिता अलौकिकेऽर्थे न शक्यतेऽवगन्तुमित्युक्तम्, "न च पदार्थेभ्यः" इत्यनेन भाष्येण पूर्वोक्तादेतद्भाष्यनिबन्धनान्न्यायात् । "असति चेत्सम्बन्धे कस्मिंश्चिदर्थेऽनगतेऽर्थान्तरमवगम्येत, एकस्मिन्नवगते सर्वमवगतं स्यात्" इत्यपदार्थनिमित्तत्वे वाक्यार्थस्य हेतुः । वाक्यार्थः पदार्थनिमित्तको न भवतीत्यत्रायं हेतुः । वर्णितश्चायम् । "अप्रयुक्तादपि वाक्यादसति च सम्बन्धे

भाष्यम्

वाक्यादसति सम्बन्धे स्वभावादर्थावगमः—इति यदि कल्प्येत, शब्दो धर्ममात्मीयं व्युत्क्रामेत् ; न चैष शब्दधर्मः, यदप्रयुक्तादपि शब्दादर्थः प्रतीयते ; न हि प्रथमश्रुतात् कुतश्चन शब्दात् केचिदर्थं प्रतियन्ति ।

बृहती

दर्थावगमः''—इत्यनेनानुबन्धविनिर्मुक्तं नियोगैक्यं वेदे दर्शयतीति वर्णितम् । "शब्दो धर्ममात्मीयं व्युत्क्रामेत् ; न चैष शब्दधर्मः, यदप्रयुक्ताच्छब्दादर्थः प्रतीयते''—इति कार्यानुवर्ति-तामनुबन्धानामनुबन्धविनिर्मुक्तौ दर्शयति ; यथोदितम् । "न हि प्रथमश्रुतात् कुतश्चन शब्दात् केचिदर्थं प्रतियन्ति''—इति सामान्यतोदृष्टविरोधः पूर्वोक्तः । "तदभिधीयते—पदधर्मोऽयम्, न

पञ्चिका

स्वभावादर्थावगमः'' इति भाष्यम् ; तदनुपपन्नम्, स्वभावतो गमकत्वेऽदृष्ट-व्यवहारस्यापि प्रतीतिः स्यादित्यत्राह—अनेनानुबन्धविनिर्मुक्तं कार्यैक्यं वेदे दर्शयतीत्यत्रैव वर्णितम् । लोके वेदे चानुबन्धविनिर्मुक्तमेकं कार्यमिति दर्शितमनेन भाष्येण । एवं तर्हि कथमुत्तरभाष्यमित्याशङ्क्याह—"शब्दो धर्ममात्मीयमतिक्रामेत् ; न चैष शब्दधर्मः, यदप्रयुक्ताच्छब्दादर्थः प्रतीयते'' इति कार्यानुवर्तितामनुबन्धानामनुबन्धविनिर्मुक्तौ दर्शयति ; यथोदितम् । स्वत एव कार्यं भिन्नम्, न पुनरनुबन्धभेदमात्रात् ; तेन तत्र सम्बन्धग्रहणाभावो लिङादीनाम् । ते कथं भिन्ननियोगार्थं बोधयेयुः ? बोधयत्सु च शब्दः सम्बन्धग्रहणापेक्षित्वं स्वयमतिक्रामेत् ; न चैष शब्दधर्म इति । "न हि प्रथमश्रुतात्'' इति भाष्यं पुनरुक्तमिति मन्वानो व्याचष्टे—"न हि प्रथमश्रुतात् कुतश्चन शब्दात् केचिदर्थं प्रतियन्ति'' इति सामान्यतोदृष्टविरोधः पूर्वोक्तः । यत्सामान्यतोदृष्टमुपन्यस्तम्, तस्य यः

भाष्यम्

तदभिधीयते—पदधर्मोऽयम्, न वाक्यधर्मः; वाक्याद्धि प्रथमश्रुतादपि प्रतियन्तो दृश्यन्ते। नैतदेवम्; यदि प्रथमश्रुतादवगच्छेयुः, अपि तर्हि सर्वेऽवगच्छेयुः पदार्थविदोऽन्ये च; न त्वपदार्थविदोऽवगच्छन्ति। तस्मान्नै-

बृहती

वाक्यधर्मः; वाक्याद्धि प्रथमश्रुतादपि प्रतियन्तो दृश्यन्ते"—इति। कथं तर्ह्यर्थानवगतिः? अवगतेर्विघ्नः—पदार्थमात्रव्युत्पत्तित एव वृद्धव्यवहारो वेदार्थावगतौ हेतुः—इत्युपन्यस्तमनेन भाष्येण प्रागुक्तमेव। "नैतदेवम्; यदि प्रथमश्रुतादवगच्छेयुः, अपि तर्हि सर्वेऽवगच्छेयुः पदार्थविदोऽन्ये च; न त्वपदार्थविदोऽवगच्छन्ति" इति। न ह्यप्रयुक्ता-

पञ्चिका

पूर्वोक्तो विरोधः, सोऽनेन भाष्येणोक्तः। यदि प्रथमश्रुतादपि शब्दात् केचिदर्थमवगच्छेयुः, तदा सामान्यतोदृष्टं भवेत्। यतस्तु यस्य यत्सम्बन्धग्रहणम्, ततः स एव तमेवावगच्छति; अतो मन्यामहे यत्रैव पदार्थानां प्रमाणान्तरवेद्ये निमित्तता दृष्टा, तत्रैव तेषामपि निमित्ततेति। "तदभिधीयते—पदधर्मोऽयम्, न वाक्यधर्मः; वाक्याद्धि प्रथमश्रुतादपि प्रतियन्तो दृश्यन्ते" इति भाष्यम्, तत्र पृच्छति—कथं तर्ह्यर्थानवगतिः? यदि प्रथमश्रुतमेव वाक्यं प्रतिपादयति, किमिति प्रथममेव वाक्यं वृद्धस्येव बालस्यार्थं नावबोधयति? न[1] नावबोधयति। तेनावगच्छामोऽस्ति कश्चित्प्रकारो येनावबोधयति; तत्कोऽसाविति। उत्तरम्—अवगतेर्विघ्नः। पदार्थमात्रव्युत्पत्तित एव वृद्धव्यवहारो वेदार्थावगमहेतुरित्यनेन भाष्येणोपन्यस्तं प्रागुक्तमेव। पदार्थसम्बन्धे व्युत्पन्नेऽवगतिर्वेदेऽपि भवतीत्यर्थः। "नैतदेवम्; यदि प्रथमश्रुतादवगच्छेयुः, अपि तर्हि सर्वेऽवगच्छेयुः पदार्थविदोऽन्ये च; न त्वपदार्थविदोऽवगच्छन्ति" इति भाष्यं व्याचष्टे—न ह्यप्रयुक्ताल्लोके

---

१. Omitted न नावबोधयति. ग. न चावबोधयति. क.

भाष्यम्

तदेवम्। ननु पदार्थविद्भिरप्यवगच्छद्भिरकृतक एव वाक्यार्थ-सम्बन्धोऽवगतो भवति ; पदार्थवेदनेन संस्कृता अवगमिष्यन्ति यथा तमेव पदार्थं द्वितीयादिश्रवणेन। नेति ब्रूमः ; यदि वाक्यान्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहितः

बृहती

लोके समुदायादर्थोऽवगन्तुं शक्यते। यत्तु पदार्थविदोऽवगच्छन्तीति, तत् सामान्यतोदृष्टभ्रान्त्या पूर्वोक्तया—इति मन्तव्यम्। "ननु च पदार्थविद्भिरप्यवगच्छद्भिरकृतक एव वाक्यार्थसम्बन्धोऽवगतो भवति ; पदार्थवेदनेन संस्कृता अवगमिष्यन्ति यथा तमेवार्थं द्वितीयादि-श्रवणेन"—इति। किमत्र भ्रान्त्या ? आगमविकल्पानुगुण्याद्वरं निमित्ततैव यथा वृद्धव्यवहार एव द्वितीयादिश्रवणम्। अयं पूर्वोपवर्णितोऽर्थः। "नेति ब्रूमः ; यदि वाक्यान्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहितः

पञ्चिका

समुदायादर्थोऽवगन्तुं शक्यते। प्रतिनियतकारणाभावेन[1] यत्किञ्चिदर्थप्रतीति-प्रसङ्गात्। यत्तु पदार्थविदोऽवगच्छन्तीति, तत्सामान्यतोदृष्टभ्रान्त्या पूर्वोक्तयेति मन्तव्यम्। सामान्यतोदृष्टनिबन्धनाप्रतीतावेव प्रतीतिर्भ्रान्तिरित्यर्थः। "ननु पदार्थविद्भिरप्यवगच्छद्भिरकृतक एव वाक्यार्थसम्बन्धोऽवगतो भवति ; पदार्थवेदनेन संस्कृता अवगमिष्यन्ति यथा तमेव पदार्थं द्वितीयादिश्रवणेन" इति भाष्यं व्याचष्टे—किमत्र भ्रान्त्या ? सामान्यतोदृष्टनिबन्धनयाश्रितया। आगमविकल्पानुगुण्याद्वरं निमित्ततैव। 'यथा वृद्धव्यवहार एव मीमांसकपक्षे द्वितीयादिश्रवणमुपायः, तथागमविकल्पाः' इत्ययमस्यार्थः पूर्वमुपवर्णितः। नेति ब्रूमः ; यदि वाक्यान्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहितः पदार्थेभ्योऽ-

---

१. भावे तु. ग.

भाष्यम्

पदार्थेभ्योऽर्थान्तरं प्रत्याययति, क उपकारस्तदानीं पदार्थ-ज्ञानादवकल्पते ? तस्मात् कृत्रिमो वाक्यार्थप्रत्ययो व्यामोहो वा, न पदार्थद्वारेण संभवति वाक्यार्थज्ञानमिति । नन्वेवं संभविष्यति—सामान्यवाचिनः पदस्य 'गौः' इति वा 'अश्वः' इति वा, विशेषकम् 'शुक्लः' इति वा 'कृष्णः' इति वा पदमन्तिकादुपनिपतति यदा, तदा वाक्यार्थोऽवगम्यते । न हि ; कथमिव 'गौः' इति वा 'अश्वः' इति वा सामान्यवाचिनः पदात् सर्वगवीषु सर्वाश्वेषु च बुद्धि-

बृहती

पदार्थेभ्योऽर्थान्तरं प्रत्याययति, क उपकारस्तदानीं पदार्थज्ञानादवकल्पते"—इति पूर्वोक्तमनिमित्तत्वं वेदस्य कल्पनायामपि तुल्यमित्यस्यार्थः । "नन्वेवं संभविष्यति—सामान्यवाचिनः पदस्य 'गौः' इति वा 'अश्वः' इति वा, विशेषकम् 'शुक्लः' इति वा 'कृष्णः' इति वा पदमन्तिकादुपनिपतति यदा, तदा वाक्यार्थोऽवगम्यते" इति । तदेतत् कार्यैक्यनिबन्धनं यदुक्तम् अर्थयोरिव बुद्ध्येकत्वोत्पत्तिहेतुत्वम्, तदुपन्यस्तम् । "न हि ; कथमिव 'गौः' इति वा 'अश्वः' इति वा सामान्यवाचिनः पदात् सर्वगवीषु सर्वाश्वेषु

पञ्चिका

र्थान्तरं प्रत्याययति, क उपकारस्तदानीं पदार्थज्ञानादवकल्पेत" इति । पूर्वोक्तमनिमित्तत्वं वेदस्य कल्पनाया[1]मपि तुल्यमित्यस्यार्थः । 'यथा भेदवादेऽनिमित्तत्वं वेदस्य, तथा काल्पनिकवादेऽपि' इति पूर्वं यदुक्तम्, तदेवास्य भाष्यस्यार्थ इति । "नन्वेवं संभविष्यति—सामान्यवाचिनः पदस्य गौरिति वाश्व इति वा, विशेषवाचि शुक्ल इति वा कृष्ण इति वा

१. यामिति तुल्यम्. क.

भाष्यम्

रुपसर्पन्ती श्रुतिजनिता वाक्यानुरोधेन कुतश्चिद्विशेषाद-पवर्तेत ? न च 'शुक्लः' इत्यादेर्विशेषवचनस्य कृष्णादि-

बृहती

च बुद्धिरुपसर्पन्ती श्रुतिजनिता वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तेत ?" इति । निमित्तमात्रव्युत्पत्तेर्व्यवहारव्युत्पत्तौ पदार्थमात्रावगतिः प्राप्नोति, न परस्परान्वयः—इति प्रागुक्तमनेनोक्तम् । अर्थनिमित्तं त्वार्थम् , न शाब्दम् ; शाब्दं त्विदं विचार्यते । तत्र च यावत्प्रयोगिण्येव

पञ्चिका

पदमन्तिकादुपनिपतति यदा, तदा वाक्यार्थोऽवगम्यते" इति भाष्यं व्याचष्टे—तदेतत् कार्यैक्यनिबन्धनं यदुक्तमर्थयोरिव बुद्ध्येकत्वोत्पत्तिहेतुत्वम्, तदुपन्यस्तम् । विशिष्टार्थप्रतिपत्तिरेकं कार्यम्, तन्निबन्धनेमकबुद्ध्युत्पादकत्वं शुक्लगोशब्दयोरिति । "न हि ; कथमिव गौरिति वाश्व इति वा सामान्य-वाचिनः पदात् सर्वगवीषु सर्वाश्वेषु च बुद्धिरुपसर्पन्ती श्रुतिजनिता वाक्यानुरोधेन कुतश्चित् विशेषादपवर्तेत" इति । व्यवहारव्युत्पत्तौ निमित्तमात्रव्युत्पत्तेः निमित्तमात्रस्य पदान्तरनिरपेक्षस्य स्वार्थव्युत्पत्तेः पदार्थमात्रावगतिः प्राप्नोति, न परस्परान्वयः—इति प्रागुक्तं यत्तदनेनोक्तम् । ननु गुणो द्रव्यान्वयित्वा-दात्मनो द्रव्यान्वयितां प्रतिपादयिष्यतीत्यत्राह—अर्थनिमित्तं त्वार्थम्, न शाब्दम् । यदिदं द्रव्यान्वयित्वं तदर्थनिमित्तं भवत्यार्थम्[१], न शाब्दम् । शाब्दं[२] तु यद्विशेषान्वयित्वं न तदार्थं भवितुमर्हति, अर्थस्य विशेषान्वयेऽ-सामर्थ्यात् ; यच्च शाब्दं विशेषान्वयित्वम्, तदिह विचार्यते । तत्र शब्दे, यावत्प्रयोगभाविन्येव निमित्तता—यावत्येव पदार्थमात्रे प्रयोगोऽस्य पदस्य—स्वार्थे निमित्ततोक्ता । न च प्रयोगव्युत्पत्तौ प्रयोगे व्युत्पद्यन्ते यत्र तत्र

१. भवत्वार्थम्. क.

२. Omitted. शाब्दं......अभिधीयते. ग. (p. 384. 5.)

भाष्यम्

निवृत्तिर्भवति शब्दार्थः। न च अनर्थको मा भूदित्यर्थान्तरकल्पना शक्या। अतो न पदार्थजनितो वाक्यार्थः। तस्मात् कृत्रिमः। पदसंघाताः खल्वप्येते; संघाताश्च पुरुषकृता दृश्यन्ते यथा—

"नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः।
रामकौशेयसंवीताः प्रनृत्यन्तीव कादम्बाः॥"

अतो वैदिका अपि पुरुषकृता इति॥

बृहती

निमित्तता उक्ता। न च प्रयोगव्युत्पत्तौ पदार्थान्तरव्यावृत्त्या पदस्य स्वार्थनिमित्तता दृष्टा, येन पदान्तरप्रयोगात् सर्वगवीषु प्रत्ययो व्यावृत्तः शब्दात्—इति शक्यते वक्तुम्। नन्वेवं सत्यानर्थक्यं भविष्यति। भवतु; न हीदमानर्थक्यमर्थान्तरपरतया कल्पयितुं क्षमम्; आनर्थक्यमेव हि तन्न स्यात्। तस्मात् कृत्रिमः सम्बन्धः। प्रत्यस्तमितमनपेक्षत्वम्। समर्थितश्चायं हेतुः—वाक्यात्मकत्वात् कृतको वेद इति॥

पञ्चिका

वृद्धव्यवहारे पदार्थान्तरव्यावृत्त्या पदस्य स्वार्थे निमित्तता दृष्टा, येन पदार्थान्तरप्रयोगात् सर्वगवीषु प्रत्ययो व्यावृत्तः शब्दादिति शक्यते वक्तुम्। नन्वेवं सत्यानर्थक्यं भवति। पदान्तरप्रयोगस्य। परिहरति—भवत्वानर्थक्यम्, यस्यार्थो नावसीयते। न हीदमानर्थक्यमेव यो यस्यार्थो न भवति तमेवार्थतया कल्पयितुं क्षमम्। आनर्थक्यमेव हि तन्न स्यात्। यद्यर्थान्तरमादधाति, महीयस्तदर्थवत्त्वम्। तस्मात्सम्बन्धः कृत्रिम इति सिद्धम्। प्रत्यस्तमितमनपेक्षत्वम्। कृत्रिमत्वाद्वेदानाम्। समर्थितश्चायं हेतुः वाक्यात्मकत्वात् भारतादिवत्, कृतको वेद इति। अत एवोक्तम्—"पदसंघाताः खल्वप्येते" इति॥

## तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥

भाष्यम्

तेष्वेव पदार्थेषु भूतानां वर्तमानानां पदानां क्रियार्थेन

बृहती

"तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ।" अत्रोच्यते —स्यादनुपायत्वं वृद्धव्यवहारस्य, यदि पदार्थान्यत्वं स्यात् ; आवापोद्धारतैव केवलमन्या । कथम् ? वैदिकलौकिकयोः पदार्थयोरन्यत्वानवगतेः । किमिदं प्रत्युक्तं पुनरुच्यते ? परस्परान्वयो हि पदार्थानां वाक्यार्थ इत्युक्तम् । न पदार्थाः ; तस्मान्न पदार्थप्रत्यभिज्ञानमन्वयहेतुः ।

पञ्चिका

"तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्" इति सूत्रं पठित्वा व्याचष्टे—अत्रोच्यते । स्यादनुपायत्वं वेदार्थे वृद्धव्यवहारस्य, यद्यर्थान्यत्वं लोके वेदे च स्यात् ; आवापोद्धारतैव केवलमन्या । कानिचित् पदान्योप्यन्ते कानिचिच्चोद्ध्रियन्त इत्येतावदेव केवलमन्यत् । कथं पुनरर्थैक्यं लोके वेदे च ? उत्तरम्—लौकिकवैदिकयोः पदार्थयोरन्यत्वानवगतेः । यान्येव लोके पदानि तान्येव वेदेऽपि ; ये च लोके पदार्थास्त एव वेदेऽपि ; अतः कथमर्थान्यत्वम् ? अत्र चोदयति—किमिदं प्रत्युक्तं पुनरुच्यते ? कथं प्रत्युक्तं पुनरुच्यते ? कथं प्रत्युक्तमित्यत्राह— परस्परान्वयो हि पदार्थानां वाक्यार्थ इत्युक्तम् । न पदार्थमात्रं वाक्यार्थः । किं तर्हि ? अन्वयः । तस्मात्पदपदार्थप्रत्यभिज्ञानं नान्वये हेतुः । कामं पदैः पदार्थमात्रमवबोध्यताम् ; अन्वयस्य किमायातम् ? ननु चान्वयो लाक्षणिको भवतु ; पदं हि पदार्थमात्रे व्युत्पन्नं पदार्थमात्रं बोधयिष्यति ; स च पदार्थोऽन्वयमात्मनो लक्षयति ; तेनान्वयः शाब्दो भविष्यति । तत्राह—

भाष्यम्

## समाम्नायः समुच्चारणम् । न अनपेक्ष्य पादार्थान् पार्थगर्थ्येन

बृहती

प्रमाणान्तरं च नास्त्यस्मिन् प्रयुक्तमित्युक्तम् । ततः प्रयोगशून्योऽन्वयो निर्बीजः । पदपदार्थानभिज्ञो मातृप्रियो भवान् । कथमनभिज्ञः ? पादार्थास्तावन्नाव्यतिषक्ताः क्वचिदुपलभ्यन्ते, अन्ततोऽस्त्यर्थेन । ततः किम् ? इदं ततः । तत्प्रतिपत्तये हि शब्दार्थव्यवहारः ।

पञ्चिका

प्रमाणान्तरं च नास्त्यस्मिन् प्रयुक्तमित्युक्तम् । लक्षणा हि ज्ञाते तात्पर्ये भवति ; न च 'अन्वये प्रयुक्तमेतत्पदम्' इत्यत्रांशे प्रमाणमस्ति । नन्वानर्थक्यमेवानन्वये, तेनान्वयपरतेति । तदयुक्तम् ; वेदेनार्थवता भवितव्यमिति प्रमाणाभावात् । अपि च अन्वये लक्ष्यमाणेऽपि कोऽन्वयः केन पदार्थेन लक्ष्यतामित्यत्रापि नास्ति प्रमाणम् । अतः प्रमाणशून्यो वैदिकोऽन्वयो निर्बीजः । अत्राह राद्धान्ती—पदपदार्थानभिज्ञो मातृप्रियो भवान् । यो मातृस्नेहानुबन्धेन गुरुकुले न चिरमुषितः । कथमनभिज्ञः ? उत्तरमाह—पदार्थास्तावन्नाव्यतिषक्ताः क्वचिदुपलभ्यन्ते, अन्ततोऽस्त्यर्थेन । व्यतिषङ्गोऽन्योन्यसम्बन्धः, तद्वन्तोऽन्योन्यसम्बद्धाः सर्वावस्थासु पदार्था उपलभ्यन्ते । यत्राप्यर्थान्तरं नास्ति, तत्राप्यन्ततोऽस्त्यर्थेन व्यतिषक्ताः । यदि वस्तुस्वभावतः पदार्थान्तरव्यतिषक्ताः, ततः किम् ? न हि तावता शब्देन व्यतिषक्ता एवाभिधातव्या इति भावः । उत्तरम्—इदं ततः । व्यतिषिक्ता एवाभिधेया इति । कुतः ? तत्प्रतिपत्तये हि शब्दार्थव्यवहारः । यतः तथावस्थितमेव वस्तु शब्देन वाच्यम्, न पुनरन्यथाभूतम् ; अतोऽन्विता एवाभिधेयाः, स्वभावतोऽन्वितत्वात् । ननु च न वस्तुस्वभावोऽन्विताभिधानम्[1], किं तर्हि ? व्यवहारे आवापोद्धाराभ्याम् । तौ च स्वरूपमात्र एव संभवतः, न पुनर्व्यतिषक्ते ; व्यतिषक्तान्तरव्यभिचारेण तद्व्यतिषङ्गव्यभिचारात् । अपि च व्यतिषक्ताभिधानेऽ-

---

१. स्वभावोऽनेनाभिधानम्. क.

बृहती

**व्यवहारे च यथाव्यतिषङ्गमेवावापोद्धारौ । तस्मात् व्यतिषक्तार्थाभिधानम्,**

पञ्चिका

ङ्गीक्रियमाणे शक्तिकल्पनागौरवम् । किञ्च किं सामान्येन व्यतिषक्तमभिधीयते विशेषेण वा ? आद्ये कल्पे वृथाभिधानमिदम्; अर्थसामर्थ्येनापि तत्सिद्धेः । द्वितीये तु विशेषाणामानन्त्येन सम्बन्धग्रहणाशक्तिः । अगृहीतसम्बन्धस्य वाचकत्वे प्रथमश्रवणेऽपि यत्किञ्चिदर्थप्रतीतिप्रसङ्गः । किञ्च किमभिहितेन विशेषेण तद्व्यतिषक्तमभिधीयते, अनभिहितेन वा ? अभिहितपक्षे इतरेतराश्रयम् । द्वितीयमपि पदमभिहितार्थान्तरव्यतिषक्ताभिधायकतया इतरपदाभिधानमाश्रयतीति प्रसक्तं दुरुत्तरमितरेतराश्रयम् । अनभिहितपक्षे पदान्तरप्रयोगवैयर्थ्यम् । अत एव केचिदभिहितानां पदार्थानामेवान्योन्यान्वयबोधकतामभ्युपगच्छन्ति । ते हि मन्यन्ते—आवापोद्धाराभ्यां वृद्धव्यवहारे पदानि स्वरूपमात्रेणार्थानभिदधते; तेऽर्थाः परस्परमपेक्षासन्निधियोग्यताभिरुपसंस्कृता अदृष्टमेवान्योन्यान्वयमवगमयन्ति । न च तत्र सम्बन्धग्रहणाशक्तिपर्यनुयोगः, गृहीतसम्बन्धपदप्रतिपादितानामगृहीतसम्बन्धानामेव पदार्थानामन्वयात्रबोधकत्वदर्शनात् अभिनवकविरचितेषु । वैदिकेषु च वाक्येषु प्रतीतिं प्रति विवादाभावादिति । तत्राह—**व्यवहारे च यथाव्यतिषङ्गमेवावापोद्धारौ ।** अस्यार्थः––वृद्धव्यवहारे च यथाव्यतिषङ्गं व्यतिषङ्गमनतिक्रम्य आवापोद्धारौ । तथा हि—'गामानय' इत्यानयत्यन्वितस्यैव गोरावापः 'महिषमानय' इति च तदन्वितस्यैवोद्धारः; तेनान्वित एव शब्दस्य सामर्थ्यमवसीयते । तच्च द्विधा संभवति—साक्षाद्वाभिधानेन, पदार्थप्रतिपत्त्यवान्तरव्यवधानेन वेति संप्रधारणीयम् । न तत्र साक्षात्संभवे प्रणाडीसमाश्रयणमुचितमित्यन्विताभिधानमेव निर्णीयते । न च सम्बन्धग्रहणाशक्तिः, उपाधिविशेषाश्रयणेन सुकरत्वात्; आकाङ्क्षासन्निधानोपस्थापितान्वययोग्यार्थान्तरान्वितस्वार्थाभिधायीनि पदानीति व्युत्पत्तिपरिग्रहे न किञ्चिदनुपपन्नम् । योऽपि चाभिहितान्वयवादी, सोऽपि पदार्थेषु न विधिमिममतिवर्तते । न च शक्तिकल्पनागौरवम्, पदार्थेष्वप्यपरिहार्यत्वाच्छक्तिकल्पनायाः । ननु च दृष्टेयं

## पञ्चिका

पदार्थानां शक्तिः । तथा हि—अव्यक्तगुणिविशेषं श्वेतिमानं चक्षुषा परिच्छिन्दन् हेषया चाश्वत्वमनुमिमानः पदनिक्षेपशब्देन च गन्तारं परिकल्पयन् 'श्वेतोऽश्वो गच्छति' इति प्रतिपद्यते । तत्र 'श्वेतिमा' 'अश्वः' 'गन्ता' इति पदार्थत्रयमन्योन्यान्वयमवगमयतीति । तदनुपपन्नम् ; अनुमानतो हि हेषयाश्वत्वमनुमीयमानं हेषमाणपुरोवर्तिद्रव्यगतमेवानुमीयते, न स्वतन्त्रम् । यत्रैव हि लिङ्गं तत्रैव लिङ्गिनमनुमापयति । यस्य पुनरपादानदेशविभ्रमो हेषायाः, असावश्वत्वं प्रतिपद्यमानोऽपि न विशेषमवधारयति । योऽपि पारिशेष्याद्विशेषमवगच्छति, सोऽप्यर्थापत्तेर्विशेषमवगच्छतीति न पदार्थमात्रस्य क्वचिदन्वयबोधकत्वम् । अपि च यदि श्वेतिमादयः प्रमाणान्तरपरिच्छिन्नाः परस्परान्वयबोधिनः, तदा प्रमाणान्तरापातः[1], तस्याशाब्दत्वात् ; शब्दप्रतिपादितपदार्थपूर्वकं वाक्यार्थज्ञानं शाब्दम्, नाशाब्दपूर्वकमपीति । अपि च प्रथमोपनिपातिनि शब्द एव शक्तिः कल्प्यताम्, किमिति तं परित्यज्य पदार्थे यावत् गम्यते? किञ्च पदस्याभिधानशक्तिस्तावदविवादैव ; तत्रैवातिरेकः कल्पयितुं युक्तः ; न पुनः पदार्थेषु शक्तिकल्पना, धर्मिकल्पनातो धर्मकल्पनाया लाघवात् । यच्चेदं[2]मिह इतरेतराश्रयत्वं चोदितम्, तदप्येवं निरसनीयम् । न पदमात्रात् केवलादेवार्थावगमः ; किन्तु यावन्ति पदानि वाक्ये, तावन्ति श्रुत्वा न्यायानुसारेण वचनव्यक्तिविशेषमवसायार्थोऽवगम्यते । तत्र पदेषु प्रथमश्रुतेषु पदार्था अन्विता एव[3] स्मर्यन्ते यथा पदार्थदर्शने पदम् । अन्वितेऽपि ह्यभिधीयमाने स्वरूपं नापैत्येव ; तेन शक्नोति तया प्रत्यासत्त्या तत्स्वरूपमात्रं पदं स्मारयितुम् । तत्र स्मृतिसन्निहितपदार्थान्वितस्वार्थं पदमभिधत्त इति नेतरेतराश्रय[4]त्वम् । स्मरणे हि निरपेक्षत्वात् पदार्था अपि स्मृता एवान्योन्यान्वयमवगमयन्ति । तदाहुः—

> "तेऽपि नैवास्मृता यस्माद्वाक्यार्थं गमयन्ति नः ।
> तस्मात्तत्स्मरणेष्वेव संहतेषु प्रमाणता ॥" इति ।

तदिदं सर्वमुक्तमास्माभिर्वाक्यार्थमातृकायामेव । यतो यथाव्यतिषङ्गमेवावापोद्धारौ, तस्माद्व्यतिषक्ताभिधानमेवेदं पदम् । नन्वेवं व्यतिषङ्गमपि

---

१. आपत्तेः. ग. ३. एव ते यथा. ग.
२. यच्चेदमिव च. ग. ४. आश्रयम्. ग.

बृहती

**व्यतिषक्तेनावगतेर्व्यतिषङ्गस्य । किमेवं भविष्यति ? नानन्विताभिधायी शब्द उक्तो भविष्यति । ततश्च कार्याभिधायिता लोके नियोगस्यावगता ।**

पञ्चिका

किमिति नाभिधत्ते तत्राह—**न व्यतिषङ्गाभिधानम्, व्यतिषक्ततोऽवगतेर्व्यतिषङ्गस्य** । व्यतिषक्तो हि व्यतिषङ्गमप्रतिपद्यमानेन न शक्यते प्रतिपत्तुम्[1] यथा व्यक्तिमाकृतिरिति व्यतिषक्ततो व्यतिषङ्गावगतेर्न व्यतिषङ्गाभिधानं पदम् । ननु यदि व्यतिषक्ताभिधानं पदम्, **किमेवं भविष्यति ? नानन्विताभिधायी शब्द उक्तो भवति** । न भवत्वनन्विताभिधायी, तथापि किमित्याह—**ततश्च कार्याभिधायिता लोके नियोगस्यावगता** । अस्यार्थः—आचार्यादिवाक्येषु 'देवदत्त समिधमाहर' इत्यादिषु प्रवर्तमाने देवदत्ते पार्श्वस्थ एवमवधारयति—बुद्धिपूर्विकेयमस्य प्रवृत्तिः ; यच्चाहं बुद्ध्वा प्रवृत्तः तदयमपि, मदविशेषात् ; अहं च न क्रियामात्रावगमात् प्रवृत्तः, नापि फलमात्रावगमात्, नापि फलसाधनत्वावगमात्, किन्तु कार्यावगमात् ; स्तनपानादिकापि क्रिया यावन्मया कार्यतया नावगता, तावदहं न प्रवृत्तः ; न च या श्रेयःसाधनता, सैव कार्यता ; श्रेयः प्रति साधनत्वमन्यत्, अन्यच्च कृतिं पुरुषप्रयत्नं प्रति प्राधान्यं साध्यत्वलक्षणं कार्यत्वम् ; क्लेशात्मनस्तु कर्मणः फलसाधनत्वानुविधायिनी कार्यतेति मन्दा न[2] भेदं प्रतिपन्नवन्तः ; तथा सुखस्य फलसाधनतां विना कार्यतावगतिरस्ति ; अतः फलसाधनतातिरिक्तकार्यबोधात्प्रवृत्तिर्ममेति देवदत्तोऽपि तदवगमादेव प्रवर्तते—इति कल्पयति । तदवगमश्चास्य शब्दानन्तरं भवञ्छब्दनिबन्धन एवेति कार्याभिधायितां लिङ्शब्दस्य कल्पयति । तच्च कार्यमन्वितमभिधेयमिति स्थिते "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिषु वाक्येषु षष्ठाद्यराद्धान्तानुसारेण स्वर्गकामपदेन नियोज्यतया स्वर्गकामः समर्पणीय इति स्थितम्[3] । यश्च कार्यमवबुध्यते, स नियोज्यः ; स्वर्गकामस्य च तस्मिन्नेव कार्ये बोद्धृतयान्वयः, यदेव तस्य

१. प्रतिवक्तुम्. क, ग. ३. स्थिते यत्र. ग.
२. मन्दा अभेदम्. क.

बृहती

**"आचार्यचोदितः करोमि"—इति हि दर्शितम् । ननु च प्रेषणादयोऽप्यवगम्यन्ते लोके । उपाधयो हि ते, न शब्दार्थाः । केन पुनरमी उपाधयो नाम ? उपाधयो हि तटस्थाः प्रयोगदर्शनमात्राच्छब्दार्थं विशेषेऽवस्थाप-**

पञ्चिका

काम्यमानसाधनतामनुभवितुं क्षमते । न च क्रिया क्षणभङ्गिनी कालान्तरभाविनि फले हेतुर्भवति ; तेन सा कार्यतया नियोज्येन सह नान्वीयते ; यत्तु कालान्तरस्थायि कार्यम्, तदेव तेन सहान्वयं गन्तुमर्हतीति क्रियातिरेकि मानान्तरावेद्यमेव लिङादयः कार्यमभिदधति । तच्च मानान्तरापूर्वत्वादपूर्वमित्युच्यते । ननु तस्यापि कार्यस्य कुतः सिद्धिः ? यागादेरिति चेत्, अनन्तरभाविता तर्हि फलस्य प्रसक्ता, क्रियानन्तरभाविनस्तस्य फलहेतुत्वात् । उच्यते—अनन्तरभावित्वेऽपि तस्य न फलमनन्तरं भविष्यति, सहकार्य्यपेक्षया विलम्बनोपपत्तेः । न च सहकार्य्यपेक्षायां कारणभावहानिः । किं तत्सहकारीति चेत्, देशकालादिकमिति ब्रूमः । न च तस्य विशेषज्ञानमन्तरेण किञ्चित् दुष्यति । न च फलजनकतया गुणभावादपूर्वस्य वाक्यार्थत्वहानिः, स्वानुगुणनियोज्यलाभाय फलानुकूलतावलम्बनात् ; यथा आत्मन एव संविदधानः स्वामी गर्भदासस्योपकरोति, तद्वदेतदपि । ततश्चान्विताभिधाने स्थिते कार्याभिधायिता लोके नियोगस्य लिङादेरवगतेति । **अतो नियोगाभिधानम्** इति वक्ष्यमाणेन सम्बन्धः । नियोगशब्देन क्रियाव्यतिरिक्तमपूर्वं कार्यतया आत्मनि पुरुषं नियुञ्जानमुच्यते । न चैवं वेदत एव व्युत्पत्तिः, लोकव्युत्पत्तेरेव वेदवाक्यानुसारेणापूर्वपर्यन्ततावगमात् । ननु न लोके कार्याभिधायिता लिङादेरस्तीत्यत्राह—**"आचार्यचोदितः करोमि" इति हि दर्शितम्** । चोदितः प्रवर्तितः कार्यमवबोधित इत्युच्यते ; नान्यथा चेतनः प्रवर्तयितुं शक्यते यतः । **ननु च प्रेषणादयोऽप्यवगम्यन्ते लोके** । तत्कथं कार्याभिधायित्वमेव लिङादेरित्यर्थः । परिहरति—**उपाधयो हि ते, न शब्दार्थाः** । एतदेव विवरीतुं पृच्छति—**केन[1] पुनरमी उपाधयो नाम ?** उत्तरम्—**उपाधयो हि तटस्थाः**

---

१. के पुनरमी. ग.

बृहती

यन्ति यथा दृतिहर्यभिधेयस्य पशुत्वम् । एवमसौ नियोगः समहीनज्या-योभिः प्रयुज्यमानः प्रेषणादिव्यपदेशं लभते । प्रवर्तकत्वं तु शब्दार्थः, सर्वत्रापरित्यागात् । अतो नियोगाभिधानमिदम् । नियोगाभिधाने च सति तत्साधनव्यतिषङ्गोऽवगम्यते । साधनाभिधाने च साध्यव्यतिषङ्गः । अत इदमुक्तम्—तद्भूतानां आत्मीयेष्वर्थेषु व्यस्थितानां व्यतिषङ्गावगतेर्निमित्तत्व-मुपपद्यत इति । ननु च प्रयोगे सत्येतद्युक्तं वक्तुम् । केन वोक्तमप्रयोगे सतीति ? एवंभूतेषु हि दृष्टो लौकिकः प्रयोगः ; वैदिका अपि त एव । अतस्तथाभूतेष्वेवायं प्रयोगः । एवं तर्हि निमित्ततो नैमित्तिकावगतिः ।

पञ्चिका

प्रयोगदर्शनमात्राच्छब्दार्थं विशेषेऽवस्थापयन्ति । यथा दृतिहर्यभिधेयस्य पशुत्वम् । अस्यार्थः—उपाधयस्ते भण्यन्ते[1], ये तटस्था अभिधानाननुप्रवेशिनः सन्तः शब्दार्थान् विशेषेऽवस्थापयन्ति ; यथा दृतिहरिशब्देन योऽभिधीयते तस्य दृतिहरिशब्दाभिधाने पशुत्वमुपाधिः । हरणक्रिया यदा पशुसम्बन्धिनी तदा तस्याः कर्ता दृतिहरिरित्युच्यते । एवमसौ लिङादिः समहीनज्यायोभिः प्रायोक्तृभिः प्रयुज्यमानः प्रेषणादिव्यपदेशं लभते ; लिङाद्यर्थश्च समहीनज्यायोभिः प्रयुज्य-मानः प्रैषादिरित्युच्यते । प्रवर्तकत्वं तु कार्यत्वं शब्दार्थः ; सर्वत्र समहीनज्यायः-प्रयोगे, अपरित्यागादव्यभिचारात्, स्यात् ; अव्यभिचारी च शब्दार्थः । अतो नियोगाभिधानमिति । इदं पूर्वमेव व्याख्यातम् । नियोगाभिधाने च सति तत्साधनव्यतिषङ्गोऽवगम्यते । नियोगे चापूर्वे साधनान्वितेऽभिधीयमानेऽर्थात् साधनव्यतिषङ्गोऽवगम्यते । साधनाभिधाने च यागादौ साधने साध्यान्वितेऽ-भिधीयमानेऽर्थात् साध्यव्यतिषङ्गोऽवगम्यते । यत एवं व्यतिषङ्गोऽर्थादवगम्यते, अत इदमुक्तम्—तद्भूतानामात्मीयेष्वर्थेषु स्थितानां व्यतिषक्ताभिधायिनां व्यतिषङ्गावगमनिमित्तत्वमुपपद्यत इति । ननु च प्रयोगे सत्येतद्युक्तं वक्तुम् । अस्यार्थः—यद्यपूर्वान्वितेषु प्रयोगो दृष्टः स्यात्, तदैतद्युक्तं वक्तुम् ; न तु सोऽस्ति । परिहरति—केन वोक्तमप्रयोगे[2] सतीति ? एवंभूतेषु[3] हि लौकिकः प्रयोगो दृष्टः ; वैदिका अपि त एव ; अतस्तथाभूतेष्वेवायं प्रयोगः ।

---

१. कथ्यन्ते एव आभि—ग. २. चोक्तं प्रयोगे. ग. ३. किं भूतेषु हि. ग.

भाष्यम्

**वाक्यमर्थान्तरप्रसिद्धम् । कुतः ? प्रमाणाभावात् ; न किंचन प्रमाणमस्ति, येन प्रमिमीमहे ; न ह्यनपेक्षितपदार्थस्य**

बृहती

**मन्द ! मैवम्, कथनोपायोऽयम् ; न ह्यन्वितोऽन्वयशून्यः शक्यते प्रतिपत्तुम् । त एतेऽन्विताः पदार्थाः ; एषामभिधानानि पदानि ; तदिदं वाक्यपदीयम् । अन्यथा ह्यवगम्यमानः पदपदार्थविवेकोऽपह्नुतो भवति, अविद्यमानः प्रतिपन्नः । तस्मान्न कार्यतस्तावद्वाक्यवाक्यार्थयोः पदपदार्थाभ्यामन्यत्वं कल्पयितुं क्षमा प्रज्ञा । प्रत्यक्षतस्तु भेदावगमान्नास्त्येकत्वमित्युक्तम् ।**

पञ्चिका

लोके हि कार्यान्विताभिधायितया पदानि व्युत्पन्नानि ; तेन वेदेऽपि कार्यान्विता एव पदैः पदार्था वक्तव्याः; लिङादिभिरपि पदार्थान्वितमेव कार्यं वक्तव्यमिति निश्चिते पदान्वययोग्यतया क्रियाव्यतिरिक्तकार्यावगतिरिति न किञ्चिदनुपपन्नम् । तस्मादपूर्वमेवान्वितमभिधीयते[1] लिङादिभिः । यदि व्यतिषक्ततो व्यतिषङ्गावगतिः, एवं तर्हि निमित्ततो व्यतिषक्ततो नैमित्तिकस्य व्यतिषङ्गस्यावगतिः । न च व्यतिषङ्गमप्रतियन्[2] व्यतिषक्तमवैति ; तत्कथं ततो व्यतिषङ्गावगतिरिति । उत्तरम्—**मन्द ! मैवम्, कथनोपायोऽयम् ।** कथनप्रकारोऽयम् । एवं कथयितव्यम्—व्यतिषक्त एवान्यथा प्रत्येतुं न शक्यते व्यतिषङ्गमप्रतीत्येति । तेन व्यतिषक्तस्याभिधाने व्यतिषङ्गोऽप्यवगम्यत इति दर्शयितुं व्यतिषक्तस्य निमित्तत्वमुच्यते । कस्मात् पुनरेवमुच्यते ? यावता व्यतिषक्तप्रतीत्युत्तरकालतैव किमिति नाङ्गीक्रियत इत्यत्राह—**न ह्यन्वितोऽन्वयशून्यः शक्यते प्रत्येतुम् ।** एवं स्वमतं स्थापयित्वा वैयाकरणमतं निराकुर्वन्नाह—**त एतेऽन्विताः पदार्थाः ; एषामभिधानानि पदानि ; तदिदं वाक्यपदीयम् ।** सूत्रम्—अन्विताभिधायीनि पदानि, न पुनरर्थावच्छेदशून्यानि ; पदान्येव च वाक्यम्, न

---

१. अपूर्वान्वितमेवान्वितम्. ग. २. अप्रतिपद्य. ग.

बृहती

**अतः क्रियार्थेन समाम्नायः। ननु च नावश्यं क्रियार्थेनैवाम्नानं लोके। अस्ति तावत् क्रियार्थता वेदे ; तद्विषयमिदमधिकरणं भविष्यति। किं न लौकिकविषयमिदमधिकरणम्? किं वा मन्यते भवान्? न्यायाभिधानसाम्यात् सर्वत्रेति मन्यामहे। भवतु सर्वत्र। ननु च क्रियार्थेन—इत्यव्यापकम्।**

पञ्चिका

पदातिरेकीति। वाक्यपदे अधिकृत्य कृतं वाक्यपदीयम् "शिशुक्रन्दयमसभद्वन्द्व" इति छः। अन्यथा यद्येवंविधाः पदार्थाः पदानि च नाश्रीयेरन्, तदा अवगम्यमानः पदपदार्थविभागोऽपह्नुतो भवति, अविद्यमानश्च प्रतिपन्नः स्यात्। उपसंहरति—तस्मान्न कार्यतो वाक्यार्थप्रतिपत्तिलक्षणात् वाक्यवाक्यार्थयोः पदपदार्थाभ्यामन्यत्वं कल्पयितुं क्षमा प्रज्ञा ; पदान्येवान्विताभिधायीनि ; वाक्यम् पदार्था एवान्विता अभिधीयमाना वाक्यार्थः। अथ कस्मादेकं वाक्यमेकश्च वाक्यार्थः? उच्यते—एकस्यार्थस्य प्रधानत्वात् स एवार्थान्तरान्वितः प्रतिपाद्यत इत्येको वाक्यार्थः ; तदैक[1]प्रतिपत्तिकारकत्वाच्चैकं वाक्यम्। ननु मा नाम कार्यत एकवाक्यत्वं भवतु, प्रत्यक्षतस्तु किमिति न भवतीत्यत्राह—प्रत्यक्षतस्तु वर्णपदभेदावगमान्नैवास्त्येकत्वमित्युक्तं स्फोटनिराकरणपर्वणि। यतो वाक्यार्थावगतिः प्रामाणिकी, **अतः क्रियार्थेन समाम्नायः**। वेदानाम्। क्रियार्थेनेत्यत्र भावार्थाधिकरणवत् क्रियाशब्देन नियोग एवोक्त इति मत्वा चोदयति—**ननु च नावश्यं क्रियार्थेनैवाम्नानं लोके**। यानि[2] तावत् वेदमूलानि वचांसि, भवतु तत्र क्रियार्थेनाम्नानम् ; यानि पुनः प्रमाणान्तरावगतार्थविषयाणि तानि न नियोगं बोधयन्ति, तस्य प्रमाणान्तरानधिगमनीयत्वात्। एकदेशी परिहरति—**अस्ति तावत्क्रियार्थता वेदे; तद्विषयमिदमधिकरणं भविष्यति**। चोदक आह—**किं न लौकिकविषयमिदमधिकरणम्?** येनैवं व्याख्यायते। एकदेश्येवाह—**किं वा मन्यते भवान्?** येनास्मानुपालभते। चोदक आह—**न्यायाभिधानसाम्यात् सर्वत्रेति मन्यामहे**। यो न्यायोऽभिहितोऽन्विताभिधानलक्षणः, स लोके वेदे च सम इति हेतोः सर्वत्रेदमधिकरणमिति। परमराद्धान्ती ब्रूते—**भवतु सर्वत्र**। चोदक आह—**ननु च क्रियार्थेनेत्य-**

---

१. तदेक-ग. २. Omitted. यानि...मूलानि. ग.

भाष्यम्

वाक्यान्त्यवर्णस्य पूर्ववर्णजनितसंस्कारसहितस्य शक्तिरस्ति पदार्थेभ्योऽर्थान्तरे वर्तितुम् । ननु अर्थापत्तिरस्ति, यत् पदार्थव्यतिरिक्तमर्थमवगच्छामः ; न च शक्तिमन्तरेण तदवकल्पत इति । तन्न , अर्थस्य तन्निमित्तत्वात् । भवेदर्थापत्तिः, यद्यसत्यामपि शक्तौ नान्यन्निमित्तमवगम्येत ; अवगम्यते तु निमित्तम् । किम् ? पदार्थाः ; पदानि हि स्वं स्वमर्थमभिधाय

बृहती

व्यवहारक्रियैवेयं क्रियेति मत्वा शाम्यतु भवान् । अतः सिद्धम् "अर्थस्य तन्निमित्तत्वात्" इति वैदिकानां सनिमित्तत्वम् । "तेष्वेव पदार्थेषु" इति अन्वितेष्वित्यर्थः । कुतः ? नानपेक्ष्य पदार्थान् पार्थगर्थ्येन वाक्यार्थः प्रतीयते । न चेत् प्रतीयते, कस्य वाक्यं प्रमाणतया कल्पयिष्यते ? ननु चान्वयो न पदार्थः ; स च वाक्यार्थो भविष्यति । अतश्चार्थाद्वाक्यमपि

पञ्चिका

व्यापकमिति । राद्धान्त्याह---व्यवहारक्रियैवेयं क्रियेति मत्वा शाम्यतु भवान् । नात्र क्रियाशब्देन नियोगोऽभिहितः ; किं तु व्यवहाररूपाभिप्रेता । सा च लोके सर्वत्रास्तीति व्यापकम् । उपसंहरति—अतः सिद्धम्—"अर्थस्य तन्निमित्तत्वात्" इति वैदिकानामर्थानां सनिमित्तत्वम् । यदि ह्यर्थस्यान्वयरूपस्य पदार्था न निमित्तं भवेयुः, तदा वाक्यं नाम कार्यगम्यमेकं कल्प्येत ; तस्मिंश्च निर्भागे क्लृप्ते निर्निमित्ता वाक्यार्थावगतिः स्यात् ; यदा त्वन्विता एवान्वयस्य निमित्तम् , तदा सविभागं वाक्यं भवति; ततश्च व्युत्पत्तिसंभवात् सनिमित्ता वेदवाक्यार्थावगतिः । "तेष्वेव पदार्थेषु" इत्येतत् भाष्यं व्याचष्टे—"तेष्वेव पदार्थेषु" अन्वितेष्वित्यर्थः । अत्र भाष्यकारेणोक्तम्—"तेष्वेव पदार्थेषु वर्तमानानि पदानि वाक्यार्थमवगमयन्ति" इति ; तत्र पृच्छति—कुत इति । उत्तरम्—नानपेक्ष्य पदार्थान् पार्थगर्थ्येन वाक्यार्थः प्रतीयते । अन्विता एव पदार्था वाक्यार्थो यतः । न चेत्प्रतीयते कस्य वाक्यं प्रमाणतया कल्पयिष्यते ? ननु

भाष्यम्

निवृत्तव्यापाराणि ; अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थं गमयन्ति । कथम्? यत्र हि 'शुक्लः' इति वा 'कृष्णः' इति वा गुणः प्रतीतो भवति, भवति खल्वसावलं गुणवति प्रत्ययमाधातुम् ; तेन गुणवति प्रत्यय-मिच्छन्तः केवलं गुणवचनमुच्चारयन्ति ; संपत्स्यत एषां यथासंकल्पितोऽभिप्रायः ; भविष्यति विशिष्टार्थसंप्रत्ययः; विशिष्टार्थसंप्रत्ययश्च वाक्यार्थः । एवमवगम्यते चेदन्यत एव वाक्यार्थः, कः 'जातुचित् अदृष्टा पदसमुदायस्य शक्तिरर्था-दवगम्यते' इति वदिष्यति ? अपि च अन्वयव्यतिरेकाभ्यामे-तदवगम्यते ; भवति हि कदाचिदियमवस्था मानसादपचा-रात् , यदुच्चरितेभ्योऽपि पदेभ्यो न पदार्था अवधार्यन्ते ;

बृहती

पदेभ्योऽन्यदिति गम्यते । "नन्वर्थापत्तिः" इत्यनेनेदमुक्तम् । "तन्न, अर्थस्य तन्निमित्तत्वात्" इत्यन्विताभिधानेन कथितोऽस्यार्थः—अर्था-पत्तिर्नास्तीति । "अपि चान्वयव्यतिरेकाभ्यामेतदवगम्यते ; भवति हि

पञ्चिका

चान्विते पदार्थेऽङ्गीकृतेऽन्वयो न पदार्थः; स वाक्यार्थो वाक्यस्य प्रमेयो भविष्यति । अतश्चार्थाद्वाक्यमपि पदेभ्योऽन्यदवगम्यत इति । इदं "नन्वर्थापत्तिः" इत्यनेन भाष्येणोक्तम् । परिहरति—तन्न "अर्थस्य तन्निमित्तत्वात्" पदार्थस्यान्वितस्यान्वय-निमित्तत्वादित्यभिधानेन वर्णितोऽस्य ग्रन्थस्यार्थः—अर्थापत्तिर्नास्तीत्येवंरूपः । अपि चान्वयव्यतिरेकाभ्यामेतदवगम्यते ; भवति हि कदाचिदियमवस्था

---

१. पदार्थस्य. ग.

भाष्यम्

न तदानीं नियोगतो वाक्यार्थमवगच्छन्ति ; न च नियोगतो वाक्यार्थं नावगच्छेयुः, यद्यस्य पार्थगर्थ्यमभविष्यत् ; नियोगतस्तु नावगच्छन्ति । अपि च अन्तरेणापि

बृहती

कदाचिदियमवस्था मानसादपचारादुच्चरितेभ्योऽपि पदेभ्यो न पदार्था अवधार्यन्ते ; न तदानीं नियोगतो वाक्यार्थमवगच्छन्ति । न च नियोगतो वाक्यार्थं नावगच्छेयुः, यद्यस्य पार्थगर्थ्यमभविष्यत् ; नियोगतस्तु नावगच्छन्ति'' इति । किमनेनानुक्तमुक्तम् ? न खलु किञ्चित् ; प्रतिज्ञातार्थस्यानन्यत्वमेव ; तत्सिद्धये हेतुरुपन्यस्तः । कथम् ? यद्यसंसृष्टपदार्थ एव वाक्यार्थोऽवगम्यते, व्युत्पत्तिमात्रं पदार्थावगतिः ; कस्मात् व्युत्पत्त्यवमर्शशून्यमपि कदाचिज्ज्ञानं न भवति निरूढव्यवहारस्य, यथा धूमान्महानसादिप्रदेशावमर्शशून्यमग्निज्ञानम् ? न च वाक्यार्थे निरूढव्यवहारस्याप्येवंरूपावगतिर्दृष्टा । अतो न निमित्ततया

पञ्चिका

मानसादपचारादुच्चरितेभ्योऽपि पदेभ्यो न पदार्था अवधार्यन्ते । न तदानीं नियोगतो वाक्यार्थमवगच्छन्ति ; न च नियोगतो वाक्यार्थं नावगच्छेयुः, यद्यस्य पार्थगर्थ्यमभविष्यत् ; नियोगतस्तु नावगच्छन्ति'' इति । भाष्यमनुभाषितम् ; आक्षिपति—किमनेनानुक्तमुक्तम् ? समर्थयते—न खलु किञ्चित् । अनुक्तमुक्तम् ; यस्मात् प्रतिज्ञातार्थस्य वाक्यार्थस्य पदार्थभेदलक्षणस्यानन्यत्वमेव । किन्तु तत्सिद्धये प्रतिज्ञातार्थसिद्धये हेतुरयमुपन्यस्तः । कथमुपन्यस्तः ? इत्थमुपन्यस्तः—यद्यसंसृष्टपदार्थ एव वाक्यार्थोऽवगम्यते, व्युत्पत्तिमात्रं पदार्थावगतिः ; कस्मात् व्युत्पत्त्यवमर्शशून्यमपि कदाचिज्ज्ञानं न भवति निरूढव्यवहारस्य, यथा धूमान्महानसादिप्रदेशाव-

---

१. Omitted. नियोगतः........अवगच्छन्ति. क, ग.

भाष्यम्

पदोच्चारणं यः शौक्ल्यमवगच्छति, अवगच्छत्येवासौ शुक्लगुणकं द्रव्यम्। तस्मात् पदार्थप्रत्यय एव वाक्यार्थः।

बृहती

पदार्था अवधार्यन्ते । किं तर्हि ? नैमित्तिकतयैव । किं पुनः कारणं निरूढव्यवहारस्य निमित्तानपेक्षा नैमित्तिकावगतिः ? प्रचितसंस्कारो हि नावश्यं निमित्तव्यापारमपेक्षते ; अन्ध इवाभ्यस्तपदवीको न तदीक्षणमपेक्षते। अत्र पुनः सर्वदा तदपेक्षणात् तदेव प्रमेयमित्युच्यते। एवं तर्हि "पदार्थेभ्यो वाक्यार्थप्रत्ययः" इति कथमयं व्यतिरेकः ? एवमयं व्यतिरेकः —अन्वितेभ्योऽन्वयप्रत्यय इति । "अपि च अन्तरेणापि पदोच्चारणं यः शौक्ल्यमवगच्छति, अवगच्छत्येवासौ शुक्लगुणकं द्रव्यम्" इति ।

पञ्चिका

मर्शशून्यमग्निज्ञानम् ? अस्यार्थः—ये पदार्थेभ्यो भिन्नं वाक्यार्थं मन्यन्ते तान् प्रतीदमुच्यते। यद्यसंसृष्टपदार्थकः असंसृष्टाः पदार्था यस्मिन् वाक्यार्थे प्रधानभूते नियोगे सोऽसंसृष्टपदार्थकः पदार्थान्वयरहितो वाक्यार्थोऽवगम्यते, व्युत्पत्तिमात्रं पदार्थावगतिः 'अस्य पदस्यायमर्थः' इति व्युत्पत्तिमात्रम्, तदा निरूढव्यवहारस्य कदाचित् व्युत्पत्त्यवमर्शशून्यमपि व्युत्पत्तिमपरामृश्यापि कस्मात् वाक्यार्थज्ञानं नोत्पद्यते, यथा धूमान्महानसादिप्रदेशात् व्युत्पन्नं सम्बन्धमपामृश्याप्यग्निज्ञानं भवति ? न च वाक्यार्थे निरूढव्यवहारस्याप्येवंरूपावगतिर्दृष्टा। अतो न निमित्ततया पदार्था अवगम्यन्ते। किं तर्हि ? नैमित्तिकतयैव । अत्र चोदयति—किं पुनः कारणं निरूढव्यवहारस्य सम्बन्धस्मरणरूपनिमित्तानपेक्षा नैमित्तिकावगतिः ? यावता सर्वत्र तदपेक्षयैवावगत्या भवितव्यमिति। परिहरति—प्रचित[1]संस्कारो हि नावश्यं निमित्तव्यापारमपेक्षते । तथा दर्शयति--अन्ध इवाभ्यस्तपदवीको न तदीक्षणमपेक्षते। अप्रचितसंस्कारस्य सम्बन्धस्मरणमेव केवलं कारणम् ; प्रचित-

१. प्रतीत. ग.

भाष्यम्

नास्य पदसमुदायेन सह सम्बन्धः । यत्तु श्रौतः पदार्थो

बृहती

किमन्वयव्यतिरेकभाष्यशेषमेवैतत् ? ओमित्युच्यते । तत्र च पदार्थस्य व्यतिरेकदर्शनम्, इह चान्वयस्य । सत्यमेवम् ; न त्वेतावन्मात्रमेव । किमतिरिच्यते ? इदमतिरिच्यते—यदि हि व्युत्पत्तौ पदानां पदार्थमात्र एव व्युत्पत्तिः, तदा अनन्वितपदार्थदर्शने तत्स्मरणानुपपत्तिः; स्मर्यते च । अतः सिद्धमन्विताभिधानम् । "नास्य पदसमुदायेन सह सम्बन्धः"

पञ्चिका

संस्कारस्य तु संस्कारप्रचयः सम्बन्धस्मरणं चेति द्वयं कारणम् ; एतच्चानुभवारूढमुच्यते । अत्र पुनर्वाक्यार्थे सर्वदा तदपेक्षणात् व्युत्पत्त्यवमर्शापेक्षणात्तदेव पदार्थजातं प्रमेयमित्युच्यते । यदि पदार्था एव वाक्यार्थः, एवं तर्हि "पदार्थेभ्यो वाक्यार्थप्रत्ययः" इति भाष्ये कथमिदं व्यतिरेकदर्शनम् ? समाधत्ते—एवमयं व्यतिरेकः—अन्वितेभ्योऽन्वयप्रत्यय इति । अन्वयं वाक्यार्थमभिप्रेत्य पदार्थेभ्यो वाक्यार्थोऽवगम्यत इति व्यतिरेक उक्तः । अपि चान्तरेणापि पदोच्चारणं यः शौक्ल्यमवगच्छति, अवगच्छत्येवासौ शुक्लगुणकं द्रव्यमिति । भाष्यमनुभाष्य पृच्छति—किमन्वयव्यतिरेकभाष्यशेषमेवैतत् ? राद्धान्तैकदेशी वदति—ओमित्युच्यते । स एवाह—तत्र हि भाष्ये पदार्थव्यतिरेकदर्शनं पदार्थस्य व्यतिरेके वाक्यार्थस्य व्यतिरेक इत्युक्तम् ; इह पदार्थान्वयस्य दर्शनम्—पदार्थे सति वाक्यार्थो भवतीति । राद्धान्ती ब्रूते—सत्यमेवम् ; न त्वेतावन्मात्रमेव । न पदार्थान्वयमात्रमेवात्र दर्शितम् । एकदेशी पृच्छति—किमतिरिच्यते ? राद्धान्ती कथयति—इदमतिरिच्यते—यदि हि[1] व्युत्पत्तौ पदानां पदार्थमात्र एव व्युत्पत्तिः, तदानन्वितपदार्थदर्शने तत्स्मरणानुपपत्तिः ; स्मर्यते च ; अतः सिद्धमन्विताभिधानम् । अस्यार्थः—यदि हि व्युत्पत्तौ व्युत्पत्ति-

१. Omitted. हि. ग.

भाष्यम्

न वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तितुमर्हतीति, सत्यमेवमेतत् ; यत्र केवलः पदार्थः प्रयुज्यमानः प्रयोजनाभावादनर्थकः संजायते—इत्यवगतं भवति, तत्र वाक्यार्थेऽपि तावद्भवत्विति विशिष्टार्थतावगम्यते ; न

बृहती

इति । न समुदायभूतानां प्रामाण्यम् । किं तर्हि ? अन्वयव्यतिरेकसमधिगम्यस्वार्थव्यापृतानामेव । "यत्तु श्रौतः पदार्थो न वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तितुमर्हति" इति । कथं पुनर्व्युत्पत्तिशून्यैवावगतिः शक्यतेऽभिधातुमित्यभिप्रायः । परिहारस्तु—सत्यमेवमेतदिति । व्यवहारार्थत्वात्

पञ्चिका

समये पदानामनन्वित एव पदार्थमात्रे व्युत्पत्तिः स्यात्, तदानन्वितस्य पदार्थस्य प्रत्यक्षादिभिर्दर्शने तस्यान्वितस्य पदार्थस्य पदानुविद्धं स्मरणं न स्यात् । स्मर्यते च । अन्वितोऽर्थः पदाभिधेयतया 'शुक्लो गुणो गुण्यर्न्वितः[1] शुक्लपदाभिधेयोऽयम्' इति स्मर्यते । अतः सिद्धमन्विताभिधानम् । "नास्य पदसमुदायेन सह सम्बन्धः" इति भाष्यनुभाषितम्, व्याचष्टे—न समुदायभूतानां प्रामाण्यम् । समुदायभूतैः प्रत्यस्तमितवाचकविभागैर्वाक्यार्थो न प्रतिपद्यते । किं तर्हि ? अन्वयव्यतिरेकसमधिगम्यस्वार्थव्यापृतानामेव । अन्वयव्यतिरेकाभ्यामेव समधिगम्यते यः पदानां स्वार्थः, तत्र वाचकतया व्यापृतानामेव प्रामाण्यम् । यत्तु श्रौतः पदार्थो न वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तितुमर्हतीति । भाष्यमनुभाष्य व्याचष्टे—कथं पुनर्व्युत्पत्तिशून्यैवावगतिः शक्यतेऽभिधातुमित्यभिप्रायः । यावदुच्चरितात् पदार्थमात्रेऽवगतिरुपजायते, सा कथं व्युत्पत्तिशून्यैव भवति ? भवति च । अतो[2] नान्विताभिधानमिति भावः । परिहारस्त्वत्र सत्यमेवमेतदिति । व्यवहारार्थत्वात् प्रयोगस्य विशेषात्म-

१. गुणान्वितः. ग. २. अतोऽनन्विता-ग.

बृहती

प्रयोगस्य विशेषात्मकत्वाच्च व्यवहारस्य अन्वितावगतिरेव तदर्थानाम् ; नान्वितार्थान्तरस्मरणम्, व्यवहारानङ्गत्वात् । तदिदमुक्तम्—"यश्चार्थादर्थः, न स चोदनार्थः" इति । न चेदानीं तदविवक्षितमिति प्रतीयमानस्यापि शब्दात् अविवक्षितत्वं शक्यते वक्तुम् ।

पञ्चिका

कत्वाच्च व्यवहारस्य अन्वितावगतिरेव तदर्थानाम् ; नान्वितार्थान्तरस्मरणम्, व्यवहारानङ्गत्वात्[1] । अस्यार्थः—व्यवहारार्थं शब्दः प्रयुज्यते ; व्यवहारश्चान्वितार्थविषयः ; तेन प्रयोगबलादन्वितार्थावगमकत्वमेव पदानाम् । यत्पुनरेतदनन्वितार्थज्ञानम्, तत्स्मरणम् ; न पुनः शब्दाभिधानजन्यम्, व्यवहारानङ्गत्वात्[2] ; न ह्यनन्वितेन कश्चिदपि व्यवहारः क्रियते । एतदुक्तं भवति—शब्दश्रवणानन्तरं यदिदमन्वितादर्थादर्थान्तरं पदार्थस्वरूपमात्रं बुद्धिस्थं भवति, सा स्मृतिरेव, यथा अर्थदर्शनात् पदस्मृतिः ; तत्र च न शब्दस्याभिधानव्यापारः[3], तेन विनापि तदुपपत्तेः; यथा अर्थो न शब्दस्याभिधाता, अथ च प्रतिसम्बन्धितया संस्कारोद्बोधकतया शब्दे स्मृतिं जनयति, तथा शब्दोऽप्यर्थे इति । तदत्र पूर्वपक्षसिद्धान्तभाष्ययोरयमर्थः—श्रुत्यनन्तरभावित्वादनन्वितार्थावगतेरनन्वित एव पदार्थः श्रौतः ; स न वाक्यानुरोधेन विशेषेऽन्वितेऽवस्थापयितुमर्हतीति पूर्वः पक्षः । राद्धान्तस्तु—सत्यमनन्वितः प्रथमं प्रतीयते, तथापि वृद्धव्यवहारव्युत्पत्तावेव केवलेन पदार्थेन व्यवहाराभावादन्वित एव पदार्थे पदानां व्युत्पत्तिः ; अनन्वितावगतिस्तु स्मरणमात्रमिति । तदिदमुक्तम्—"यश्चार्थादर्थो न स चोदनार्थः" इति । अभिधानव्यापारानपेक्षं यदनन्वितार्थस्य स्मरणम्, न स शब्दार्थ इति । नन्वनन्वितार्थः स्मर्यमाणो यद्यविवक्षितः, कथं तर्हि अन्वितो विवक्षित इत्यत्राह—न चेदानीं तत् अनन्वितमर्थान्तरस्मरणम् अविवक्षितं व्यवहारानुपयोगित्वादित्येतावता, प्रतीयमानस्यापि शब्दात् अन्वितस्य

---

१. Omitted. व्यवहारानङ्गत्वात्. ग.　　३. धानं व्या-ग.

२. नवगतत्वात्. ग.

भाष्यम्

सर्वत्र । एवं च गुणान्तरप्रतिषेधो न शब्दार्थः इत्येतदपि परिहृतं भवति । अपि च प्रातिपदिकादुच्चरन्ती द्विती-यादिविभक्तिः प्रातिपदिकार्थो विशेषक इत्याह ; सा च

बृहती

गम्यते च शब्दान्निमित्तात् अशब्दार्थश्चेति किमिदम् ? शब्दान्तराभिधेयतया स्मरणात्, स्मृतेश्चाप्रामाण्यात् । अतः शब्दनिमित्ततापि भ्रान्तैरेवोदिता प्रत्यक्षादीनामिव स्मरणीये । एवं च गुणान्तरप्रतिषेधो न शब्दार्थ इति कल्पितनिमित्तपरिहारात् परिहृतम् । "अपि च प्रातिपदिकादु-च्चरन्ती द्वितीयादिविभक्तिः" इति । अन्वितार्थमेव प्रातिपदिकं स्मरन्ति ;

पञ्चिका

व्यवहारोपयोगिनोऽप्यविवक्षितत्वं शक्यते वक्तुम् । अत्र चोदयति—गम्यते च शब्दान्निमित्तात् अशब्दार्थश्चेति किमिदम् ? यदेव शब्दादवगम्यते स शब्दार्थ इति स्मर्यमाणस्यापि शब्दार्थत्वमेव युक्तम् । परिहरति—शब्दान्तराभिधेयतया[1] स्मरणात्, स्मृतेश्चाप्रामाण्यात् ; अतः शब्दनिमित्ततापि भ्रान्तैरेवोदिता प्रत्यक्षादीनामिव स्मरणीये । संप्रयुक्ताद्वाक्यात्मकाच्छब्दाच्छब्दान्तरं पूर्ववाक्यं तदभिधेयतयैव स्मरणान्न शब्दादवगम्यते; न हि पूर्ववाक्यान्तर्गतपदाभिधेयतयैव वाक्यान्तरगतेन पदेनोच्यते । अपि च शब्दः प्रमाणभूतः कथमप्रमाणभूतां स्मृतिं जनयति ? अतः शब्दनिमित्ततापि भ्रान्तैरेवोदिता । परमार्थतस्तु शब्दोऽत्र निमित्तं न भवति ; किन्तु शब्दश्रवणादुद्बुद्धः संस्कार एवैनां स्मृतिं जनयतीति ; यथा प्रत्यक्षादीनां स्मरणीयेऽर्थे निमित्तता न भवति, तथा शब्द-स्यापि । "एवं[2] च गुणान्तरप्रतिषेधो न शब्दार्थः" इति भाष्यमनुभाष्य व्याचष्टे—कल्पितनिमित्तपरिहारात् परिहृतम् । 'कल्पनानिर्मितनिमित्तः पदार्थः' इति किल बौद्धा मन्वते ; तेषां मतेऽन्यापोहमात्रनिष्ठा श्रुतिः । ततश्च गुणान्तरप्रतिषेधः शुक्लशब्दस्यार्थ इति तदिदं निराकृतम् 'कल्पित-

---

१. तयैव ग.    २. इति एवं च सति गुणा- ग.

भाष्यम्

विशेषश्रुतिः सामान्यश्रुतिं बाधेत । यच्चतत् सङ्घाताः पुरुषकृता दृश्यन्ते इति, परिहृतं तदस्मरणादिभिः । अपि च एवंजातीयकेऽर्थे वाक्यानि संहर्तुं न किञ्चन पुरुषाणां बीजमस्ति ॥

बृहती

यतः करणवाचिनः प्रातिपदिकात् तृतीयां विदधति । विभक्तयश्च परस्परान्वयप्रतिपादिकाः प्रयोगान्तरस्मृतस्यार्थस्यान्वयितां श्रुत्यैव दर्शयन्ति । अतोऽभ्युच्चयोपपत्तिरियम् । प्रत्युक्तमनुमानम् 'कृतकत्वात्' इति वृद्ध-व्यवहारस्य निमित्ततोपपत्त्या । "अपि च" इत्यनेन पूर्वोक्तसम्बन्धकरणाशक्तिं दर्शयति ॥

पञ्चिका

निमित्तं न भवति' इति कल्पनाग्रन्थे । "अपि च प्रातिपदिकादुच्चरन्ती द्वितीयादिविभक्तिः" इति भाष्यमनुभाषितम् । व्याचष्टे—अन्वितार्थमेव प्रातिपदिकं स्मरन्ति । यतो हेतोः करणवाचिनः प्रातिपदिकात्तृतीयां विभक्तिं विदधति ; करणं च क्रियासम्बन्धि [1]भवति ; अतश्च क्रियासम्बन्धिस्वार्थप्रतिपादकं प्रातिपदिकमित्युक्तं भवति । विभक्तयश्च परस्परान्वयप्रतिपादिकाः प्रयोगान्तरस्मृत-स्यार्थस्य प्रयोगान्तरे यः प्रतिपन्नोऽर्थः स्मर्यते तस्य अन्वयितां श्रुत्यैवाभिदधति ; तेनान्वितमेव शब्देनाभिधीयत इति विभक्तय एवात्र प्रमाणम् । अतोऽभ्युच्चयोपपत्ति-रियम् । अनन्वितस्याविवक्षायाम् । प्रत्युक्तमनुमानं कृतकत्वादिति । पदसंघातस्य कृतकत्वाद्वेदोऽपि कृतकः—इति यदनुमानम्, तत्प्रत्युक्तं वृद्धव्यवहारस्य निमित्ततोपपत्त्या । "अपि च" इत्यनेन ग्रन्थेन पूर्वोक्तां सम्बन्धकरणाशक्तिं दर्शयति—अतीन्द्रिये कार्ये कार्यान्वयिषु चार्थेषु सम्बन्धकरणशक्तिर्नास्तीति ॥

---

१. Omitted. भवति...सम्बन्धि- ग.

## लोके सन्नियमात्प्रयोगसन्निकर्षः स्यात् ॥ २६ ॥

भाष्यम्

लौकिकेषु पुनरर्थेषु प्रत्यक्षेणार्थमुपलभ्य 'सन्नियम,' सन्निबन्धनं शक्यं तत्र संहर्तुमेवञ्जातीयकानि वाक्यानि "नीलोत्पलवनेष्वद्य" इति। तस्मात् 'अग्निहोत्रम्' 'जुहुयात्' 'स्वर्गकामः' इत्येतेभ्य एव पदेभ्यो येऽर्था अवगताः, तेभ्य एवैतदवगम्यते अग्निहोत्रात् स्वर्गो भवतीति । तस्मात् पदेभ्य एव पदार्थप्रत्ययः, पदार्थेभ्यो वाक्यार्थप्रत्यय इति ॥

बृहती

लोके पुनः प्रमाणान्तरप्रमितविषयतया युक्तैव, तत्पूर्वकत्वात् शब्दव्यवहारस्य । "तस्मात् पदेभ्य एव पदार्थप्रत्ययः, पदार्थेभ्यो वाक्यार्थप्रत्ययः" इति व्याख्यातम् । तस्मादुपपन्नं वृद्धव्यवहार-

पञ्चिका

ननु यद्यतीन्द्रियकार्याभिधायिनो लिङादयः, तदन्वितस्वार्थाभिधायीनि च पदानि, कथं तर्हि लोके तद्व्यतिरेकेण शब्दप्रयोग इत्यत्राह—**लोके पुनः प्रमाणान्तरप्रमितविषयतया युक्तैव, तत्पूर्वकत्वाच्छब्दव्यवहारस्य ।** यदेव हि प्रमाणान्तरेण प्रमीयते, तदेव लोको विवक्षति; तेनातीन्द्रियकार्यं परित्यज्य क्रियाकार्यत्व एव शब्दं प्रयुङ्क्ते लक्षणया ; अपूर्वकार्यता हि क्रियाकार्यत्वाव्यभिचारिणी ; तेन तत्परतया लोको लिङादिकं प्रयुङ्क्ते ; पदान्तराण्यपि कार्यान्विततयैव प्रयुज्यन्त इति न लौकिकप्रयोगविरोधः । **"तस्मात्पदेभ्य एव पदार्थप्रत्ययः, पदार्थेभ्यो वाक्यार्थप्रत्ययः"** इति भाष्यम् ; तदनुपपन्नम्, "पदार्था एव वाक्यार्थः" इति दर्शितत्वादित्याशङ्क्याह—**व्याख्यातमिति** । व्यतिषङ्गाभिप्रायमिति पूर्वमेव व्याख्यातम् । उपसंहरति—**तस्मादुपपन्नं**

## वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥ २७ ॥

भाष्यम्

उक्तम् "चोदनालक्षणोऽर्थो धर्मः" इति; यतो न पुरुषकृतः शब्दस्यार्थेन सम्बन्धः । तत्र पदवाक्याश्रय आक्षेपः परिहृतः । इदानीमन्यथाक्षेप्स्यामः । पौरुषेय्य-

बृहती

निमित्तमौत्पत्तिकत्वं सम्बन्धस्य, वेदवाक्यार्थप्रतिपत्तिहेतुत्वं च । विलम्बते—इत्यादयस्तु शब्दप्रत्यभिज्ञयैव ; अभिधाने हि स दोषः । समासादीनां तु तत्र तत्र परिहारोऽभिधीयते ॥

"वेदांश्चैके सन्निकर्षं पुरुषाख्याः" । "पदवाक्याश्रयः" इति । विभागाभिधानादविभक्तकार्यत्वाच्च विवेकः । यदुक्तम् "अस्मरणात्" इति,

पञ्चिका

वृद्धव्यवहारनिमित्तमौत्पत्तिकत्वं सम्बन्धस्य, वेदवाक्यार्थप्रतिपत्तिहेतुत्वं च । उपपन्नं तस्य । विलम्बते इत्यादयस्तु शब्दप्रत्यभिज्ञामात्रतया प्रत्युक्ताः ; अभिधाने हि स दोषः । 'विलम्बते' 'प्रलम्बते' इत्युपसर्गता वि-प्र-शब्दयोः, विप्र इत्यत्र नामता स्वरूपाभेदे नोपपद्यत इति यदुक्तं वैयाकरणैः, तत्प्रत्युक्तम् ; स्वरूपाभेदेऽप्यभिधानरूपता भिन्नैव ; तेन क्वचिदन्यार्थता न दोषः । समासादीनां तु तत्र तत्र परिहारोऽभिधीयते । यदिदमुक्तम्—समासे पदद्वयसम्बन्धो न भवति राजपुरुषस्य हस्तिनः इत्यादि, तस्यापि परिहारस्तत्र तत्राभिधीयते ; तेन सोऽपि न दोषः ॥

"वेदांश्चैके सन्निकर्षं पुरुषाख्याः" अत्र भाष्यम् "पदवाक्याश्रय आक्षेपः परिहृतः" इति । तत्रेयमाशङ्का—ननु किमिदं पदं वाक्यमिति ? यावता न पदव्यतिरिक्तं वाक्यं नामास्ति । अतः कथं पृथगुपन्यास इत्याशङ्क्याह--विभागाभिधानादविभक्तकार्यत्वाच्च विवेकः । विभागेन पदानामभिधायकत्वात् पदव्यव-

भाष्यम्

श्चोदना इति वदामः ; सन्निकृष्टकालाः कृतका वेदा इदानीन्तनाः ; ते च चोदनानां समूहाः; तत्र पौरुषेयाश्चेद्वेदाः, असंशयं पौरुषेय्यः चोदनाः । कथं पुनः 'कृतका वेदाः' इति ? केचिन्मन्यन्ते—यतः पुरुषाख्याः; पुरुषेण हि समाख्यायन्ते वेदाः —काठकम्, कालापकम्, पैप्पलादकम्, मौद्गलमिति ; न हि सम्बन्धादृते समाख्यानम् ; न च पुरुषस्य शब्देनास्ति सम्बन्धोऽन्यदतः—कर्ता पुरुषः, कार्यः शब्द इति । ननु प्रवचनेनापि समाख्या स्यात् । नेति ब्रूमः ; असाधारणं हि विशेषणं भवति ; एक एव हि कर्ता बहवोऽपि प्रब्रूयुः ; अतोऽस्मर्य-

बृहती

तत् विरुद्धं समाख्यया । किं कार्यनिबन्धनैवेयं समाख्या ? बाढम् ; असाधारणेन हि व्यपदेशो भवति, साधारणं च प्रवक्तृत्वम् । कथं तर्हि—"कृते

पञ्चिका

हारः; अविभक्तं च सर्वेषां पदानामेकं कार्यं विशिष्टैकार्थप्रतिपत्तिरिति तन्निबन्धनस्तेष्वेव पदेषु वाक्यव्यवहारः । तेन कार्यवशेन पदव्यवहारो वर्णानाम्, कार्यवशेन च वाक्यभावः पदानामिति युक्तो वाक्यपदयोर्विवेकः । यदुक्तम् 'अस्मरणात्कर्तुः अकृतको वेदः' इति, तद्विरुद्धं समाख्यया । काठकमित्यादिका या समाख्या, सा कृतकतां वेदस्य दर्शयति । अत्र पृच्छति—किं कार्यनिबन्धनैव समाख्या ? अयमाशयः—यदि कार्यनिबन्धनैव समाख्या स्यात्, तदा समाख्यया कृतकत्वं भवेत्; यावता प्रवचनादपि समाख्या घटत एवेति । उत्तरम्—बाढम् । अतिशयेन करणनिबन्धनैव समाख्या । कुतः ? असाधारणेन हि व्यपदेशो भवति । करणं ह्यसाधारणम्; न ह्येकेन कृतस्यापरेण करणं संभवति । साधारणं च प्रवक्तृत्वम् ।

# अनित्यदर्शनाच्च ॥ २८ ॥

भाष्यम्

माणोऽपि चोदनायाः कर्ता स्यात् । तस्मान्न प्रमाणम् "चोदनालक्षणोऽर्थो धर्मः" इति ॥

जननमरणवन्तश्च वेदार्थाः श्रूयन्ते—"बबरः प्रावाहणिरकामयत", "कुसुरुबिन्द औद्दालकिरकामयत" इत्येवमादयः । उद्दालकस्यापत्यं गम्यते औद्दालकिः ; यद्येवम्, प्रागौद्दालकिजन्मनो नायं ग्रन्थो भूतपूर्वः; एवमप्यनित्यता ॥

बृहती

ग्रन्थे", "तेन प्रोक्तम्" इति च सूत्रद्वयं भगवतः ? प्रोक्तवचनमयुक्तम्, "समर्थानाम्" इति विरोधात् । तस्मात् कार्यतैव वेदस्यावगम्यते ॥

केयं कार्यता नित्यत्वाच्छब्दानामौत्पत्तिकत्वाच्च सम्बन्धस्य ? प्रमाणान्तरापेक्षिता । तथा च तदनुरूपं वेदवचो दृश्यते—"बबरः प्रावाहणिः" इत्येवमादि । अत्रोच्यते—स्यादेतदेवम्, यद्यन्यथा

पञ्चिका

बहवोऽपि प्रवक्तारो भवन्ति । यदि प्रवक्तृत्वेन व्यपदेशो न भवति, कथं तर्हि "कृते ग्रन्थे", "तेन प्रोक्तम्" इति च सूत्रद्वयं भगवतः ? उत्तरम्—प्रोक्तवचनमयुक्तम्, "समर्थानाम्" इति विरोधात् । "समर्थानां प्रथमाद्वा" इति सामर्थ्ये सति तद्धितो भवति । न च 'कठेन प्रोक्तम्' इत्यस्य विग्रहवाक्यस्य योऽर्थः, स काठकशब्दादवगम्यते; तेन सामर्थ्याभावात्तस्मिन्नर्थे तद्धितो नोत्पद्यत एव ; तेनेदं वचनमयुक्तम् । तस्मात् समाख्यादर्शनात् कार्यतैव वेदस्यावगम्यत इति ॥

अत्र चोदयति—केयं कार्यता नित्यत्वाच्छब्दानाम्, औत्पत्तिकत्वाच्च सम्बन्धस्य ? शब्दास्तावन्न क्रियन्ते, नित्यत्वात् । न च तेषामर्थसम्बन्धोऽपि क्रियते, नित्यत्वादेव । तस्मात् केयं कार्यता ? परिहरति—प्रमाणान्तरापेक्षिता । अस्यार्थः—'प्रमाणान्तरेण अयमर्थोऽनेन प्रतिपन्नः' इति येयं प्रमाणान्तरापेक्षिता, सा कृतकता । तथा च कृतकत्वानुरूपं वेदवचो दृश्यते—

## उक्तं तु शब्दपूर्वत्वम् ॥ २९ ॥
## आख्या प्रवचनात् ॥ ३० ॥

भाष्यम्

उक्तमस्मरणादिभिः शब्दपूर्वत्वमध्येतॄणाम् । केवलमाक्षेपपरिहारो वक्तव्यः, सोऽभिधीयते ॥

यदुक्तम्—कर्तृलक्षणा समाख्या काठकाद्येति, तदुच्यते—नेयमर्थापत्तिः, अकर्तृभिरपि ह्येनामाचक्षीरन्; प्रकर्षेण वचनं कठादिभिरनुष्ठितं स्यात्, तथापि हि समाख्यातारो भवन्ति । स्मर्यते च— "वैशम्पायनः सर्वशाखाध्यायी, कठः पुनरिमां केवलां शाखामध्यापयांबभूव" इति । स बहुशाखाध्यायिनां सन्निधावेकशाखाध्यायी अन्यां शाखामनधीयानः, तस्यां प्रकृष्टत्वादसाधारणमुपपद्यते विशेषणम् ॥

बृहती

असाधारणव्यपदेशो नोपपद्यते । प्रकर्षादपि ह्यसाधारणव्यपदेशो दृष्टो लोके ; यथा बादरायणेन वेदप्रामाण्यं समाख्यायते । अत एव सूत्रद्वयप्रणयनं भगवतः पाणिनेः । "समर्थानाम्"—इति चाविरोधः ॥

पञ्चिका

"बबरः प्रावाहणिः" इत्येवमादि । प्रवाहणस्यापत्यं कीर्त्यते वेदे; तेन प्रावाहणिजन्मनः प्रागयं ग्रन्थो नास्तीति ज्ञायते । अत्रोच्यते—स्यादेतदेवम् , यद्यन्यथा करणमन्तरेण असाधारणव्यपदेशो नोपपद्यते ; प्रकर्षादपि ह्यसाधारणव्यपदेशो लोके दृष्टः । वचन एव यः प्रकर्षः सोऽसाधारण इति तन्निबन्धनोऽपि व्यपदेशो घटत एव । यथा बादरायणेन वेदस्य प्रामाण्यं समाख्यायते । यत एव प्रकर्षादपि व्यपदेशो घटते, अत एव सूत्रद्वयप्रणयनं भगवतः पाणिनेः । "कृते ग्रन्थे," "तेन प्रोक्तम्" इति च । "समर्थानाम्" इत्यस्य चाविरोधः, वचनप्रकर्षेऽपि सामर्थ्यसंभवात् ।

## परं तु श्रुतिसामान्यमात्रम् ॥ ३१ ॥ कृते वा विनियोगः स्यात्कर्मणः सम्बन्धात् ॥ ३२ ॥

भाष्यम्

यच्च प्रावाहणिरिति, तन्न ; प्रवाहणस्य पुरुषस्यासिद्धत्वात् न प्रवाहणस्यापत्यं प्रावाहणिः । प्रशब्दः प्रकर्षे सिद्धः, वहतिश्च प्रापणे, न त्वस्य समुदायः क्वचित्सिद्धः; इकारस्तु यथैवापत्ये सिद्धः, तथा क्रियाया अपि कर्तरि ; तस्मात् यः प्रवाहयति, स प्रवाहणिः । 'बबरः' इति शब्दानुकृतिः । तेन यो नित्योऽर्थः, तमेवैतौ शब्दौ वदिष्यतः वायुमाकाशं वा । अत उक्तम्---"परं तु श्रुतिसामान्यमात्रम्" इति ॥

अथ कथमवगम्यते—नायमुन्मत्तबालवाक्यसदृश इति ? तथा हि पश्यामः---"वनस्पतयः सत्रमासत,"

बृहती

यदुक्तम् "बबरः प्रावाहणिः" इति, स्थिते प्रामाण्ये गुणवादं वक्ष्यति । वक्ष्यमाणमेव च भाष्यकारेणात्र व्याख्यातम् । किमर्थम्, 'वक्ष्यामः' इति नोक्तं च ? असम्बद्धत्वोपन्यासार्थम्—न शक्यते

पञ्चिका

यदुक्तम् "बबरः प्रावाहणिः" इति तत्रोच्यते—स्थिते प्रामाण्ये गुणवादं वक्ष्यति । तेन न्यायेन वर्णनीयमेतदित्यर्थः । नन्वेतत् वक्ष्यमाणं किमर्थमुक्तं तत्राह—वक्ष्यमाणमेव च भाष्यकारेणात्र व्याख्यातम् । चोदयति—किमर्थम्, 'वक्ष्यामः' इति नोक्तं च ? परिहरति—असम्बद्धतोपन्यासार्थम् । अथ कथमयमुन्मत्तोक्तिसदृशो न भवतीति इमामसम्बद्धता-

भाष्यम्

"सर्पाः सत्रमासत" इति, यथा "जरद्गवो गायति मद्रकाणि" कथं नाम जरद्गवो गायेत् ? कथं वा वनस्पतयः सर्पा वा सत्रमासीरन् ? इति । उच्यते----विनियुक्तं हि दृश्यते, परस्परेण सम्बद्धार्थम् । कथम् ? 'ज्योतिष्टोमः' इत्यभिधाय 'कर्तव्यः' इत्युच्यते । केन ? इत्याकाङ्क्षिते 'सोमेन' इति । किमर्थम् ? इति, 'स्वर्गाय' इति । कथम् ? इति, 'इत्थम्' इति । एवमत्रगच्छन्तः पदार्थैरेभिः संस्कृतं पिण्डितं वाक्यार्थं कथम् 'उन्मत्तबालवाक्यसदृशम्' इति वक्ष्यामः ?

ननु अनुपपन्नमिदं दृश्यते—"वनस्पतयः सत्रमासत" इत्येवमादि । नानुपपन्नम् ; नानेनानुपपन्नेन "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्येवमादयोऽनुपपन्नाः स्युः । अपि च "वनस्पतयः सत्रमासत", इत्येवमादयोऽपि नानुपपन्नाः, स्तुतयो ह्येताः सत्रस्य—वनस्पतयो नाम अचेतना इदं सत्रमासीनवन्तः, किं पुनर्विद्वांसो ब्राह्मणाः इति ; तद्यथा लोके—सन्ध्यायां मृगा अपि न चरन्ति, किं पुनर्विद्वांसो

बृहती

ज्योतिष्टोमादिषु विध्युद्देशेषु कल्पयितुं तत् ; एकवाक्यत्वाच्च "वनस्पतयः"

पञ्चिका

मुपन्यसितुं गुणवादेनात्र व्याख्यातम् । तामसम्बद्धतां परिहरति—न शक्यते ज्योतिष्टोमादिषु विध्युद्देशेषु कल्पयितुं तत् ; एकवाक्यतया च "वनस्पतयः सत्रमासत" इत्येवमादीनाम् । असम्बद्धता नास्तीति ।

भाष्यम्

ब्राह्मणाः इति । अपि च अविगीतः सुहृदुपदेशः सुप्रतिष्ठितः कथमिवाशङ्क्येत 'उन्मत्तबालवाक्यसदृशः' इति ? तस्मात् "चोदनालक्षणोऽर्थो धर्मः" इति सिद्धम् ॥

इति श्रीमच्छबरस्वामिनः कृतौ मीमांसाभाष्ये प्रथमस्याध्यायस्य
प्रथमः पादः

॥ तर्कपादोऽयम् ॥

बृहती

इत्येवमादीनाम् ? "अपि च अविगीतः सुहृदुपदेशः"—इति सार्वजनीनमविपर्ययं दर्शयति । तस्माच्चोदनैव प्रमाणं धर्मस्येति स्थितः प्रतिज्ञार्थः ॥

॥ इति बृहत्यां प्रथमाध्यायस्य प्रथमः पादः समाप्तः ॥

पञ्चिका

"अपि च अविगीतः सुहृदुपदेशः" इति भाष्यं व्याचष्टे—सार्वजनीनमविपर्ययं दर्शयति । न वेदार्थे कस्यचिद्विपर्ययोऽस्तीत्यर्थः । तस्माच्चोदनैव प्रमाणं धर्मस्येति सिद्धः प्रतिज्ञातार्थः ॥

इति शा[1]लिकमिश्रकृतायामृजुविमलायां पञ्चिकायां
प्रथमस्याध्यायस्य
प्रथमः पादः
समाप्तः



१. Added. श्री. क.

# उदाहरणाकरसूची

| उदाहरणस्थानानि | उदाहरणानि | आकरः |
|---|---|---|
| २४४--११<br>२४५-२ | अगृह्यो न हि गृह्यते | बृहदारण्यक. ३. ९. २६. |
| ११६-१३ | अग्निरिन्द्रिय. | बृहट्टीकेव भाति. |
| १५७-१६ | अग्निहोत्रं जुहोति | तै. सं. ५. ९. १. |
| ३५४-४ | अग्निहोत्रं जुहुयात् | मैत्री. उ. ६. ३६. |
| २८५-१४ | अग्निहोत्रं त्रयो वेदाः | बृहस्पतेः धृतं सर्वदर्शनसङ्ग्रहे. |
| ३००-१९ | अग्न्यादयो घटादीनाम् | श्लो. वा. शून्य. ६५. |
| २४६-२ | अत्रायं पुरुषः | बृहदारण्यक. ४. ३. ९. |
| २५५-५ | अत्रैव मा भगवान् | बृहदारण्यक. ४. ५. १३. |
| ३६९-६ | अथ यदल्पं तन्मर्त्यम् | छान्दोग्य. ७. २४. १. |
| ९३-८ | अथ शब्दानुशासनम् | व्या. भा. आरम्भः. |
| १४४-१६ | अदृष्टहेतुरप्यन्यः | धर्मकीर्तेः. प्रक-प-अमृ-धृतम्<br>१३७ Page. |
| १९१-२१ | अनुमानान्तरैः | बृहट्टीकेव भाति. |
| ५२-९ | अभेदिन इवाभान्ति | धर्मकीर्तेः. |
| ११४-१५ | अर्थान्तरं कल्प्यते यत् | |
| ११५-६ | अर्थापत्त्यनुमान | प्रकरणपञ्चिकामृतकलायाम् २१.<br>१२८ Page, |
| १२२-७ | अयमेवेति यो ह्येषः | श्लो. वा. अभाव. १५. |
| ९६-१६ | अव्यभिचारस्त्वसकृत् | बृहती. १११. पुट. २. पङ्क्ति. |
| २३०-२<br>२५५-१९ | अविनाशी वा अरे | बृहदारण्यक. ४. ५. १४. |
| २४२-५, ८<br>३३४-४, १३ | अविवेकः परमापदां पदम् | किरातार्जुनीयम्. २. ३०. |
| २३०-१ | अशीर्यो न हि शीर्यते | बृहदारण्यक. ३. ९. २६. |
| २७६-७ | अहङ्कारममकारौ | |
| ११३-१६ | आक्रोशे देवानां प्रियः | व्या. भाष्यम्. १. ३. २१. |
| २०१-१४<br>३८७-१ | आचार्यचोदितः करोमि | शाबरभा. २०. पुट. ३. पङ्क्ति. |

## उदाहरणाकरसूची

| उदाहरणस्थानानि | उदाहरणानि | आकरः |
|---|---|---|
| २४४--११<br>२४५-२ | अगृह्यो न हि गृह्यते | बृहदारण्यक. ३. ९. २६. |
| ११६-१३ | अग्निरिन्द्रिय. | बृहट्टीकेव भाति. |
| १५७-१६ | अग्निहोत्रं जुहोति | तै. सं. ५. ९. १. |
| ३५४-४ | अग्निहोत्रं जुहुयात् | मैत्री. उ. ६. ३६. |
| २८५-१४ | अग्निहोत्रं त्रयो वेदाः | बृहस्पतेः धृतं सर्वदर्शनसङ्ग्रहे. |
| ३००-१९ | अग्न्यादयो घटादीनाम् | श्लो. वा. शून्य. ६५. |
| २४६-२ | अत्रायं पुरुषः | बृहदारण्यक. ४. ३. ९. |
| २५५-५ | अत्रैव मा भगवान् | बृहदारण्यक. ४. ५. १३. |
| ३६९-६ | अथ यदल्पं तन्मर्त्यम् | छान्दोग्य. ७. २४. १. |
| ९३-८ | अथ शब्दानुशासनम् | व्या. भा. आरम्भः. |
| १४४-१६ | अदृष्टहेतुरप्यन्यः | धर्मकीर्तेः. प्रक-प-अमृ-धृतम्<br>१३७ Page. |
| १९१-२१ | अनुमानान्तरैः | बृहट्टीकेव भाति. |
| ५२-९ | अभेदिन इवाभान्ति | धर्मकीर्तेः. |
| ११४-१५ | अर्थान्तरं कल्प्यते यत् | |
| ११५-६ | अर्थापत्त्यनुमान | प्रकरणपञ्चिकामृतकलायाम् २१.<br>१२८ Page, |
| १२२-७ | अयमेवेति यो ह्येषः | श्लो. वा. अभाव. १५. |
| ९६-१६ | अव्यभिचारस्त्वसकृत् | बृहती. १११. पुट. २. पङ्क्ति. |
| २३०-२<br>२५५-१९ | अविनाशी वा अरे | बृहदारण्यक. ४. ५. १४. |
| २४२-५, ८<br>३३४-४, १३ | अविवेकः परमापदां पदम् | किरातार्जुनीयम्. २. ३०. |
| २३०-१ | अशीर्यो न हि शीर्यते | बृहदारण्यक. ३. ९. २६. |
| २७६-७ | अहङ्कारममकारौ | |
| ११३-१६ | आक्रोशे देवानां प्रियः | व्या. भाष्यम्. १. ३. २१. |
| २०१-१४<br>३८७-१ | आचार्यचोदितः करोमि | शाबरभा. २०. पुट. ३. पङ्क्ति. |

| उदाहरणस्थानानि | उदाहरणानि | आकरः |
|---|---|---|
| १४४-१५ | यज्जातीयो यतः सिद्धः | धर्मकीर्तेः प्रकरणपञ्चिकामृतकलाधृतम् १३७. Page. |
| ३४-१ | यज्ञेन यज्ञमयजन्त देवाः | ऋ. १० म. ९० सू. १६ ऋक्. |
| १००-५ | यदात्वाद्यपरिस्पन्दात् | श्लो. वा. स्फो. ७९. |
| १२२-११ | यन्नास्ति भूतलादौ | |
| ३९७-३ | यश्चार्थादर्थो न सः | |
| १०८-१७ | यावच्चाव्यतिरेकित्वम् | बृहट्टीकेव भाति. |
| ३७०-१ | यावद्वाचोगतम् | |
| २८५-५,२२ | यूपहस्तिनो दानम् | |
| १२२-१२ | योऽसौ प्रमाण- | |
| ३८१-६ | रामकौशेयसंवीताः | |
| २२२-१३ | वत्सविवृद्धिनिमित्तम् | सांख्यका. ५७. |
| ४०५-१२ | वनस्पतयः सत्रमासत | |
| ११६-१९ | वाक्यमेव तु | बृहट्टीकेव भाति. |
| ३४५-२ | वाचा विरूपनित्यया | Page. ९८. |
| ३४५-४ | वायुरापद्यते शब्दताम् | शुक्लयजुःप्रातिशाख्यम्. १-७ (compare.) |
| २११-२५<br>२५५-३ | विज्ञानघनः | बृहदारण्यक. २. ४. १२. |
| ११४-१४ | विना कल्पनया | प्रकरणपञ्चिका. अर्थापत्तौ. १. |
| १०८-१८ | विपक्षस्य कुतः | बृहट्टीकेव भाति. |
| १६०.२, १८ | विवर्ततेऽर्थभावेन. | वाक्यपदीयम्. १. १. |
| ३२५-२३ | विषयप्रत्यभिज्ञा चैतन्निबन्धना | |
| १७८-५, १४<br>१८१-१३ | वृद्धिरादैच | पाणिनि. १. १. १. |
| ९-१७ | वेदमधीत्य स्नायात् | |
| ७९-१५ | वेद्यं हि स्यात्समानार्थम् | धर्मकीर्तेः. |
| ४०४-८ | वैशंपायनः सर्वशाखाध्यायी | |
| ११६-१६ | शब्दव्युत्पत्तिजा | बृहट्टीकेव भाति. |

## प्रामादिकपरिशुद्धपाठपट्टिका

| पुटपङ्क्तिसंख्या | प्रामादिकपठः | परिशुद्धपाठः |
|---|---|---|
| ८—११ | द्वयमापतन्ति | द्वयमापतति |
| ३२— ७ | किमुपत्तौ | किमुपपत्तौ |
| ३८—१४ | प्रवृत्तिरितयस्मिन्नर्थे | प्रवृत्तिरिति यस्मिन्नर्थे |
| ४५— २ | अवधायमाणे | अवधार्यमाणे |
| ४६—११ | शक्यत | शक्यते |
| ५०— ४ | प्रत्यय; | प्रत्ययः; |
| ५३— ७ | धारणम् । कथं | धारणम् । कथं |
| ५४— ५ | अभिप्राय | अभिप्रायः |
| ६८— ६ | प्रवोधान्न | प्रबोधान्न |
| ८५— ३ | -दवगच्छति । | -दवगच्छति । |
| ९४— ७ | ममाय | ममायं |
| ९५—११ | कायकारिण | कार्यकारण |
| १००— १ | सम्बन्ध | सम्बन्धं |
| १२२— ७ | यो ह्यषे | यो ह्येष |
| १२५—११ | नियोगाभिधायक | नियोगानभिधायक |
| १३१—१५ | जतीयकं । च | जातीयकं च |
| १३६— ३ | स्यादेतदेवम् | "स्यादेतदेवम् |
| १४२— ४ | प्रक्राशयतीति | प्रकाशयतीति |
| १६६—१० | गारित्यस्य | गौरित्यस्य |
| १६८— ५ | न सन्ति इति । | न सन्ति इति ? |
| १७७— १ | वेदा प्रणीता' इति । | वेदाः प्रणीताः' इति । |
| २२५—१८ | -मनुमनं | -मनुमानं |
| २४०— ४ | तदीदृश च | तदीदृशं च |
| २४९— ६ | च्चोपद्दिश्यते | चोपदिश्यते |

२७५— ३ उपरतयोरित्यादि(२८०)अप्राप्ताश्चेदित्यन्तं भाष्यमत्र प्रमादपतितम् । तत्पुनः(२९२)पुटे यथास्थानं निवेशितम् ।

| पुटपङ्क्तिसंख्या | प्रामादिकपाठः | परिशुद्धपाठः |
|---|---|---|
| २९२— १ | इति चेन्नैतदेवम्; न | इति चेन्न; न |
| २९३— १ | इति । यदि | इति । नैतदेवम्; यदि |
| ३२९—१२ | व्यवहारश्चान्वय, | व्यवहारश्चान्वय- |
| ३३६—१८ | बुद्धिकर्माणोरपि | बुद्धिकर्मणोरपि |
| ३४८–५, १० | वावचनाः | चावचनाः |
| ३५२—१५ | -मवगवयति | -मवगमयति |
| ३८०— ९ | तन्निबन्धनेमक | तन्निबन्धनमेक |
| ३८१— ५ | चरन्तश्वारु | चरन्तश्चारु |
| ३८१— ७ | परुषकृता | पुरुषकृता |
| ३८३— १ | पादार्थान् | पदार्थान् |
| ३८५—२५ | मुक्तमास्माभि | मुक्तमस्माभि |
| ३९१— २ | अर्थापचिरस्ति | अर्थापत्तिरस्ति |
| ३९४—१६ | मपामृश्याप्यग्नि | मपरामृश्याप्यग्नि |
| ३९६— ४ | वाक्यार्थेऽपि | वाक्यार्थोऽपि |
| ३९९— ९ | यच्चतत् | यच्चैतत् |
| ४०५— २ | कर्मणः सम्बन्धात् | कर्मणः समत्वात् |



